निधि प्रतिनिधि संनिधि.
नीत उन्नीत अभ्युन्नीत पुनरभ्युन्नीत.
पात निपात संनिपात.
पूप अपूप.
पूर्व अपूर्व अनुपूर्व.
पत्ति उत्पत्ति व्युत्पत्ति उपपत्ति प्रतिपत्ति विप्रतिपत्ति संप्रतिपत्ति.
प्रतिषिद्ध विप्रतिषिद्ध निषिद्ध निषेध प्रतिषेध विप्रतिषेध.
प्रत्यय संप्रत्यय.
प्रथन अभिप्रथन.
बद्ध संबद्ध.
बन्ध अनुबन्ध उपबन्ध निबन्ध प्रबन्ध संबन्ध अभिसंबन्ध बन्धन निबन्धन.
भक्त विभक्त प्रविभक्त.
भव प्रभव विभव.
भाग विभाग.
भाव अभाव.
मनेत् आमनेत् प्रत्यामनेत्.
आमन आम्नात समाम्नात आम्नान समाम्नान आम्नाय समाम्नाय.
मन्त्र मन्त्रण अनुमन्त्रण अभिमन्त्रण प्रतिमन्त्रण.
यम नियम संनियम.
युक्त प्रयुक्त संयुक्त.
योग अनुयोग अभियोग नियोग विनियोग प्रयोग विप्रयोग संप्रयोग संयोग अभिसंयोग.
रेक अरेक.
रोह प्ररोह अनुप्ररोह.
लक्षण उपलक्षण.
लुप्त लोप लुप्येरन् परिलुप्येरन्.
वचन अनुवचन निर्वचन प्रवचन प्रावचन.
वपन निर्वपण.
वर्ग अपवर्ग व्यपवर्ग व्यपवर्गित्व.
वर्जन वर्जयेत् अपवर्जयेत्.
वाद अनुवाद अर्थवाद उपवाद.
वाप निवाप संनिवाप संवाप.
वृत् वृत्त प्रवृत्त अभिप्रवृत्त.
वृत्ति अनुवृत्ति आवृत्ति पर्यावृत्ति निवृत्ति परिवृत्ति प्रवृत्ति.
वृद्धि विवृद्धि.
शङ्का विशङ्का.
शूद्र अपशूद्र.
संख्या अभिसंख्या परिसंख्या अभिसंख्यान परिसंख्यान.
समवाय अभिसमवाय.
सिद्ध निषिद्ध प्रतिषिद्ध विप्रतिषिद्ध निषेध प्रतिषेध विप्रतिषेध.
स्तरण उपस्तरण.
स्तव संस्तव अभिसंस्तव.
स्तुत संस्तुत स्तुति संस्तुति.
हत अहत.
हनन उद्धनन.
हरण आहरण उपावहरण उद्धृत्य व्युद्धृत्य हृत्वा.
हान संहान.
हार्य आहार्य अन्वाहार्य.
होम प्रतिहोम.

## शीर्षकचर्चा ।

मुद्रितेषु मीमांसाशास्त्रीयग्रन्थेषु सर्वस्यापि तस्यतस्याधिकरणस्य किंचिन्नामधेयं आदौ वा अन्ते वा, उभयतोऽपि वा अनुक्रमणिकायामेव वा, अनुक्रमणिकायां चादौ चेति वा उपन्यस्यमानं दृश्यते। अधिकरणनामधेयानि तावद् द्विविधानि शास्त्रीयं च लौकिकं चेति । अश्वदाभ्य, अक्त, अक्षाभ्यञ्जन, अङ्गगुणविरोध, अरुणा, आकृति, तिर्यक्, पशुसोम, संयोगपृथक्त्व इत्यादीनि शास्त्रीयाणि । एतानि खलु भाष्यवार्तिकन्यायसुधाशास्त्रदीपिकाभाट्टदीपिकादिमीमांसाग्रन्थेषु धर्मशास्त्रनिबन्धेषु वेदान्तादिशास्त्रेषु च तत्रतत्र भूयसा समुपलभ्यन्ते । यथा 'नापि अनारभ्याधीतन्यायावतारोऽत्रास्ति' 'अनुषङ्गन्यायेन लघुत्व-

मारोग्यं '' अनोवासोन्यार्थेन सिद्धस्यैव पिष्टस्य ' इत्यादि । अधिकरणानां लौकिकं नामधेयं नाम यत् तत्तद्ग्रन्थमुद्रणकाले संपादकैः पण्डितैः प्रदत्तम् । तच्च यथा आनन्दाश्रमीयभाष्यपुस्तके तृतीयाध्याय-षष्ठपादस्यादौ भाष्यकारीयाधिकरणसूचीपत्रे ' अग्निविहरणादिमन्त्रविनियोगाधिकरणम् ' 'अनारभ्याधीत-साप्तदश्यस्य प्रकृतावनिवेशाधिकरणम् ' ' अनुज्ञापूर्वकं भक्षाधिकरणम् ' इत्यादि । इदं च लौकिकं नाम शास्त्रीयाभिधानवत् मीमांसादिनिबन्धेषु न क्वाप्यायाति । केवलं तु अनुक्रमणिकायां वा तत्तदधिकरणादौ वा समुपलभ्यते । जैमिनीयाधिकरणन्यायमालाविस्तरलिखितेषु शास्त्रदीपिकालिखितेषु च द्वित्रेषु पुस्तकेषु गवेषितमपि नैतादृशं नामधेयमुपलब्धमस्माभिः ।

( २ ) अत्र मूलत एव प्रश्नः कश्चित् पुरत उपतिष्ठति यत् किमिमानि नामान्येवाधिकरणानां आहोस्वित् केवलमधिकरणार्थबोधकानि संक्षिप्तवाक्यान्येवेति । तत्र यद्यपि अधिकरणार्थबोध-कत्वेऽमीषां न विवादः कश्चित् । परंतु तेषामधिकरणबोधकानामेव सतां तत्तैः संपादकैरधिकरणनामत्वे-नैव संयोजितानीमानि इति वयं प्रतीमः । कथमन्यथा ' प्रथमे धर्मशास्त्रारम्भप्रतिज्ञाधिकरणे सूत्रम् ' 'अश्वदाभ्ययोर्ज्योतिष्टोमार्थताधिकरणम् ' इत्यादि संगच्छेत ? तदिदं चर्चयामः ।

जैमिनीयाधिकरणन्यायमालाविस्तरे तावत् शास्त्रादौ प्रथमाधिकरणारम्भे ' ( प्रथमे धर्मशास्त्रा-रम्भप्रतिज्ञाधिकरणे सूत्रम् )' इति शीर्षकम् । ' ( प्रथमे उद्भिदादिशब्दानां यागनामतया प्रामाण्या-धिकरणे सूत्रम् ) ' इति प्रथमाध्यायचतुर्थपादारम्भे । ' ( प्रथमे पूर्वस्याऽऽख्यातप्रतिपाद्यत्वाधिकरणे सूत्राणि १-४ )' इति द्वितीयारम्भे च । तानीमानि शीर्षकाणि अधिकरणारम्भे कंसे निवेशितानि । तत्र प्रथमे शीर्षके ' धर्मशास्त्रारम्भप्रतिज्ञाधिकरणे ' इति सामासिकं सप्तम्यन्तं पदम् । कोऽत्र समासः कथ-मस्य विग्रह इत्याकाङ्क्षायां शास्त्रारम्भप्रतिज्ञायाः बोधकं शास्त्रारम्भप्रतिज्ञाबोधकं, शास्त्रारम्भप्रतिज्ञा-बोधकं च तत् अधिकरणं चेति विग्रहे बोधकपदस्य लोपेन शास्त्रारम्भप्रतिज्ञाधिकरणं इति उत्तरपद-लोपी यः किल मध्यमपदलोपी इति प्रसिद्धः स कर्मधारयो वा, शास्त्रारम्भप्रतिज्ञायाः अधिकरणं षष्ठ्यर्थः संबन्धो बोधकत्वादिः इति षष्ठीतत्पुरुषो वा इति स्वीकर्तुं युक्तम् । तत्र विस्तरसंपादकानां षष्ठीतत्पुरुष एव संमतः । अत एव विस्तरस्थायामधिकरणानुक्रमणिकायां वर्णक्रमेण साधितायां ' अश्व-दाभ्ययोरपि सादनादिधर्मवत्त्वस्य, उद्भिदादिशब्दानां यागनामतया प्रामाण्यस्य, धर्मशास्त्रा-रम्भप्रतिज्ञायाः इत्यादिरीत्या सर्वत्र षष्ठी एव प्रयुक्ता । अधिकरणं इति पूरकं पदं सर्वत्रानुवर्तते । तदेतदेवानुक्रमणिकास्थं षष्ठ्यन्तं पदमादाय प्राकरणिकेनाधिकरणपदेन संयोज्य निष्पादितं शीर्षकं तत्त-दधिकरणादौ प्रयुक्तमिति व्यक्तमेव । एवं सति विचार्यतां, यत् ' उद्भिदादिशब्दानां यागनामतया प्रामाण्याधिकरणे ' इत्यस्मिन् शीर्षके किं कियत् सामासिकं पदं, किं पूर्वपदं, किमुत्तरपदं, द्विपदो बहुपदो वा समासः, प्रामाण्यशब्दस्यैव वा अधिकरणपदेन समासः, समस्ततया उपसर्जनीभूते प्रामाण्यशब्दे एव उद्भिदादिशब्दानामित्यस्य यागनामतया इत्यस्य च अन्वयो न वा । तथा सति एतादृश एकदेशान्वयः क्वाचित्क एव सन् इदानीं परःशतेषु शीर्षकेषु स्वीकारार्हो न वा । तथाहि सति एकदेशान्वय एवोत्सर्गः सेत्स्यति । उक्ते शीर्षके उद्भिदादिशब्दानां इति षष्ठ्याः यागनामतया इत्यत्रान्वयेऽपि प्रामाण्यपदेऽपि वक्तव्य एवान्वयो मुख्यत्वात् । यागनामतया इत्यस्यापि प्रामाण्यपदे एवान्वयः । तत्र उद्भिदादिशब्दानां इति षष्ठ्या प्रामाण्याश्रयत्वस्य बोधनात् उद्भिदा-दिशब्दाः प्रमाणं इति ज्ञायते प्रामाण्यं चोद्भिदादिशब्दनिष्ठम् । यागनामतया इति तृतीयया च प्रामाण्ये हेतुरुच्यते । उद्भिदादिशब्दाः प्रमाणम् । कस्मात् ? यागनामतया यागनामत्वादित्यर्थः । एवं च उद्भिदादिशब्दानां इत्यस्य यागनामतया इत्यस्य च प्रामाण्यशब्दे एवान्वयः सिद्धो मन्तव्यः । प्रामाण्यपदं तु अधिकरणपदेन समस्तत्वात् उपसर्जनतामापन्नम् । उपसर्जनीभूते च समास-

घटकप्रामाण्यशब्दे अनुपसर्जनस्य षष्ठ्यन्तस्य तृतीयान्तस्य च पदस्य अन्वयो न स्यात् । ' विशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न ' इति शब्दशास्त्रसिद्धान्तात् । तथाचास्मिन् विषये ' उद्भिदादिशब्दानां यागनामतया प्रामाण्याधिकरणं' इत्येकं महाकूटमेव संपन्नम् । कथमस्य महाकूटस्य पृथक्करणमिति चिन्ता ।

शास्त्रदीपिकासंपादकैरपि ' द्विपत्नीकविकृतियागेऽपि पत्नीं संनह्येतिमन्त्रस्यानूहाधिकरणं ' इत्यादीनि शीर्षकाणि अन्तिमस्य अनूहादिपदस्यैव अधिकरणपदेन समासं कृत्वा निष्पादितानि प्रायः सर्वाण्येव । द्विपत्नीकविकृतियागे किं ? यागे वर्तमानो मन्त्रः । कोऽसौ मन्त्रः ? ' पत्नीं संनह्य ' इति स मन्त्रः । मन्त्रस्य किं ? ऊहः । स किं कर्तव्यः ? न कर्तव्यः । मन्त्रस्य न ऊहः, मन्त्रस्य अनूहः । तस्य च अनूहस्य अधिकरणम् । यः किल द्विपत्नीकविकृतियागे पत्नीं संनह्य इति मन्त्रे पत्न्यौ संनह्य इति उहस्याभावः अनूहः, तस्याधिकरणम् । एवं दीर्घे संबन्धे सत्यपि केवलस्यानूहपदस्यैव अधिकरणपदेन समासः स्वीकृतः । शेषाणि पदानि पश्चात् तथैव मुक्तकान्येवावस्थितानि । आश्चर्यवत् पश्यति कश्चिदेनम् ।

भाट्टदीपिकासंपादकैरपि तृतीयाध्यायचतुर्थपादान्तं विस्तररीतिरेवाङ्गीकृता । तृतीयाध्यायस्य पञ्चमपादमारभ्य तु द्वादशाध्यायसमाप्तिपर्यन्तं अधिकरणशब्दः स्वदेशान्निर्वासित एव । तत्र तु तैः ' ध्रुवाज्यादिभिः स्विष्टकृदादिशेषाननुष्ठानं ' ' साकंप्रस्थाय्ये शेषकर्माननुष्ठानं ' इति रीतिरेवाङ्गीकृता । विस्तरसंपादकैस्तावत् स्वीकृतत्यागं दोषं मन्वानैः क्वापि अधिकरणशब्दो न परित्यक्तः । शास्त्रदीपिकासंपादकाः पुनः प्रथमतो विस्तरानुसारेणाधिकरणशब्दं स्वीकृतवन्तोऽपि दुष्टपरित्यागं गुणं मन्वानाः पर्यत्यजन् । आनन्दाश्रमीयभाष्यसंशोधकैः पुनः कृपालुतया देशान्निर्वासितमपि अधिकरणपदं स्वयमाहूय स्वस्थाने निवेशितं ' कामसंयोगेऽपि ऐन्द्रवायवस्य पाठप्राप्तस्वस्थान एवानुष्ठानाधिकरणं ' इत्यादिना । एवं स्थिते कथमिदं समासकूटं विवेक्तव्यमिति विद्वांस एव मतिविदो विदांकुर्वन्तु ।

वयं तु स्थितस्य गतिश्चिन्तनीया इतिन्यायेन किंचित्तर्कयामः । तथाहि । ' उद्भिदादिशब्दानां यागनामतया प्रामाण्याधिकरणं ' इत्येकं शीर्षकम् । तत्र ' उद्भिदादिशब्दानां यागनामतया प्रामाण्यं इति वाक्येन अधिकरणकृतनिर्णय उपन्यस्तः । अस्य अधिकरणकृतनिर्णयोपन्यासकस्य वाक्यस्यानुकरणे कृते अनुकरणात्मकमेकमखण्डं पदं निष्पन्नम् । अनुकार्यवाक्ये प्रकृतिप्रत्ययविभागे सत्यपि अनुकरणस्याखण्डत्वात् तन्मध्ये प्रकृतिप्रत्ययविभागो नास्ति । तत उत्तरं ' उद्भिदादिशब्दानांयागनामतयाप्रामाण्यं ' इत्यस्याखण्डस्य पदस्य अधिकरणपदेन चन्दनतरुवत् कर्मधारयः समासः । एवं सत्यपि सर्वनिबन्धेषु अनुकार्यवाक्यस्थपदानां यादृक् छित्त्वा मुद्रणं तत्तथैवानुकरणेऽपि छित्त्वैव मुद्रितं, तत्तु एतद्विषयककल्पनाभेदादेव । तत्र चानुपपत्तिरुक्तैव । निष्कर्षस्तु अधिकरणार्थप्रदर्शकानि एतानि नामधेयान्येवाधिकरणानामिति सिद्धम् । एवं सति एषु शीर्षकेषु अधिकरणपदं विद्यमानमपि न दूषयति भूषयति वा , अविद्यमानमपि न भूषयति दूषयति वा ।

उक्तमस्माभिः, अधिकरणनामानि द्विविधानि पारिभाषिकाणि च अधिकरणनिर्णयादिबोधकानि चेति । तत्र अधिकरणनिर्णयादिबोधकानि नामानि मूलपुस्तकेषु नोपलभ्यन्ते मुद्रितेष्वेव तु तान्युपलभ्यन्ते इति च । तत्र महेशचन्द्रन्यायरत्नैः कालीघट्टे ( कलकत्ता ) १८६९ सनसमीपे मीमांसादर्शनं दीर्घकालिकेन मुद्रणेन मुद्रितम् । मीमांसादर्शनं नाम शाबरभाष्यसहितानि जैमिनिमीमांसासूत्राणि । तत्पुस्तकसंशोधनोपयुक्तेषु च पुस्तकेषु संगृहीतेषु मध्ये यूरोपीयपण्डितेन पूर्वमेव मुद्रितं मीमांसादर्शनपुस्तकमप्यासीत् इति तदुपोद्घातादेव ज्ञायते । तत्र वयं मन्यामहे यूरोपीयपण्डितेन भारतीयपण्डितसाहाय्येन अधिकरणनामानीमानि प्रथमतः संपादितानि स्युः । तान्येव च प्रायशो

महेशचन्द्रन्यायरत्नैः स्वीकृतानि स्युः। ततः परं श्रीजीवानन्दविद्यासागरैः १८८३ सने ततः पुरस्तात् परस्ताच्च कालीघट्टे एव तदेव मीमांसादर्शनं पुनर्मुद्रितम्। अधिकरणशीर्षकाणि च महेशचन्द्रन्यायरत्नैः संपादितान्येव प्रायशः स्वीकृतानि। किंचिदेव तु परिवर्तितमपि। ततः परं पुण्यपत्तनस्थानन्दाश्रमेण १८९३ सने जैमिनीयाधिकरणन्यायमालाविस्तरः मुद्रितः तत्र संशोधनकार्ये यूरोपमुद्रितं च कालीघट्टमुद्रितं चेति पुस्तकद्वयमप्यासीदिति तदुपोद्घाताज्ज्ञायते। शीर्षकाणि च तत एव विस्तरसंशोधकैः संगृहीतानि स्युः। तत्र प्रायशस्तान्येव, कानि चिच्च स्वेच्छया परिवर्तितान्यपि। ततः परं निर्णयसागरे सोमनाथप्रणीतमयूखमालिकासंयुक्तशास्त्रदीकिकापुस्तकं १९१५ सने मुद्रितम्। तत्र च विस्तरस्थान्येन शीर्षकाणि स्वीकृतानि कानि चित्तु निर्णयसागरस्थपण्डितैः स्वयं परिवर्तितान्यपि। तस्मिन्नेव च संवत्सरे गुजराती प्रिंटिंगप्रेसमध्ये न्यायबिन्दुर्मुद्रितो विद्यानाथप्रणीतः। तत्संपादकैरपि कानिचिद् विद्यासागरे कानि चिच्च विस्तरे वर्तमानानि शीर्षकाणि गृहीत्वा भूयांसि स्वयमेव नूतनानि विरचितानि। सेयं परंपरा अधिकरणशीर्षकाणाम्। अनया परंपरया समागच्छन्नसौ अधिकरणशीर्षकसार्थो भूयांसं परिणाममाप्नोत्। यथा केषां चिदशुद्धानां शुद्धीकरणं तथा केषां चिच्छुद्धानामशुद्धीकरणमपि संजातमेव। अथ अर्वाचीने काले १९३२ सने आनन्दाश्रमे एव सवार्तिकभाष्यसहितजैमिनिमीमांसासूत्ररूपं मीमांसादर्शनं मुद्रितम्। एतत्संशोधकैस्तु कानि चिदेव पूर्वतो गृहीतानि भूयसा तु स्वयं निर्मितानि।

एतावता मीमांसाधिकरणानां शीर्षकाणि न मूलकारविरचितानि किंतु तत्तद्ग्रन्थमुद्रणकाले तत्तत्संपादकमहाशयैर्विरचितानीति सिद्धम्।

( ३ ) उपलब्धानां शीर्षकाणां वर्गीकरणे चिकीर्षिते पारिभाषिकत्वं अर्थबोधकत्वं चेति प्राधान्येन द्वावेव धर्मौ समुपलभ्येते इति द्वौ वर्गौ भवतः। तत्र पुनर्द्वितीये वर्गे श्रुत्यर्थबोधकानि अनुष्ठेयार्थबोधकानि न्यायबोधकानि चेति त्रैविध्यम्। तत्र प्रतिपदाधिकरणं भावार्थाधिकरणं अपूर्वाधिकरणं तानि द्वैधाधिकरणं इत्यादीनि पारिभाषिकवर्गे समापतन्तीति मनीषाऽस्माकम्। विधिवाक्यगतं प्रत्येकं पदं नापूर्वबोधकं किंतु किंचिदेकमेव पदं तथा, इति यस्मिन्नधिकरणे निर्णीतं तत् प्रतिपदाधिकरणं नाम। एकमपि आख्यातपदमेव अपूर्वबोधकं इति यत्र निर्णीतं तत् भावार्थाधिकरणम्। अथ येष्वधिकरणेषु श्रुत्यर्थविचारः क्रियते तदधिकरणनामधेयं प्रायः श्रुत्यर्थनिर्णयबोधकं भवति। यथा 'आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थता' 'लवनप्रकाशकमन्त्राणां मुख्ये बर्हिषि विनियोगः' इत्यादीनि। अथ 'सौर्ये चरौ अभिमर्शनद्वयविकल्पः' 'मधूदके उपांशुयाजीयाज्यधर्मातिदेशः' इत्यादीनि अनुष्ठेयार्थबोधकवर्गे ज्ञातव्यानि। अथ 'सामिधेनीषु आगन्तूनामन्ते निवेशः' 'देवताघटितसादृश्यापेक्षया द्रव्यघटितसादृश्यस्य बलीयस्त्वं' इत्यादीनि तु शीर्षकाणि न्यायबोधकवर्गे संग्राह्याणि भवन्ति। तत्तदधिकरणप्रतिपादितो न्याय एवात्र निबद्ध इति। सूक्ष्मया दृशा विचारे अन्येऽपि के चित् वर्गा दृष्टिपथमवतरेयुः। तथापि नातिफलकत्वान्नास्माभिरत्र भूयो विवेचितमिति।

(४) अधिकरणविषयादिज्ञानार्थं यान्येतानि नामधेयानि तानि प्रायशः एकस्याप्यधिकरणस्यानेकानि भवन्ति। प्रथमे एव तावदधिकरणे द्रष्टव्यम्। यथा धर्मजिज्ञासा इति भा–सा–बिन्दुः। धर्मजिज्ञासाप्रतिज्ञा इति भाट्ट। धर्मशास्त्रारम्भप्रतिज्ञा इति वि–शा। प्रतिज्ञासूत्रं इति भा। शास्त्रारम्भप्रतिज्ञा इति ल। शास्त्रारम्भसमर्थनं इति वृ। अत्र संशोधका नव, शीर्षकाणि च षट्। नामभेदेऽपि अर्थो नातीव भिन्नो यद्यपि उदाहृतस्थले, तथापि नामधेयभेद एतावान् उद्वेगजनक एवेति मनीषाऽस्माकम्।

५ तानीमानि अधिकरणशीर्षकाणि तदीययुक्तायुक्तत्वचर्चा च जैमिनिमीमांसासूत्रपाठे टिप्पण्यामस्माभिर्निवेशिता ।

## प्रकीर्णकम्—

१ सुधायां प्रयोगोत्पत्त्यशास्त्रत्वात् । १।३।२४ भा, १८ सु. इत्येतस्मात् सूत्रात् प्राक् ' इति श्रीमत् — त्रिकाण्डमण्डन० न्यायसुधाख्यायां प्रथमाध्यायस्य तृतीयस्मृतिचरणपूर्वार्धम् ' इति समाप्तिसंकल्पो मुद्रितः । प्रयोगोत्पत्तिसूत्रस्यादौ च ' प्रथमाध्यायस्य तृतीयपादस्य उत्तरार्धो भागः । ' इति मुद्रितम् । तृतीयपादान्ते तु ' इति श्रीमत्त्रिकाण्डमण्डन०न्यायसुधाख्यायां प्रथमाध्यायस्य तृतीयः पादः समाप्तः ' इत्येव मुद्रितम् । नतु ' तृतीयस्मृतिचरणोत्तरार्धम् ' इति । तदेतत् सुधाकारकृतमेव वा लेखकसंशोधकादिकृतं वेति संशयः । तत्र तावत् पूर्वार्धोत्तरार्धरूपो विभागो भाष्ये नास्ति, नापि वार्तिके । सुधायां प्रथमाध्यायतृतीयपादस्य मुद्रितानि पृष्ठानि २७५, चतुर्थपादस्य २५९, द्वितीयाध्यायप्रथमपादस्य तु ४३८ पृष्ठानि । परंतु प्रथमचतुर्थे द्वितीयप्रथमे वा नैतादृशोऽस्ति विभागः । तदत्र प्रथमतृतीये एव को हेतुर्विभागकरणस्येति न ज्ञायते । यदि ' तृतीयस्मृतिचरणपूर्वार्धे ' इति प्रथम विभागान्ते उक्तं तदा द्वितीयविभागान्ते ' उत्तरार्धं ' इति कुतो नोक्तम् ।

२ कस्तूरिरङ्गाचार्यप्रणीता वृत्तिः भाट्टदीपिकापुस्तके एव मुद्रिता इत्युक्तम् । तत्र वृत्तौ येऽङ्का मुद्रितास्ते केवलं भाट्टदीपिकोपन्यस्तसूत्राङ्कानुसारेणैव । न तु स्वातन्त्र्येण क–वृत्त्यनुसारेण । तदनुसारिणोऽङ्कास्तु भिन्ना एव स्युः । सा वृत्तिः किल चेदन्तमुत्तरेणैकं इति नियममनुसरति न तु भाट्टदीपिकोपन्यस्तसूत्रपाठम् । अत एव १।४।६–७ सूत्रव्याख्योत्तरं ' ६–७ ' इत्यङ्कद्वयं मुद्रितम् । वस्तुतस्तु अत्र ' ६ ' इत्येवाङ्को मुद्रयितुं युक्तो न ' ६–७ ' इत्यङ्कद्वयम् । भाट्टसूत्रपाठे किलात्र चेदन्तमुत्तरेणैकं इति नियमस्यास्वीकृतत्वात् पृथक् पृथक् ६ इति च ७ इति चाङ्कौ मुद्रिताविति युक्तम् । क–वृत्तिकारस्तु नियतमेव सर्वत्र चेदन्तानामुत्तरसूत्रेणैक्यं मन्यते । तथाच क–सूत्राङ्का न प्रामाण्येन ग्रहीतुं शक्यन्ते ।

३ आनन्दाश्रमीयभाष्ये १६७० तमे पृष्ठे टिप्पणी ' इत उत्तरं पूर्वपक्षग्रन्थः ' इत्यादिः । तत्र ' आनुपूर्व्या तद्ग्रन्थान्वेषणे यत्नो विधेयः ' इत्युक्तम् । अस्मत्सविधे वर्तमानं टुप्टीकायाः लिखितं पुस्तकं तन्त्ररत्नात् टुप्टीकाग्रन्थं नीरात् क्षीरं हंस इव विवेचयति । चौखम्बाटुप्टीकायाः सकाशात् अर्थात् प्रायः आनन्दाश्रमीयटुप्टीकायाः सकाशात् अस्मदीयटुप्टीकापुस्तकं भिन्नपाठयुक्तं स्थलेष्वनेकेषु विद्यमानं दृश्यते । तन्नूनं भूयसोपकारि । एतत् टुप्टीकापुस्तकमस्मत्सविधे विद्यमानं स्वीयम् ।

४ यानि सूत्राणि चौखम्बावार्तिके न मुद्रितानि यानि चांशत एव मुद्रितानि तानि द्विविधान्यपि सूत्राणि सुधायामपि स्वातन्त्र्येण नैव मुद्रितानि । परंतु सुधामूले तेषामुल्लेखोऽवतरणे भवति क्रमाङ्कश्च न दत्तस्तत्र कश्चित् । तानि यथा १।४।९,१२,१३,१४,१६,२३ इत्यादीनि ।

५ सुबोधिनीवृत्तौ सूत्रे मूले च ५।३।४३ इत्यादौ क्वचित् भेदो भवति । वस्तुतस्तु मूलानुसारेणैव सूत्राक्षरनिवेशः कर्तुं युक्तः । स च न कृत इति संपादकमहाभागान्नाभिनन्दामोऽस्मिन् विषये । अस्मत्संभृतमीमांसानिबन्धसंपादकमहाभागानां विषये विशेषतो यद् वक्तव्यं प्रकृतग्रन्थमुद्रणपरिवारचिन्तानिर्वहणमात्रमुद्दिश्य, तत्सर्वं प्रकृतपुस्तकस्थे सूत्रपाठनामधेये निबन्धे टिप्पणीषु वक्ष्यामः । स्वातन्त्र्येण तु

तेऽस्मदुपजीव्या एवेति न नो विस्मृतिः । यत्तु मुद्राप्यमाणटिप्पणीषु तत्रतत्र तेषु प्रहृतमस्माभिः तत्तु अस्मदीयदृष्टिप्रसरप्रकारप्रदर्शनमेव केवलम् । तत्र तत्त्वं तु मीमांसाविचारका एव विदांकुर्वन्तु । अस्माभिस्तु ते क्षमापणीया एव । विद्याविनयसंपन्नास्तु दोषांस्त्यक्त्वा गुणानेव महतः कुर्वन्ति इति नो विश्वासः । अस्मासु दोषा नहि सन्तीति विद्वत्सु उच्यमानं साहसं व्यवहारपदम् ।

पदसूच्यां सर्वत्राध्यायपादसूत्राणामङ्कनिवेशने जागरूकस्यापि मे एकाकित्वात् , अकिंचनस्य चैतादृशे कार्ये सहायप्राप्तेरसंभवात् , क्वचिदपराद्धमपि स्यात् । एवं जानतापि च मया पुनः संशोधनं कर्तुं न पार्यते अतिक्लिष्टत्वात् जटिलत्वात् विस्तृतत्वाच्च कार्यस्य वृद्धत्वादनियतस्मृतिकत्वाच्च कर्तुर्मे । वाचकानां सन्निधे क्षमायाचनमपि एतादृशे विषये कर्तुमयुक्तमेव ।

केषां चित् समासघटकानां पदानां असमस्तपदानामिव स्वातन्त्र्येण निवेशः समजनि । अत्र च कारणं प्राथमिकरचनाकालेऽधुना च जायमानो बुद्धिभेद एव । पुनः संशोधनं तु कर्तुं न पार्यते इत्युक्तमेव । परंतु अधिकं प्रविष्टं न तद्धानिः इति न न्यूनतादोषः । न जाने न्यूनताऽपि क्वचित्संभाव्येत । अन्ते तु भगवच्चरणस्मरणमेव सर्वदोषापहं इति तथा कृत्वा विरम्यते ।

केवलानन्दसरस्वती.

विजयादशमी }
शकः १८७० }

# शुद्धिपत्रम्

**अत्र दीयमानास्त्रयोऽङ्काः पृष्ठ-स्तम्भ-पङ्क्तीनां ज्ञेयाः।**

| | अशुद्धम् | शुद्धम् |
|---|---|---|
| १।०।३ | येऽस्तु | ये नमोऽस्तु |
| ४।२।३ | स्वात् | स्त्वात् |
| ४।२।४ | स्त्ययप | स्त्यप |
| ४।२।२१ | पिप्र | विप्र |
| ५।२।१२ | ३१ | ३० |
| ५।२।३५ | तिष्ठते | तिष्ठेत |
| ६।१।१५ | नार्थत्व | नार्थत्वं |
| ७।२।१३ | मनः संतो | मनःसंतो |
| ९।२।२२ | सूत्रेऽनेपक्ष्यं | सूत्रे अनपेक्ष्यं |
| १०।१।१ | अधि०-भिन्नाः | (अधि०-भिन्नाः) |
| १०।१।६ | अधि० ३ | ( अधि० ३ ) |
| १०।१।१७ | ३।२ | ३ |
| १०।१।१९ | युक्तं परं | युक्तं, परं |
| १०।१।३६ | इतरैश्चतुर्थ | इतरैस्तृतीय |
| ११।२।४ | नासं | नासं |
| ११।२।९ | परो | यरो |
| १३।१।२७ | प्रवर्षः | प्रकर्षः |
| १३।२।२१ | च्च कु | च्चन इति कु |
| १४।२।१ | ३२य. | ३१ य. |
| १४।२।९ | अधि०२ | ( अधि०२ ) |
| १४।२।३१ | वा इत | वा इति इत |
| १६।२।३४ | गुणामां | गुणानां |
| १८।१।५ | र्थे इति | र्थे वि इति |
| २०।१।१० | १।२ | १-२ |
| २१।१।२१ | त्राङ् | त्राङ्क |
| २१।१।२२ | सशो | संशो |
| २२।१।२४ | रत्यिम् | रीत्यम् |
| २४।१।८ | चतुर्थ | चतुर्थं |
| २८।२।६ | कर्म युक्तं | कर्मयुक्तं |
| २९।१।५ | पुनः श्रुतिः | पुनःश्रुतिः |
| ३२।२।१६ | य सूक्त | यसूक्त |

| | अशुद्धम् | शुद्धम् |
|---|---|---|
| ३३।१।१५ | कर्मणा | कर्मणो |
| ३४।१।१८ | (२)चोदितत्वात्, न | ( २ ) न |
| ३४।१।२० | । न नाम्ना | न नाम्ना |
| ३४।२।८ | तीयते | तीयेत |
| ३४।२।३१-३२ | अयमेव पाठो युक्तः। भाष्यादपि सोऽनुमातुं शक्यते । | ० |
| ३५।१।११ | क व्ये | क । व्ये |
| ४०।२।३१-३२ | य–कुपाठ एव स्वारसिकार्थनिर्वाहकः। भाष्यवार्तिके च नानुकूले न प्रतिकूले | भाष्यात्तु स्कारकत्वात् इत्येव सिध्यति । |
| ४३।१।४ | स्यामुप | स्यानुप |
| ४३।१।२४ | कुटि । | कुटि । द्वाऽनपनयः स्यात् इति पाठस्तु पूर्वसूत्रानुसारेण युक्तः । |
| ४४।२।४ | भाट्ट–बिन्दुः. | भा-मण्डनभिन्नाः |
| ४४।२।८ | ,, | ,, |
| ४५।१।७ | ,, | ,, |
| ४५।१।२७ | शेषणा | शेषाणा |
| ४५।२।४ | २० भाट्ट– | २०शा–भाट्ट- |
| ४५।२।६ | भक्तिपा | भेक्तिपा |
| ४६।२।१५-१७ | अतिशिथिलमिदम् । प्रत्यधिकरणं कस्य चिद्विषयस्योपक्रमोऽस्त्येव | ० |
| ५४ शीर्षणि | [ जैमिनी | [ जैमिनि |
| ५४।२।७ | द्रव्यसंयोगाच्च | द्रव्यपरत्वाच्च |
| ५४।२।९ | कस्मात् | ‘ कस्मात् |
| ५४।२।३५ | द्रव्यपरत्वाच्च इति वृ–य–कु–वा–सु । | ‘द्रव्यपरश्चात्र भवति निर्देशः’ इति भाष्यात् द्रव्यपरत्वाच्च इत्येव पाठो भाष्यसंमतः । |

| | अशुद्धम् | शुद्धम् |
|---|---|---|
| ५७।१।२१ | रोर्ध्वदामा | रोर्ध्ववदानमा |
| ६०।२।२ | ऽवेच | ऽवच |
| ६२।१।१० | रणाभा | रणभा |
| ६५।२।३० | १६ स्यात् | १६(१) स्यात् |
| ६६।२।३३ | गृहींतं' | गृहीतं |
| ६७।२।९ | य मिति | यमिति |
| ७०।१।२ | अखि०४. | अधि०४.अन्तरा-गर्भिणी. |
| ७०।१।१५ | पङ्क्तेः उपरि | तृतीयाधिकरणशेषसूत्रद्वयम् इति वाच्यम् । |
| ७०।२।३६ | स्ययं | स्वयं |
| ७१।१।३२ | त्तौ इत्ये | त्तौ हि इत्ये |
| ७१।२।१६ | त्तौ पु | त्तौ हि पु |
| ७२।१।९ | ३५ सर्वे | ३५ न सर्वे |
| ७२।२।१३ | षामव | षामेव |
| ७४।२।२०-२५ | म-सादिशीर्ष-कात्--संभाव्यते | भा-शीर्षकमयुक्तम् । प्राकृताङ्गेषु नानाकर्तृकत्वं, वैकृताङ्गेषु तु एककर्तृकत्वं इति भानसंभवात् । |
| ७६।२।३० | कर्मानु | करणमन्त्रानु |
| ७८।१।८ | षाद | ²षाद |
| ७८।१।२३ | दार्या | दार्था |
| ७८।२।७ | त्वात् । ३६ | त्वात् । ३५ |
| ७८।२।१६ | । विरो | । ( २ ) विरो |
| ७९।१।२ | ३७ य-सु | ३६ य-सु |
| ७९।१।६ | स्य त | स्यात |
| ७९।१।११ | भिन्नाः. | भिन्नाः, २० बिन्दुः. |
| ७९।१।२२ | भ्यते । | भ्यते, त्वस्यात इति च पाठः सिध्यति । |
| ७९।२।८ | य-सु | त्रृ-य-सु |
| ८१।२।२२ | स्थले | स्थलत्रये |
| ८२।२।११ | तवन्तः | तम् |
| ८४।१।३५ | चतुर्थाध्यायस्य प्रथमपादादौ | तृतीयाध्यायान्ते |
| ९४।१।१८ | अपि भोः | अयि भोः |

| | अशुद्धम् | शुद्धम् |
|---|---|---|
| ९५।१।२९ | न्याद्धयभि | न्याद्धयाभि |
| ९५।२।३ | ल्याच | ल्या च |
| ९८।२।३ | सान्त | सांत |
| १०६।२।२१ | किमके | किमेक |
| १०६।२।२७ | वा' ' इति | वा इति ' ' |
| १०७ | | षष्ठसूत्रोपरि ' अधि० ३, ४ मण्डनः ' इति मुद्रितं, तत् पञ्चमसूत्रोपरि ग्राह्यम् । |
| ११०।१।२१-२२ | | यागादिषु मनुष्याणामेवाधिकार इति भाट्ट । इति पङ्क्तिः द्विर्मुद्रिता सा एकदैव ग्राह्या । |
| १११।१।२८ | म-टि | मटि |
| १११।२।२७ | म-सा-त्रृ | म-सा-बिन्दु-त्रृ |
| ११४।१।८ | थैनाभि | थें नाभि |
| ११४।१।३० | ० | भाष्यमूलात् अन्यार्थे इति सप्तम्यन्तं, न इति निषेधार्थकं इति हि स्पष्टम् । |
| ११७।१।२३ | -शा | वि-शा |
| ११८।१ | सप्तमपङ्क्तेरुपरि 'अधि० ६.' इति वाच्यम्. | |
| ११८।१।१२-१३ | ' देवताग्नि-इति भा ' इत्यस्याः पङ्क्तेः पूर्वं ' देवतामन्त्र--म-सा-त्रृ ' इति पङ्क्तिः पठनीया । | |
| १२१।२।२६, २७, ३१ | निवाहक | निवाहक |
| १२२।१।३ | देशे न | देशेन |
| १२३।१।२७ | इात | इति |
| १२४।१।१२ | राधये | राधेय |
| १२५।२।५ | कस्य | कश्च |
| १२६।१।७ | रेऽपि शा | रे शा |
| १२६।१।३३ | तत्र | तत्र |
| १२६।२।२४ | पये | पयेन |
| १२७।१।१ | ष्टंही | ष्टं ही |
| १२८।१।३ | त्थान | त्थाने |
| १२८।१।२५ | भाट्ट ज्यो | भाट्ट । ज्यो |
| १३३।१।१५ | यथा | ²येथा |
| १३३।२।२ | त्वात् | त्वाच्च |

| अशुद्धम् | शुद्धम् |
|---|---|
| १३५।१।१३ णात्तु | णत्वात्तु |
| १३५।२।२६ जानोयुः | जानीयुः |
| १३७।१।३४ स्मार्ताग्नौ | श्रौताग्निषु |
| १३९।१।१ आपि | अपि |
| १४१।२।१९ त्वात् प्र | त्वात् प्रतिप्र |
| १४२।१।५ ज्यो | ज्यौ |
| १४३।१।१ द्वितीय | द्वितीयः |
| १४३।१।३ शब्दने | शब्देन |

१४४। विश्वजिति सर्वपृष्ठे इति सप्तमसूत्रमारभ्य स्वरसामैक इति सप्तविंशतिसूत्रान्तं प्रतिसूत्रं क्रमेण ६ भादौ, ७ भादौ, ८ भादौ इत्यादि २५ भादौ, २६ भादौ इति तत्रतत्र पठनीयम् । कर्मजे कर्म इत्यादौ तु यथामुद्रितमेव ।

| अशुद्धम् | शुद्धम् |
|---|---|
| १४६।२।१० अत्र | सू० २७ अत्र |
| १४७।२।३२ त्र । ऋ | त्र ऋ |
| १४८।१।१ भतो | भूतो |
| १४८।२।१ यत्रात्तु | यत्र नित्यात्तु |
| १४८।२।१९(२) त्वान्नित्यात्तु इति रत्न | ० |
| १४९।१।२० न वा प्रत्य | न वा क्रत्वभिधानाद इति त्र-भिन्ने सर्वत्र । न वा प्रत्य |
| १५०।२।१६ पयशौ | यपशौ |
| १५२।२।२२नास्त्येव । | नास्त्येव । मधूदक्योरुपांशुयाजधर्मातिदेश इति भा । |
| १५३।२।३४ न्तोऽत्र । | न्तोऽत्र । सत्राहीनयोः सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थयाऽतिदेश इति भा । |
| १५४।२।२६ मीये पशौ आम्ना | मीये आम्ना |
| १५५।२।१४ शद्रात्र | शद्रात्रे |
| १५५।२।१७ च वा | च बा |
| १५८।१।१ होमसयो | होमसंयो |

| अशुद्धम् | शुद्धम् |
|---|---|
| १५८।२।११ रार्धो | रार्थो |
| १६१।२।११दर्शोत् | देशात् |
| १६१।२।३० बन्धमु इति य । बद्ध | देशबन्धमु इति य । देशबद्ध |
| १६३।१।१९तश्चा | तच्चा |
| १६६।१।२४इति । | इति । प्रथमे तु |
| १६७।२।८ प्रग्रथ | ग्रन्थ |
| १६७।२।९ म-सा-बिन्दुः | बिन्दुः |
| १६९।१।३ द्रव्य | द्रैव्य |
| १७०।१।१५ प्रकृतिः | प्रवृत्तिः |
| १७२।१।२ भयगामित्वात् | भयभागित्वात् |
| १७३।२।३ त्वात्, | त्वाद्, |
| १७४।१।१-२ १६ अन्यत्र | ० |
| १७४।२।२८नित्वे | निधित्वे |
| १७५।२।९यात | यात् |
| १७६।२।२५पंति | पति |
| १७७।२।७ चनेनें | चने नें |
| १७७।२।१९इति य। अत्र | इति य। भादौ सर्वत्र अवचनेन इति तृतीयान्तमेव मुद्रितं, तदशुद्धम् । भाष्यात्तु स्पष्टमेव अवचने इति सप्तमी न इति निषेधः उत्तरान्वयी इति । अत्र |
| १८०।१।१५,१६,१७ अनु | अननु |
| १८४।१।६ वणश्च | वर्णश्च |
| १८६।२।११णाथ | णार्थ |
| १८७।१।३ णभन | णमन |
| १८७।२।१४सारण | सारेण |
| १८८।२।२८चतुःषष्टि | षट्षष्टि |
| १९१।१।५ समानत्वात् | समत्वात् |
| १९१।२।१ षधे | षेध |
| १९१।२।१० न त्वतेत् | न त्वेतत् |
| १९२।१।१४एकैक | एकैके |
| १९३।१।१६यज्ञ | यज्ञे |
| १९३।२।९ पन | पनं |
| १९५।१।१ त्वात् | त्वात् स्यात् |

| अशुद्धम् | शुद्धम् |
| --- | --- |
| १९६।२।१२ पदस्य | पदेस्य |
| १९८।१।१ दर्क्षि | दीक्ष |
| १९९।१।१३ स्यात् | स्याद् |
| २०१।२।१४ पङ्क्तेरुपरि पञ्चदशाधिकरणशेषसूत्रम् इति प्राप्यम् । | |
| २०३।२।१३ क्तेऽध्व | क्तोऽध्व |
| २०४।२।७ माहन्द्र | माहेन्द्र |
| २०७।२।२० ब्देनव | ब्देनैव |
| २१०।१।२६ स्वीकृत | स्वीकृतं |
| २१६।२।४ धर्मावि | धर्मवि |
| २१६।२।२५ वृ-ल-य । | वृ-ल-य । यद्यपि भा-पुस्तके सूत्रे मूले च धर्माविशेषात् इत्येव मुद्रितं, तथापि ' ऐन्द्र-वायवादितया ' इति पदात् धर्माविशेषात् इत्येव पाठः स्वीकर्त-व्यः । नहि अंशोः प्राक् ऐन्द्रवायवे गृहीते मैत्रावरुणस्य अव्यव-हितपूर्वत्वेन ऐन्द्रवा-यवादित्वं संभवति । |
| २१९।१।२९ इति भा । वी | इति भाट्ट । वी |
| २३४।१।३४ दश | दर्श |
| २३६।२।१७ कुतः ।'प्रति | ' कुत : । प्रति |
| २३६।२।१९ भाष्यातु | भाष्यात्तु |
| २३६।२।२७ लिङ्गागि | लिङ्गानि |
| २३९।१।३२ रम्मक | रम्भफ |

| अशुद्धम् | शुद्धम् |
| --- | --- |
| २४०।२।१२ मे न इति वि-शा । | मेन इति वि-शाभिन्ने । |
| २४२।२।१ असंसृष्टोऽपि | असंस्पृष्टोऽपि । ( एवं पूर्वोत्तर-भाष्यात् सिध्यति ) |
| २४३।२।२२ भाष्यासं | भाष्यसं |
| २४५।१।१ तन्त्र | तन्त्र |
| २४७।२।१५ वि-शा-शा- | वि-शा- |
| २४८।१।१४ ७४ | ४७ |
| २४८।१।१७ त्वेन न स्वी | त्वेन स्वी |
| २५४।१।१ भाट्ट, वृ-य- | भाट्ट-वृ-य- |
| २५४।१।३२ पाठ अव | पाठ आव |
| २५४।२।२५-२७ अथ पात्राणां तन्त्रस्य नियमः इति वि-शा-ल । यज्ञ-पात्राणां तन्त्रस्य नियमः इति वि-शा-ल । | पात्राणां तन्त्रनि-यमः इति वि अनु-क्रमण्यां, पात्राणां तन्त्रस्य नियमः इति वि अधिकरणादौ-शा-ल । |
| २६१।१।११ ३० य. | २९ य. |
| २६१।१। २७-२९ वसाशब्देन इत्यारभ्य न वपानां इत्यन्तं पङ्क्तित्रयं न वाचनीयम् । | |
| २६२।२।३० गन्त्र | गमन्त्र |
| २६७।२।३५ होतृर्वर | होतुर्वर |
| २६९।१।३१ सूत्रे ल | सूत्रे-ल |
| २७३।१।५ णाच्च | णत्वाच्च |
| २७८।२।१८ पङ्क्तेरधस्तात् सू० १२ ( १ ) चेदन्तमुत्तरेणैकं य इति वाचनीयम् । | |

ॐ

# मीमांसादर्शनम्

नाम

# जैमिनिमीमांसासूत्रपाठः

# मीमांसादर्शनम्

## जैमिनीयसूत्रपाठः

* निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

## अथ प्रथमोऽध्यायः

॥ अथ प्रथमाध्यायस्य प्रथमः पादः ॥

**अधिकरणम् १.**

१ अथातो धर्मजिज्ञासा ।

**अधि० २.**

२ चोदनालक्षणोऽर्थो धर्मः ।

**अधि० ३.**

३ तस्य निमित्तपरीष्टिः ।

**अधि० ४ भाट्टभिन्न.**

४ [1]सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म [2]तत् प्रत्यक्षम[3]निमित्तं विद्यमानोप[4]लम्भ-

---

(*)अयं श्लोकः कुतूहलवृत्तौ प्रतिपादादौ भवति । स एव च यपुस्तके आदौ संगृहीतः इति ज्ञेयम् ।

**अधि० १** धर्मजिज्ञासा इति भा अधिकरणान्ते –म–सा–बिन्दुः । धर्मजिज्ञासाप्रतिज्ञा इति भाट्ट । धर्मशास्त्रारम्भप्रतिज्ञा इति वि–शा । धर्माधर्मजिज्ञासा इति कु । प्रतिज्ञासूत्रं इति भा आरम्भे । तृतीयाध्यायारम्भे अप्येवम् । इदमयुक्तं अनेकेषामधिकरणानां नामैक्ये नामवाचकानां संदेहजले मज्जनप्रसङ्गात् । अन्यायश्चानेकार्थत्वम् । ततश्च शास्त्रारम्भप्रतिज्ञा इति ल–वत् नाम आधातव्यम् ।

**अधि० २** धर्मलक्षणं इति भा–सा–वि–भाट्ट–शा–बिन्दु–वृ–ल । धर्माधर्मस्वरूपलक्षणं इति कु ।

**अधि० ३** धर्मप्रमाणपरीक्षा इति वि–भाट्ट–शा –ल । धर्मप्रमाणस्य विचार्यत्वं इति वृ । धर्मप्रामाण्यपरीक्षा इति सा । धर्मे प्रामाण्यपरीक्षा इति भा । इदं द्वयमयुक्तम् । नहि धर्मः प्रमाणं, प्रमाणगम्यो हि सः । न चात्र प्रामाण्यस्य परीक्षा । परीक्ष्यता इति च वर्णविस्तरो व्यर्थः । परीक्षा इत्येव हि तदर्थः । प्रमाणपरीक्षा इति कु । प्रमाणपरीष्टिः इति शा–बिन्दुः । प्रमाणापरीक्ष्यत्वनिरूपणं इति वृत्तिग्रन्थारम्भे । इदमयुक्तं पूर्वपक्षो हि तादृशो न सिद्धान्तः ।

**अधि० ४** धर्मस्य प्रत्यक्षाद्ययोग्यत्वनिरूपणं इति भाट्ट । धर्मे प्रत्यक्षस्याप्रमाणता इति सा । धर्मे प्रत्यक्षाद्यगम्यत्वं इति वि–शा–ल । धर्मे प्रत्यक्षाद्यप्रामाण्यं इति भा । घटे पटत्वाभाववत् धर्मे प्रत्यक्षादिनिष्ठप्रामाण्यस्याभावः प्रसिद्ध एव तदर्थं मास्तु अधिकरणम् । धर्मे विषये प्रत्यक्षादेर्नास्ति प्रामाण्यं इति तु प्रतिपादनीयम् । प्रत्यक्षस्य धर्मप्रमापकत्वाभावः इति बिन्दु–वृ । प्रत्यक्षादीनां धर्मे अप्रमाणता इति कु । अन्वयस्य क्लिष्टत्वादयुक्तमिदम् ।

**सू० ४** ( १ ) तत्सं इति उपवर्षः– भाट्ट । ( २ ) सत् इत्युपवर्षः–भाट्ट । ( ३ ) तत् प्रत्यक्षं इत्यन्तमेव चतुर्थं सूत्रं, अनिमित्तं इत्यादि तु पृथक् पञ्चमं सूत्रं उत्तराधिकरणस्य पूर्वपक्षप्रतिपादकं उपवर्षमतेन । शाबरे वृत्तिग्रन्थे स्पष्टमिदम् । ( ४ ) लम्भात् इति य ।

नत्वात् ।

अधि० ५, ४ भाट्ट.

५ औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ।

अधि० ६, ५ भाट्ट.

६ कर्मैके तत्र दर्शनात् ।

७ अस्थानात् ।

८ करोतिशब्दात् ।

९ सत्त्वान्तरे च यौगपद्यात् ।

१० प्रकृतिविकृत्योश्च ।

११ वृद्धिश्च कर्तृभूम्नाऽस्य ।

१२ समं तु तत्र दर्शनम् ।

१३ सतः परमदर्शनं विषयानागमात् ।

१४ प्रयोगस्य परम् ।

१५ आदित्यवद्यौगपद्यम् ।

१६ शब्दान्तरमविकारः ।

१७ नादवृद्धिः परा ।

१८ नित्यस्तु स्याद् दर्शनस्य परार्थत्वात् ।

१९ सर्वत्र यौगपद्यात् ।

२० संख्याऽभावात् ।

२१ अनपेक्षत्वात् ।

२२ प्रख्याऽभावाच्च योगस्य ।

२३ लिङ्गदर्शनाच्च ।

अधि० ७, ६ भाट्ट.

२४ उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ।

---

अधि० ५ चोदनाया धर्मे प्रामाण्यं इति कु । धर्मे चोदनाप्रामाण्यं इति भा–भाट्ट । इदमयुक्तं अन्वयस्य क्लिष्टत्वात् । धर्मे विधिप्रामाण्यं इति वि–ल । धर्मे वेदप्रामाण्यं इति सा–शा । इति द्वयमपि तथैव । धर्मे वेदस्य स्वतः प्रामाण्यं इति वृ । शब्दस्य स्वतः प्रामाण्यं इति बिन्दुः ।

सू० ५ (१) शो व्य इति चिन्तामणिः । अयुक्तोऽयं पाठो मुद्रकदोषात् शोधकदोषाद्वा संपन्नो नानेन मणिकारस्य संबन्धः । (२) रेकोऽथे इति क–वृ । कस्तूरिवृत्तिमूले समुच्चयबोधकाश्चशब्दाः प्रायेण प्रत्याख्याता एव । आवश्यकस्तु वर्तत एव ।

अधि० ६ शब्दनित्यत्वं इति भा–वि–भाट्ट–वृ–ल–कु । शब्दस्य नित्यता इति सा । शब्दानित्यता इति शा तु विरोधग्रस्ता, हस्तदोषस्तु संभवति ।

सू० ९ (१) रे यौ इति भाट्ट–क–वृ ।

सू० १० (१) वृसूत्रे चशब्दो नास्ति । मूले तु 'इतोऽप्यनित्यः' इत्यवतरणात् चशब्दः स्यात् ।

सू० १६ (१) वर्णान्तर इति भाट्ट–क–वृ–य–कु–भिन्नेषु । 'शब्दान्तरमिकाराद् यकारः' इति किल भाष्यपङ्क्तिः । तेन भाष्येऽपि भाट्टवदेव पाठो युक्त इति गम्यते ।

सू० १७ (१) द्धिप इति वृ–य–कुभिन्ने । अत्र भाष्यपङ्क्तिः 'तेन नादस्यैषा वृद्धिर्न शब्दस्य' इति । तेन तर्कयामहे भाष्येपि 'द्धिः प' इत्येव पाठम् ।

सू० २२ (१) प्रेक्षाभावात्तु संयोगस्य इति य । प्रेक्षभावाच्च संयोगस्य इति कु । (२) योग्यस्य इति भाट्ट–शा–वृ–क–कुपाठान्तरम् । अत्र भा–क–वृ–कु इत्येतेषां व्याख्यातॄणां अभावपदे पक्षपातः, कस्तूरिवृत्तौ तु प्रख्यायाः उपलब्धेः सद्भावात् इत्येव स्पष्टं व्याख्यानात् तस्या भावपदे पक्षपातः । वयं तु 'भूयसां स्यात् सधर्मत्वं' इतिन्यायेन योगपदस्य संयोगपदस्य वा प्रख्याऽभावाच्च योगस्य इतिरीत्या लेखं आवश्यकं मन्यामहे । योगस्य संयोगस्येत्यर्थः । य–कुपाठस्तु संयोगस्य इत्येव ।

अधि० ७ पदार्थमूलतया वाक्यार्थप्रामाण्यं इति भा । प्रत्यायको वेदः इति वि । वेदप्रत्यायकत्वं इति वि–शा–कु । वेदस्यार्थप्रत्यायकत्वं इति सा–वि–भाट्ट–बिन्दु–वृ–ल ।

सू० २४ (१) वा रच इति वृ । वा व इति चिन्तामणिपाठो न युक्तः ।

२५ तद्भूतानां[1] क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ।

२६ लोके[1] सन्नियमात्[2] प्रयोगसंनिकर्षः स्यात् ।

अधि० ८, ७ भाट्ट.

२७ वेदांश्चैके[1] संनिकर्षं पुरुषाख्याः ।

२८ अनित्यदर्शनाच्च ।

२९ उक्तं तु शब्दपूर्वत्वम् ।

३० आख्या[1]: प्रवचनात् ।

३१ परं तु श्रुतिसामा[1]न्यमात्रम् ।

३२ कृते वा[1] [2]विनियोगः स्यात् कर्मणः संबन्धा[3]त् ।

भाष्यकारेण पादेऽत्र न्याया अष्टौ प्रकीर्तिताः ।
* अथातो वृद्धिरनपेक्षत्वात् परं द्वात्रिंशत् ।

॥ इति प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥

* * *

अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

अधि० १.

१ आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ।

२ शास्त्रदृ[1]ष्टविरोधाच्च ।

३ तथा फलाभावात् ।

४ अ[1]न्यानर्थक्यात् ।

---

सू० २५ ( १ ) वार्तिके पृ. १०५ पं. १९ इत्यत्र तत्कृतानां क्रियार्थेन इति पठितं तत्तु लेखकप्रमादात् स्यात् । अनेकत्र तद्भूतानां इत्येवोल्लेखात् ।

सू० २६ ( १ ) ' लोके संनिकर्षात् सन्नियमः प्रयोगः स्यात् ' इति पाठं गृहीत्वा भाष्ये व्याख्यातं इति प्राभाकराः । अत्र सतां नियमः निबन्धनं सन्नियमः इत्यर्थो भाति, न तु सं सम्यक् नियमः संनियमः इति । इद च संनियमः इतिमुद्रणाभावविशिष्टसन्नियम इतिमुद्रणमात्रप्रमाणकम् । मुद्रणप्रामाण्यं तु अत्र स्वतो ग्राह्यम् । विद्वत्संशोधककत्वात् इति चानुमानात् परतोऽपि । उभयथापि अर्थसंभवे मुद्रणे अप्रामाण्यग्रहकारणाभावश्च । (२) यमनात् इति वि–शा–चौटि–कुटि ।

अधि० ८ वेदस्यापौरुषेयत्वं इति सा । वेदापौरुषेयत्वं इति भा–वि–भाट्ट–शा–बिन्दु–वृ–ल–कु ।

सू० २७ ( १ ) चशब्दो नास्ति–क । अयं पाठः साधीयांश्चकाररहितः । पूर्वपक्षसूत्रमिदं प्रथममेव, तत्र चशब्दः किं ब्रूयात् लक्षयेद्वा ?

सू० ३० ( १ ) ख्याप्र इति वि–शा–ल -चौ भिन्ने । ' वेदांश्चैके संनिकर्षं पुरुषाख्याः ' १।१।२७ इति सूत्रानुसारात् अत्र सूत्रे आख्याशब्दो बहुवचनान्त एव स्यात् । वि–शा–ल– पाठाश्चानुकूलाः ।

सू० ३१ ( १ ) मान्यम्–इति भाट्ट–क–वृ–कु । यद्यपि कस्तूरिवृत्तौ समानत्वं इत्येव पदं वर्तते, न 'सामान्यं' इति तथापि भाट्ट–वृ–कु–पाठानुसारेण समानत्वपदं सामान्यपदव्याख्यानमित्यर्थापत्तिः । यदि तु समानत्वपदे एव कस्तूरितात्पर्यमित्याग्रहः तर्हि हृष्याम एव ।

सू० ३२ ( १ ) वाशब्दो नास्ति–क । (२) वा नि इति–वृ–सूत्रे, व्याख्यायां तु 'वा विनि ' इत्येव । ( ३ ) समत्वात् इति य–कु ।

* यपुस्तके प्रतिपादं सूत्रसंख्यानिश्चायकं दशकानां शृङ्खलं लिखितमुपलभ्यते । तदुपयुक्तत्वादस्माभिरपि प्रतिपादं दास्यते । सेयं पद्धतिः व्याकरणाष्टाध्यायीसूत्रपाठे सूत्रविंशतीना शृङ्खलवत्, तैत्तिरीयब्राह्मणारण्यकयोर्दशकवत् ज्ञेया । अथातो इत्यादिः प्रथमो दशकः, वृद्धिः द्वितीयो दशकः, अनपेक्षेत्यादिः तृतीयो दशकः, परं इत्यादिश्चतुर्थो दशकः। परंतु नायं पूर्णो दशकः किंतु द्वे एव सूत्रे । मिलित्वा द्वात्रिंशत् सूत्राणि प्रथमपादे सन्ति इति तदर्थः । एवमुत्तरत्रापि ज्ञेयम् ।

अधि० १ अकार्यबोधकवाक्यप्रामाण्यं इति शा । अर्थवादः इति भा–वि–भाट्ट–शा–ल–कु–कौ । अर्थवादस्य प्रामाण्यं इति सा ।

सू० २ ( १ ) दृष्टिवि इति वृ–कुटि ।

सू० ४ ( १ ) आन इति भाट्ट–वृ–कुटि । अत्र कस्तूरिवृत्तौ तदितरेषां नैष्फल्यप्रसङ्गात् इत्युक्तत्वात्, वृत्तौ च तदतिरिक्तानां यावतां कर्मणा वैयर्थ्यं इत्युक्तत्वात् अन्यानर्थक्यात् इत्येव पाठः तद्ग्रन्थकारसंमतः इति सिध्यति । आनर्थक्यात् इति मुद्रणं च लेखकादिप्रमाद इति प्रतीमः ।

५ अभागिप्रतिषेधाच्च[१] ।
६ अनित्य[१]संयोगात् ।
७ विधिना [१]त्वेकवाक्यत्वात् स्तुत्यर्थे[२]न विधीनां स्युः ।
८ तुल्यं च सांप्रदायिकम् ।
९ अप्राप्ता[१] चानुपपत्तिः, प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत[२] ।
१० गुणवादस्तु ।
११ रूपात् प्रायात् ।
१२ दूरभूयस्त्वात् ।
१३ स्त्र्य[१]पराधात्, कर्तुश्च पुत्रदर्शना[२]त् ।
१४ [१]आकालिकेप्सा ।
१५ विद्या[१] प्रशंसा ।
१६ सर्वत्वमाधिकारिकम् ।

सू० ५ ( १ ) चशब्दो नास्ति क-वृ-कु-वा-सु-कौ । अत्र कुतूहले इतोऽप्येवमित्याह इति सूत्रावतरणात् सूत्रे चशब्द आवश्यकः सिध्यति । अमुद्रणं तु प्रमादात् ।

सू० ६ ( १ ) त्यदर्शनात् इति क ।

सू० ७ ( १ ) कस्तूरिवृत्तौ तुशब्दो न व्याख्यातः तथापि सिद्धान्तमाह इत्यवतरणात् तुशब्दो विवक्षितः स्यात् । ( २ ) स्तुत्यर्थत्वे इति वा । यद्यपि वा-भिन्नेषु सर्वेष्वेव पुस्तकेषु शारीरकभाष्यादौ च स्तुत्यर्थेन इत्येव पाठः तथापि अर्थदृष्ट्या स्तुत्यर्थत्वेन इत्येव पाठं युक्तं प्रतीमः । अतदर्थानां विधिस्तुत्यर्थत्वेन हेतुना विधिना एकवाक्यत्वं इति समीचीना अर्थप्रतीतिः । स्तुत्यर्थेन इति सार्वत्रिकपाठे तु भावप्रधानो निर्देशः इति स्वीकार्यं भवति ।

सू० ९ ( १ ) अत्र वार्तिकं, त्रयोऽत्रपाठाः अप्राप्ता चानुपपत्ति इत्यत्र मन्यामहे इति वाक्यशेषः । अप्राप्त चानुपपत्तिं इत्यपरः, तत्र अस्मद्व्याख्यानं इत्यध्याहारः । अप्राप्ता चानुपपत्तिः इत्यपरः, तत्र अस्मत्पक्षे विज्ञेया इति ( अध्याहारः ) । (२) वृसूत्रे उपपद्येत इति, वृमूले तु उपपद्यते इति पाठः । उपपद्यते इति य-कु-कौ ।

सू० १३ ( १ ) अपराधात् इत्येव, स्त्रीपदं नास्ति म-सा-वि-शा-ल-चौ-कुटे । परंतु भाष्यमूले ' स्त्र्यपराधेन ' इति, वार्तिके च ' स्त्र्यपराधनिमित्तं' इति विवरणात् कस्यापराध इति साकाङ्क्षत्वाच्च स्त्रीशब्द आवश्यक एव । (२) नं इति कु-कौभिन्ने । अत्र भाष्ये स्त्र्यपराधेन कर्तुश्च पुत्रदर्शनेन इति उभयत्रापि हेत्वर्थे तृतीया स्पष्टा । तेन यथा स्त्र्यपराधात् इत्यस्य तृतीयान्तेन व्याख्या, तथा पुत्रदर्शनेन इति तृतीयान्तेन व्याख्या इति पञ्चम्यन्तस्यैव पाठः स्यात् इति अनुमिमीमहे । तेन पुत्रदर्शनात् इति पञ्चम्यन्त पाठ एव भाष्यमतेन सिद्धो भवतीति कल्पयामो वयम् ।

सू० १४ ( १ ) आका, अका, इतिपाठद्वयं वा-सु-कौ । तत्र वार्तिकं " यत्तदानीमेवोत्पद्यते तत् आकालिकं, ... पाठान्तरं ' आकालिकडाद्यन्तवचने ' इति । अकालिकमिति वा पाठः । काल इति लोके विप्रकर्ष उच्यते । तत्र भवं ' कालाठञ् ' इति ठञि कालिकं, न कालिकं अकालिकं इति " ।

सू० १५ ( १ ) कौस्तुभे एव पदभेदेन मुद्रणम् । अन्यत्र तु सर्वत्रैव ऐकपद्येन मुद्रणम् । तत्र सुबोधिनीवृत्तौ कस्तूरिवृत्तौ च षष्ठीतत्पुरुषेण कुतूहलवृत्तौ च तृतीयातत्पुरुषेण व्याख्यानात् युक्त एव ऐकपद्येन पाठः । अत्र सुधा 'अनेन सूत्रेण याऽसौ गर्गत्रिरात्रवेदानुमन्त्रणविद्या मुखशोभावाजिमत्त्वहेतुत्वेनोक्ता सा गर्गत्रिरात्रवेदानुमन्त्रणयोः प्रशंसा इत्युच्यते इति गर्गत्रिरात्रविधेः इत्यादिना भाष्येणोक्तम् ' इति । अत्र विद्याशब्दप्रशंसाशब्दयोः सामानाधिकरण्यं व्याख्यातम् । कौस्तुभेऽपि तत् स्पष्टम् । तेन पदद्वयमेव असमस्तं स्वीकार्यं इति व्यक्तम् । इति पदद्वयं छित्त्वैव मुद्रणं शुद्धम् । तत्तु भाष्यादिग्रन्थेषु न कृतमिति स दोष एव ।

१७ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः सारतो वा फलविशेषः स्यात्।
१८ अन्त्ययोर्यथोक्तम्।

अधि० २.

१९ विधिर्वा स्यादपूर्वत्वाद्, वादमात्रं ह्यनर्थकम्। २ बिन्दुः.
२० लोकवदिति चेत्।
२१ न पूर्वत्वात्। २० य-कु.
२२ उक्तं तु वाक्यशेषत्वम्। २१ य-कु.
२३ विधिश्चानर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम्। २२ य-कु.
२४ प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति। २३ य-कु.
२५ विधौ च वाक्यभेदः स्यात्। २४ य-कु.

अधि० ३.

२६ हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्। २५ य-कु, ३ बिन्दुः.
२७ स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य। २६ य-कु.
२८ व्यर्थे स्तुतिरन्याय्येति चेत्। २७ य-कु.
२९ अर्थस्तु विधिशेषत्वाद् यथा लोके। २७ य-कु.
३० यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात्। ३०-३२ भाट्ट-कौ, २८ य-कु.

---

सू० १७ (१) तः इति कुटिभिन्ने। तः सारतो वा फ इति तु कुटि। अत्र 'परिमाणतः सारतो वा फलविशेषात्' इति भाष्यपङ्क्तिः स्पष्टा। तेन भा-सूत्रेऽपि कुटिवदेव पाठ आवश्यकः सिध्यति। सुधायां तु 'असारद्रव्यदानेनापि क्रतुसिद्धौ सारद्रव्यदाने प्रवृत्त्ययोगात् सूत्रातिरेकेण भाष्ये सारग्रहणं' इत्युक्तम्। तत्र सारद्रव्यदाने समर्थस्य असारद्रव्यदाने दोषप्रसङ्गात् सुधोक्तदोषप्राप्तेरभावात् सूत्रानुसारेणैव सारग्रहणं भाष्ये संभवति इति वयं प्रतीमः।

अधि० २ औदुम्बर इति भा-कु-कौ। विधिवन्निगदः इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कु।

सू० १९ (१) शास्त्रदीपिकाया ५१५ पृष्ठे विधिरर्थवत्त्वाद्वादमात्रं ह्यनर्थकं इति लिखितं, अत्र स्वस्थले तु भाष्यवदेव। शास्त्रदीपिकाकारस्य तादृश एव पाठः कदाचित् संमतः स्यात्। (२) अपूर्वत्वात् इति पदं नास्ति क।

सू० २० (१) चेदन्तमुत्तरेणैकं य-कु।

सू० २१ (१) पूर्ववत्त्वात् य-कु। अत्र भाष्ये विदितपूर्वा अर्था उच्यन्ते इति विवरणं, सुबोधिनीवृत्तौ प्रत्यक्षादिगम्यत्वात् इति विवरणं, कस्तूरिवृत्तौ प्रत्यक्षादिप्रमाणान्तरावगतत्वात् इति विवरणं, कुतूहलवृत्तौ प्रमाणान्तरविदितत्वात् इति विवरणम्। एवं सति पूर्वत्वात् इति वा पूर्ववत्त्वादिति वा पाठः इति निर्णेतुं न पार्यते।

सू० २४ (१) णेन सं इति भाट्ट। णे च सं इति वृ-कु-सु-कौ। चोऽवधारणे इति कुतूहले चशब्दो व्याख्यात एव। (२) कर्षः क इति कौ। अत्र कौस्तुभे श्रीचिन्नस्वामिना टिप्पणी, 'यद्यपि अपकर्षो न कल्प्येत इत्येव सर्वत्र पाठः समुपलभ्यते तथापि हस्तलिखितकौस्तुभपुस्तकयोः नञ्रहितस्यैव पाठस्य दर्शनात् तथैव ग्रन्थकृता व्याख्यातत्वाच्च स एव पाठो निवेशितो मया' इति। (३) कल्पेत इति वृ-य-कु। न कल्पेत न समर्थो भवेत् इति स्पष्टं विवरणं-कु।

अधि० ३ हेतुवन्निगद इति भा-म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कौ। हेतुः इति कु-कौ।

सू० २७ (१) ना त इति वि-शा। भाष्ये तु न च दर्वीपिठरादेश्चोदना इति चशब्दः स्पष्टः।

सू० २८ (१) अर्थे इति शा-ल। अयुक्तोऽयं पाठः। भाष्ये पूर्वतरसूत्रे 'व्यर्थे तस्मिन् शूर्पस्तुतिरनर्थिका स्यात्' इति शङ्काग्रन्थं लिखित्वा प्रकृतसूत्रं च विलिख्य 'इति पुनर्यदुक्तं तत् परिहर्तव्यं' इति लिखिमृत। (२) चेदन्तमुत्तरेणैकं य-कु।

सू० ३० (१) भाट्टदीपिकाकस्तूरिवृत्तिकौस्तुभेषु यदि च हेतुरवतिष्ठेत निर्देशात् ३०, सामान्यादिति

अधि० ४

३१ तदर्थशास्त्रात्। ३३ कौ, ३१ म-सा-वि-शा-वृ-ल-चौ-वा, २९ य-कु ४ बिन्दुः.
वाक्यनियमात्। ३४ कौ, ३२ म-सा-वि-शा-वृ-ल-चौ-वा.
बुद्धशास्त्रात्। ३५ कौ, ३३ म-सा-वि-शा-वृ-ल-चौ-वा.
अविद्यमानवचनात्। ३६ कौ, ३४ म-सा-वि-शा-वृ-ल-चौ-वा.
अचेतनेऽर्थबन्धनात्। ३७ कौ, ३५ म-सा-वि-शा-वृ-चौ-वा.
अर्थविप्रतिषेधात्। ३८ कौ, ३६ म-सा-वि-शा-वृ-ल-चौ-वा.
स्वाध्यायवद्[२]वचनात्। ३९ कौ, ३७ म-सा-वि-शा-वृ-ल-चौ-वा.
अविज्ञेयात्। ४० कौ, ३८ म-सा-वि-शा-वृ-ल-चौ-वा.
अनित्यसंयोगान्मन्त्रानर्थक्यम्।४१ कौ, ३९ म-सा-वि-शा-वृ-ल-चौ-वा.
३२ अविशिष्टस्तु वाक्यार्थः। ४२ कौ, ४०

---

चेत् ३१, अव्यवस्था विधीनां स्यात् ३२ इति सूत्रत्रयं छिन्नम्।

अधि० ४ मन्त्रः इति भा-कौ। मन्त्रलिङ्गं इति म-सा-वि-भाट्ट-शा-ल-कु। मन्त्राणामर्थप्रत्यायनार्थत्वं इति बिन्दु-वृ। अयुक्तमिदं, मन्त्राणां कर्माङ्गस्मारकत्वस्य सिद्धान्तितत्वात्, अर्थशब्देन च वाच्यार्थस्यैव प्रत्ययात्।

सू० ३१ (१) तनार्थ इति वा। हेतुवाक्यैक्यपक्षे अयमेव पाठो युक्तः। मूलसूत्रे सामासिकपदस्यैव विरचनात्। बुद्धिव्युत्पादनार्थं हेतून् भित्त्वा विवरणं इति पक्षेपि अयमेव पाठः स्वीकार्यः। सूत्रस्थं सामासिकं पदं प्रातिपदिकत्वेन गृहीत्वा तस्य पञ्चम्यन्तताकरणमात्रस्य युक्तत्वात्। मूलत एव सूत्रभेदपक्षे तु उभयथापि पाठः स्वीकारार्हः। भाष्ये तावत् 'अचेतनेऽर्थे अर्थं निबध्नन्ति ओषधे त्रायस्वैन इति' इति व्याख्यापङ्क्तिः। अत्र वाक्यद्वयं एकं तावत् अचेतने अर्थे ओषधे त्रायस्वैनं इति निबध्नन्ति इति। द्वितीयं तु अचेतने अर्थं निबध्नन्ति ओषधे इत्यादि इति। प्रथमे वाक्ये अचेतनश्चासौ अर्थश्च, तस्मिन् बन्धनं इति समासो विवक्षितः इति सामासिकपदात्मकं प्रकृतसूत्रं सिध्यति। द्वितीये तु वाक्ये अचेतने इति पृथक् पदं, तस्य अर्थविशिष्टबन्धने एव अन्वयः इति असमस्तपदात्मकं प्रकृतसूत्रं इति सिध्यति। भाष्ये वाक्यद्वयकल्पनां विना अर्थे अर्थं इति भिन्नविभक्तिकपदद्वयप्रयोगवैयर्थ्यं प्रसज्येत। कुतूहले तु सूत्रलेखे अचेतनेऽर्थबन्धनात् इति विन्यासः व्याख्यायां तु अचेतनार्थबन्धनात् इति विन्यासः। पुनश्च क्वचिद्भाष्यपुस्तकेषु अचेतने अर्थबन्धनात् इति अचेतनपदं सप्तम्यन्तं विगृह्यैव पठ्यते (विगृह्य भित्त्वा इत्यर्थः) अचेतनार्थबन्धनात् इति क्वचित् समस्तपाठो दृश्यते, इत्याद्युक्तं तत्र। भाट्टदीपिकायां अचेतनेऽर्थबन्धनात् इति महासूत्रे विन्यस्तम्। कस्तूरिवृत्तौ तु अचेतनार्थबन्धनात् इति विन्यासः। इतरग्रन्थेषु अचेतनेऽर्थ इत्येव विन्यासः। एवं च उभयथा पाठः। (२) वद् व इति वि-शा-ल-चौ। अयुक्तोऽयं पाठः। (३) अनित्यसंयोगात् एतावदेव सूत्रं वा। तत्तु अयुक्तं प्रतिज्ञाऽभावप्रसङ्गात्। अत्रेदमवधेयम्। भाष्ये तदर्थशास्त्रात् इत्यादीनि पञ्चम्यन्तानि हेतुपदानि पृथगेवोपन्यस्तानि व्याख्यातानि च। अन्तिमं तु हेतुपदं साध्यपदसहितमुपन्यस्य ३१ इत्यङ्को निवेशितः। एकसूत्रत्वे च न किमप्युक्तम्। आनन्दाश्रमीयवार्तिकेपि एकसूत्रत्वे न किमप्युक्तम्। परंतु ३२ सूत्रीयवार्तिके 'न च बुद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनात् मन्त्रार्थोप-(र्थानुप) योगः इति पङ्क्तिः। तथा च कथंचित् एकसूत्रत्वप्रमावान् वार्तिककारः इत्यनुमातुं शक्येत। एतेन चौखम्बावार्तिकमपि व्याख्यातम्। परंतु चौखम्बावार्तिकपुस्तके सूत्राङ्का भिन्ना एव निवेशिताः। मन्त्रानर्थक्यं इति पदं च न क्वापि सूत्रे

म-सा-वि-शा-वृ-ल-चौ-वा-सु, ३४ भाट्ट, ३० य-कु.

मुद्रितं इति विशेषः । म-सापुस्तकयोः भिन्नान्येव सूत्राणि भिन्नवर्धमानाङ्कानि मुद्रितानि, अनित्यसंयोगान्मन्त्रानर्थक्यं इति च अन्तिमं सूत्रं मुद्रितम् । सुधायां तु 'तदर्थशास्त्रवाक्यनियमबुद्धशास्त्राविद्यमानवचनाचेतनार्थबन्धनार्थविप्रतिषेधस्वाध्यायवदवचनाविज्ञेयानित्यसंयोगान्मन्त्रानर्थक्यम्' इति सूत्रं निवेश्य ३१-३९ इत्यङ्कौ आदिमान्त्यौ सचिह्नौ मुद्रितौ। अविशिष्टस्तु इत्युत्तरसूत्रे च ४० अङ्को मुद्रितः । तत्र '३१-३९' इत्यङ्कमुद्रणे भाष्यवार्तिकयोः सूत्रभेदाङ्कभेददर्शनमेव निदानम् । कुतूहले तु सुधावदेव सूत्रं केचिन्मतेन पाठान्तरत्वेनोपन्यस्य 'संयोगेभ्यो मन्त्रानर्थक्यं' इति हेतुवाक्यात्मकं सामासिकं पदं बहुवचनान्तमुपन्यस्तम् । युक्तं चैतत् । एकवचनपाठे तु समाहारस्वीकारप्रसङ्गः स चायुक्तो हेतुभेदस्य विवक्षितत्वात् । कुतूहलस्य स्वमतेन तु 'तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानवचनादचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम्' इति सूत्रमुपन्यस्तं तत्र । व्याख्यावसरे च पुनः 'विगृह्य सूत्रपाठः' 'समस्तपाठः' इति पक्षद्वयमुक्तम् । भाट्ट-क-य पुस्तकेषु विगृह्य सूत्रपाठः, अन्ते च मन्त्रानर्थक्यं इति पदम् । वि-शा-वृ-ल-चौपुस्तकेषु तु हेतुवाक्यानां नवानां भिन्नसूत्रता भिन्नवर्धमानाङ्कवत्ता अन्तिमहेतुवाक्ये साध्यबोधकपदवत्ता चेति विशेषः ।

अत्र सुधायामिदमुक्तं तदर्थसूत्रे, ग्रन्थान्तरेष्वदर्श्यैकं सूत्रं तत्सिद्धिसूत्रवत् (१।४।२३) । व्याख्यायै खण्डशोऽकारि भाष्यकारादिभिस्त्विदम् ॥ इति । भाट्टटिप्पणी चैवं 'मन्त्रानर्थक्यमित्यस्य एकसूत्रत्वेऽपि व्याख्यासौकर्यार्थं खण्डशः प्रत्येकं पञ्चम्यन्तसूत्रावयवोपन्यासः इति कौस्तुभानुसारात् एकसूत्रमेवेदमिह कृतम्' इति । कौस्तुभे च तदर्थशास्त्रात् इति सूत्रे सा पङ्क्तिः आदावेव दृश्यते या भाट्टटिप्पण्यामुदाहृता । परंतु कौस्तुभपुस्तके वि-शा-वृ-ल-चौवदेव सर्वम् ।

संक्षेपतस्तु भाट्ट-क-य-कु-सु इति पञ्चसु पुस्तकेषु 'तदर्थ-आनर्थक्यं' इत्येकमेव सूत्रं, इतरेषु दशसु पुस्तकेषु भिन्नान्येव सूत्राणीति । तत्रापि समस्तसूत्रपक्षः सुधायां, विगृह्य एकसूत्रपक्षः भाट्ट-यपुस्तकयोः, कुपुस्तके तु उभयथा इति ।

अत्र किंचिद्विचारयामः सुधापाठो वा युक्तः भाट्ट-क-य-कुपाठो वा युक्त इति । तत्र सुधापाठमेव युक्तं प्रतीमो न भाट्टादिपाठम् । कौस्तुभग्रन्थस्तावत् 'खण्डशः प्रत्येकं पञ्चम्यन्तसूत्रावयवोपन्यासः' इति । नहि पञ्चम्यन्ततामत्यक्त्वा पञ्चम्यन्तानामेव हेतुवाक्यानां भिन्नानां सतां केवलसंहितया उच्चारणे मुद्रणे वा सूत्रैकत्वपक्षः सिध्यति सिध्यन्नपि च प्रेक्षावतां न मनःसंतोषाय प्रभवति । प्रत्येकं पञ्चम्यन्तसूत्रोपन्यासः इत्यत्र च सूत्रावयवोपन्यासमुद्दिश्य प्रत्येकवृत्तित्वविशिष्टपञ्चम्यन्तत्वं विधीयते। सूत्रावयवत्वस्य उपन्यासस्य च सिद्धत्वात्, प्रत्येकं पञ्चम्यन्तत्वस्य चाज्ञातत्वेन विधेयत्वात् । अथवा पञ्चम्यन्तत्वमपि उद्देश्यगतमेव । तस्यापि अनित्यसंयोगात् इत्यत्र एकदेशे सिद्धत्वात् । प्रत्येकविशिष्टत्वमेव तु असिद्धत्वात् विधेयम् । सामानाधिकरण्येन साध्यसिद्धावपि अवच्छेदकावच्छेदेनानुमितेः सर्वतन्त्रसिद्धत्वात् । भाट्टटिप्पणीकारस्तु प्रत्येकं ये पञ्चम्यन्ताः सूत्रावयवाः तेषां पञ्चम्यन्तानामेव सतां केवलं संहितया उपन्यास एव एकसूत्रत्वं नामेति मेने। तच्चायुक्तम् । इदं तु अवधेयम्। सु-पाठे स्वाध्यायवदवचन इति पदं सामासिकमेव स्वीकार्यं विपक्षे महासमासासंभवात् । क-वृ-वापाठे भाष्यादिपाठे वा स्वाध्यायवदवचनात् इत्यत्र स्वाध्यायवत् इतिपदस्य अवचनपदेन समस्तत्वासमस्तत्वे संशयः । वयं तु समस्तत्वमेव मन्यामहे । स्वाध्यायस्य यथा वचनं कण्ठगतत्वप्रयोजकोच्चारणमात्रफलकं तथा अनुष्ठानेऽपि मन्त्राणाम् । स्वाध्यायाध्ययनवत् अर्थप्रकाशनवचनस्य अभावात् इति पूर्वः पक्षः । अत्र स्वाध्यायवत्पदस्य वचनेनैवान्वयः न तु वचनाभावेन साकम् । न च विना समासं तथाऽन्वयः संभवति ।

३३ गुणार्थेन[1] पुनः[2] श्रुतिः । ४३ कौ, ४१ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ३५ भाट्ट, ३१ य–कु.

३४ परिसंख्या । ४४ कौ, ४२ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ३६ भाट्ट, ३२ य–कु.

३५ अर्थवादो वा । ४५ कौ, ४३ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ३७ भाट्ट, ३३ य–कु.

३६ अविरुद्धं परम् । ४६ कौ, ४४ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ३८ भाट्ट, ३४ य–कु.

३७ संप्रैषे[1] कर्मगर्हाऽनुपालम्भः[2] संस्कारत्वात् । ४७ कौ, ४५ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ३९ भाट्ट, ३५ य–कु.

३८ अभिधानेऽर्थवादः । ४८ कौ, ४६ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ४० भाट्ट, ३६ य–कु.

३९ गुणाद[1]विप्रतिषेधः स्यात् । ४९ कौ, ४७ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ४१ भाट्ट, ३७ य–कु.

४० विद्या[1]ऽवचनमसंयोगात् । ५० कौ, ४८ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ४२ भाट्ट, ३८ य–कु.

४१ सतः परमविज्ञानम् । ५१ कौ, ४९ म–सा–वि–शा–वृ–ल–चौ–वा–सु, ४६ भाट्ट, ३९ य–कु.

४२ उक्तश्चानित्यसंयोगः । ५२ कौ, ५० म–सा–वि–शा–वृ–ल–चौ–वा–सु, ४४ भाट्ट, ४० य–कु.

---

सू० ३३ (१) णार्था वा पु इति भाट्ट-क-कौ । (२) नःश्रु इति भाट्ट-क-शा-वृ-कौ ।

सू० ३७ (१) प्रैषक इति कु । (२) नुपल इति भाट्ट-शा-ल-चौ । अत्र विचार्यते । अत्र सूत्रे प्रथमे भागे पाठत्रयमुपलभ्यते । संप्रैषकर्मगर्हानुपालम्भः इति एकत्र कुतूहले एव पाठः । संप्रैषे कर्मगर्हानुपलम्भः इति भाट्ट-शा-ल-चौ इति चतुर्षु पाठः । अवशिष्टेषु दशसु पुस्तकेषु संप्रैषे कर्मगर्हानुपालम्भः इति पाठः । वयं तु संप्रैषे, कर्मगर्हा, अनुपालम्भः इति पदत्रयात्मकं सूत्रं प्रतिजानीमहे । तथाहि, भाष्येण तावत् प्रकृतः सूत्रांशो नैव स्पृष्टः साक्षात् । एतेन म-सा व्याख्यातौ । वि-भाट्ट-शा-ल-चौ-य एतेषु व्याख्यैव नास्ति इति सन्तु ते । वार्तिके तावत् येयं संप्रैषे अग्नीदग्नीनित्यत्र बुद्धबोधनासंभवात् अभिधानकर्मगर्हा अभिहिता साऽपि अनुपालम्भः स्मरणसंस्कारार्थत्वात् इति व्याख्यातं इति नास्ति शङ्का । अथ सुधायां " अथेति भाष्येण बुद्धशास्त्रानर्थक्याशङ्कानुभाषणार्थत्वेन संप्रैषे कर्मगर्हा इति सूत्रावयवं व्याख्याय ' तन्न ' इत्यनेन च ( भाष्येण ) परिहारप्रतिज्ञार्थत्वेन अनुपालम्भः इति सूत्रावयवं व्याख्याय " इत्युक्तम् । कौस्तुभकुतूहले अप्येवम् । भाट्ट-शा-ल-चौ पाठस्तु कर्मगर्हायाः अनुपालम्भः प्राप्तिर्न भवति इत्यर्थकत्वेन स्वीकार्यः । कुतूहलपाठस्तु संप्रैषात्मकस्य कर्मणः गर्हा अनुपालम्भः इति व्याख्येयः ।

सू० ३९ (१) दप्र इति वि-शा-ल-चौ । प्रतिषेधविप्रतिषेधयोर्भेदात् प्रकृते च विप्रतिषेधस्यैव शङ्कितत्वात् नायं पाठः साधुः ।

सू० ४० (१) द्याऽव इति कौ । इतरत्र तु क्वापि अवग्रहो न मुद्रितः । सुधा तु ' यत्तु इत्यादिना भाष्येण विद्याकाले संनिहितस्याप्यर्थस्य यदवचनमनभिधानं तत् तस्य कर्माङ्गत्वाद् युक्तं इति सूत्रं व्याख्यातं ' इति । तेन अकारप्रश्लेषोऽत्र निश्चीयते । ' विद्यावचनं ' इति अवग्रहादाने तु संशयो भवति वचनं वा अवचनं वा इति । संशयस्थले च अवश्यं तन्निरासार्थं किमपि कर्तव्यमिति तदकरणं अनवधानमूलकमेव ।

४३ लिङ्गोपदेशश्च तदर्थवत् । ५३ कौ, ५१ म-सा-वि-शा-वृ-ल-चौ-वा-सु, ४५ भाट्ट, ४१ य-कु.

४४ ऊहः । ५४ कौ, ५२ म-सा-वि-शा-वृ-ल-चौ-वा-सु, ४६ भाट्ट ४२ य-कु.

४५ विधिशब्दाश्च । ५५ कौ, ५३ म-सा-वि-शा-वृ-ल-चौ-वा-सु, ४७ भाट्ट, ४३ य-कु.

चत्वारोऽत्र नयाः पादे भाष्यकारेण वर्णिताः ॥
आम्नायस्य रूपा-दुक्तं गुणार्थेन लिङ्गोपदेशस्त्रिचत्वारिंशत् ॥

॥ इति प्रथमाध्यायस्य द्वितीयःपादःसमाप्तः ॥

* * *

॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

अधि० १.

१ धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ।

२ अपिवा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् ।

अधि० २.

३ विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् । २ बिन्दुः.

---

सू० ४३ (१) र्थत्वात् इति वि-शा-वृ-ल-चौ-कुटि । सुबोधिनीवृत्तौ तदर्थत्वात् देवतातद्धितार्थत्वात् इति व्याख्यातम् । अन्यत्र तु तदर्थवत् इति पाठः । तत्रापि समस्तत्वमसमस्तत्वं चेति मतभेदः । सुधायां तावत् ' तेषां मन्त्राणां अर्थो यथा अस्ति तथा लिङ्गोपदेशो भवति इति सूत्रव्याख्यानार्थं आग्नेय्या इति भाष्यं व्याचष्टे ' इति वार्तिकमवतारितम् । सामासिकत्वं वत्यन्तत्वं च स्वीकृतम् । कस्तूरिवृत्तौ कुतूहले च तन्मन्त्रजातं अर्थवत् विवक्षितार्थकं इत्युक्तम् । तेन पदभेदः मत्वन्तत्वं च स्वीकृतं इति स्पष्टम् ।

सू० ४५ (१) शब्दश्च इति भाट्ट-क-वा-सु-कौ । अत्र भाष्यं, विधिशब्दाश्च विवक्षितार्थानेव मन्त्रान् अनुवदन्ति इति । तथाच स्पष्टं बहुवचनम् । वार्तिकं, विधिरेवच ब्राह्मणाभिधः.... अर्थप्रकाशनपरत्वं दर्शयति इति । तथा च एकवचनं स्पष्टम् । सुधायां तु ' भाष्यकारेण विधिशब्दाश्च तदर्थवत् इति पूर्वसूत्रगतपदानुषङ्गेण सूत्रं व्याख्याय ' इत्युक्तम् । परंतु भाष्ये बहुवचनस्य अनुवदन्ति इति बहुवचनान्तक्रियापदसामानाधिकरण्येन स्पष्टत्वात् लेखकप्रमादमङ्गीकृत्य समाधातुं शक्यम् । वार्तिकं तु चिन्तनीयतामेव प्राप्नोति । वार्तिकमतेन तु एकवचनमेवेति वा समाधेयम् । सुबोधिन्यां सूत्रपाठे बहुवचनं मुद्रितम् । व्याख्यायां तु विधिश्च क्वचिदर्थवादश्च मन्त्रस्यार्थवत्त्वसाधकः इत्युक्तं इति स्वविरोध । कस्तूरिवृत्तौ विधिशब्दश्च ब्राह्मणरूपः तन्मन्त्रवाक्यमर्थवत् इति गमयति इत्युक्तम् । कुतूहले तु विधिर्विधानं व्याख्यानं तदर्थाः शब्दाः गमयन्ति इत्युक्तम् । सर्वथापि विधिशब्दस्य एकवचनान्तता बहुवचनान्तता च मतभेदग्रस्ता ।

अधि० १ स्मृतिः इति भाट्ट-कु-कौ । स्मृतिप्रामाण्यं इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कु-सु । स्मृत्याचारप्रामाण्यं इति भा ।

सू० १ (१) पेक्ष्य इति वि-सोम-बिन्दु-वृ-ल-चौ-कु । पेक्षे इति शा । परंतु हस्तदोषोयं, १।३।३ सूत्रेऽनेपक्ष्यं इति पाठात् ।

सू० २ (१) अपिवा इत्येकपद्यं वि-शा-क । इतरत्र तु अपि वा इति पार्थक्यम् ।

अधि० २ बाह्यग्रन्थानामप्रामाण्यं इति वार्तिकम् । विरोधः इति भाट्ट-कु-कौ । शाक्यादिग्रन्थानामप्रामाण्यव्यवस्थापनं इति भाट्ट । श्रुतिप्राबल्यं इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कु । श्रुतिविरुद्धस्मृतीनामप्रामाण्यं इति वार्तिकम् । स्मृतिविरुद्धस्मृत्यप्रामाण्यं इति भा ।

सू० ३ (१) पेक्ष्यं इति म-सा-वि-शा-बिन्दु-वृ-ल-चौ-य-कुटि ।

अधि० ३ भा–भाट्ट–कौ–भिन्नाः ।

४ हेतुदर्शनाच्च ।

अधि० ३ भा–भाट्ट–कौ ।

५ शिष्टाकोपेऽविरुद्धमिति चेत् ।४ बिन्दुः.

६ न शास्त्रपरिमाणत्वात् ।

७ अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् । ६ भाट्ट–क–य–कु, ४ बिन्दुः.

अधि० ४. भा–भाट्ट–क–कौ, ५ इतरे.

८ तेष्वदर्शनाद् विरोधस्य समा विप्रति-

अधि० ३ हेतुदर्शनाच्चेति सूत्रं पूर्वाधिकरणगुणसूत्रत्वेन व्याख्याय 'अधिकरणान्तरं वा' इत्युक्त्वा अधिकरणान्तरपरत्वेनापि व्याख्यातं, तथापि भा–संशोधकैः अधिकरणाङ्को न वर्धितः भाट्टकौस्तुभयोरप्येवं शिष्टाकोपाधिकरणमेवतु तृतीयत्वेन स्वीकृतम् । म–सा–वि–शादौ तु हेतुदर्शनात् इति तृतीयं शिष्टाकोपं चतुर्थं इति स्वीकृतम् । तेन उत्तराधिकरणमारभ्य म–सा–वि–शादौ अधिकरणाङ्क एकेनाधिकः । दृष्टमूलकस्मृत्यप्रामाण्यं इति म–सा–वि–शा–त्रृ ल–कु–सु । लोभादिदृष्टमूलकस्मृत्यप्रामाण्यं इति बिन्दुः ।

अधि० ३ । २ क्रमतः पदार्थप्राबल्यं इति बिन्दुः । अत्र धर्मात् धर्मी प्रबलः इति प्रतिपाद्यम् । क्रमश्च धर्मः पदार्थश्च धर्मी इति तावत् युक्तं परं च धर्मधर्मिशब्दौ पदार्थधर्मपदार्थशब्दौ वा यथा प्रतियोग्यनुयोगिबोधकौ न तथा क्रमपदार्थशब्दौ । इति धर्मविशेषबोधकक्रमशब्दप्रयोगो न हृदयंगमः । पदार्थप्राबल्यं इति म–सा–वि–शा–त्रृ–ल–कु–सु । अत्र पदार्थस्य प्राबल्यं किमपेक्ष्येति नोक्तं इति किंचिदिव न्यूनता । तथापि संक्षेपापेक्षया न दोषः । वसन्तोत्सवाद्याचाराणां प्रामाण्यव्यवस्थापनं इति भाट्टे वर्णकान्तरम् । विरोधः इति कु । वेदविरुद्धशाक्यवचनस्यापि प्रामाण्यनिरासः इति भाट्टे वर्णकान्तरम् । शाक्यस्मृत्यप्रामाण्यं इति वि–वर्णकान्तरम् । शिष्टाकोपः इति भा–भाट्ट–कौ । शिष्टाचारप्रामाण्यं इति वि–शावर्णकान्तरम् । सदाचारः इति कु । सदाचारप्रामाण्यं इति वार्तिक–बिन्दु–वर्णकान्तरम् ।

सू० ४ ( १ ) भाष्ये इदं सूत्रं पूर्वाधिकरणस्य गुणसूत्रत्वेन व्याख्याय पुनः 'अधिकरणान्तरं वा' इत्युक्त्वा व्याख्यातम् । अत एव इतरैश्चतुर्थमाधिकरणमेवास्मिन् सूत्रे स्वीकृतम् । कुतूहलेऽपि द्वितीयाधिकरणगुणसूत्रत्वेनेदं सूत्रं प्रथमतो व्याख्याय पुनः सूत्रं गृहीत्वा चतुर्थमधिकरणमारचितम् । भाष्यसंशोधकैरपि तथैव कर्तव्यं सन्न कृतमित्ययुक्तम् ।

सू० ५ ( १ ) पे वि इति वि–शा–ल–चौ–वा । तत्तु भाष्यादिविरुद्धम् । ( २ ) चेत् पदं नास्ति सा । तत्तु अयुक्तं 'इति चेत् पश्यसि' इति भाष्यात् । चेदन्तमुत्तरेणैकं य–कु–भाट्ट–क–बिन्दुः ।

सू० ६ ( १ ) त्वादिति इति सु । इति शब्दोऽयं न वस्तुतः सूत्रस्थः किंतु सुधास्थः । संशोधकस्तु बभ्राम ।

सू० ७ ( १ ) रन्निति इति वा–सु । अयमपि इति शब्दो न सूत्रस्थः ।

अधि० ४ आर्यम्लेच्छ इति वि–शा–ल–कु–चौ । आर्यम्लेच्छप्रयोगविप्रतिपत्तिबलाबलं इति वार्तिकम् । ऐक्षवी इति वार्तिकं–भाट्ट । त्रिवृच्चर्वाश्ववाल इति वि–शा । त्रिवृच्चर्वाश्ववालादिशब्दविचारः इति भाट्ट । त्रिवृत् इति कु । पीलु इति वि–शा–कौ । यववराह इति भाट्ट–कु–कौ । लोकवाक्यशेषयोर्विरोधे बलाबलं इति वार्तिकम् । शास्त्रप्रसिद्धपदार्थप्रामाण्यं इति म–सा–वि–भाट्ट–शा–बिन्दु–त्रृ–ल–सु । प्रामाण्यं इत्यस्य प्रमाणत्वं इत्यर्थकत्वे इन्द्रियाणां च व्याप्तिज्ञानादीनां च पदार्थानां यद्यपि विद्यत एव प्रामाण्यं परंतु न तदत्र प्रतिपाद्यते । नापि ते शास्त्रप्रसिद्धा एव । प्रामाण्यं च नैवात्र कस्यापि प्रतिपाद्यते । तथा च निरर्थकं चानर्थकं चेदम् । स्मृतिविरुद्धानां मातुलसुतापरिणयनादीनामननुष्ठानप्रतिपादनं इति भाट्ट–वि–शा । स्मृत्याचारविरोधे बलाबलं इति वार्तिकं–कु । अत्र वर्णकान्तराण्येवानेकानि ।

सू० ८ ( १ ) अत्र वार्तिकं 'तेष्वदर्शनाद् विरोधस्य इति वा समाप्तिः, तेष्वदर्शनाद् विरोधस्य

पत्तिः स्यात्। ७ भाट्ट–क–य–कु, ५ बिन्दुः.

९ शास्त्रस्था वा तन्निमित्तत्वात्। ८ भाट्ट –क–य–कु.

अधि० ५ भा–भाट्ट–क–कौ, ६ इतरे.

१० चोदितं तु प्रतीयेताविरोधात् प्रमाणेन। ९ भाट्ट–क–य–कु–वा–सु, ६ बिन्दुः.

अधि० ६ भा–भाट्ट–क–कौ, ७ इतरे.

११ प्रयोगशास्त्रमिति चेत्। १० भाट्ट–क –य–कु–वा–सु, ७ बिन्दुः.

१२ नासंनियमात्। ११भाट्ट–क, १०य-कु.

१३ अवाक्यशेषाच्च। १२भाट्ट–क, ११य–कु.

१४ सर्वत्र च प्रयोगात् संनिधानशास्त्राच्च। १३ भाट्ट–क, १२ य–कु.

---

इत्येवमुपक्रमं वा सूत्रं' इति। तथा च 'अपिवा कारणाग्रहणे प्रतीयेरन् तेष्वदर्शनाद् विरोधस्य' इति सप्तमं सूत्रं, 'समा विप्रतिपत्तिः स्यात्' इत्येव तु अष्टमं सूत्रं इति वार्तिकमतेन पक्षद्वयम्। कौस्तुभेऽप्येवम्।

सू० ९ (१) इदं सूत्रं वा–सुपुस्तकयोः स्वातन्त्र्येण नोपन्यस्तं, १४७ वा पृष्ठे, २०९ सु पृष्ठे च कृशाक्षरैर्वर्तते। तेन उत्तरत्र सूत्राङ्कन्यूनता संपन्ना।

अधि० ५ आर्थप्रसिद्ध्यविरोधे म्लेच्छप्रसिद्धशब्दार्थप्रामाण्यं इति भाट्ट–शा। पिकनेम इति भा –भाट्ट-कौ। म्लेच्छप्रसिद्धपदार्थप्रामाण्यं इति म –वि–शा–बिन्दु–वृ–ल। म्लेच्छप्रसिद्धार्थप्रामाण्यं इति सा–कु–सु।

अधि० ६ कल्पसूत्र इति भा–भाट्ट –कु–कौ। कल्पसूत्राणा परतः प्रामाण्यं इति बिन्दुः। कल्पसूत्राणा स्वतःप्रामाण्याभावः इति वृ। कल्पसूत्राणां स्वतोऽप्रामाण्यं इति ल। कल्पसूत्राणामस्वतःप्रामाण्यं इति शा। कल्पसूत्रास्वतःप्रामाण्यं इति म–सा–वि –भाट्ट–कु–सु। आन्तिमयोर्द्वयोः शीर्षकयोरतीव क्लिष्टता। शा–शीर्षके एकदेशान्वयाधिक्यं च। कल्पसूत्राणा प्रामाण्यं स्वतो न इति हि प्रतिपादनीयम्।

सू० ११ (१) चेदन्तमुत्तरेणैकं य–कु।

सू० १२ (१) प्रायः सर्वत्र असन्नियमात् इत्येव मुद्रितं, परंतु भाष्ये 'नैतत् सम्यङ् निबन्धनं' इति व्याख्यातं; तेन सम्+निबन्धनं इति पदस्थितिः न तु सत्+निबन्धनं इति। यद्यपि मोऽनुस्वारः इत्यनुस्वारे, वा पदान्तस्येति परसवर्णे च भाष्यपक्षेऽपि सन्नि इत्येव संहिता भवति, इतरपक्षे तु परोऽनुनासिकत्वे तथैव संहिता भवति, तथापि 'सन्नि' इति लेखने सम् इति वा पूर्वपदं सत् इति वा पूर्वपदं इति दुर्ज्ञेयं स्यात्। नहि संधिशास्त्रं दुर्ज्ञेयतासंपादनार्थं, वाक्प्रवृत्तेः स्वभावो हि संधिशास्त्रम्। तेन भाष्यमते संनियमात् इत्येव लेखनमावश्यकम्। अतो भापुस्तके सूत्रे भाष्यपङ्क्तौ च असन्नि इति मुद्रणमयुक्तम्। वि–शापुस्तकयोस्तु असंनि इत्येव मुद्रितम्। अथ पूर्वमसतः नियमात् इति वृ, असतामेव नियमात् इति क, असद्भिः नियमात् इति कु, प्रागसतामेव नियमात् इति कौ। तेन तन्मतेन असन्नि इत्येव मुद्रणं इति नास्ति विवादः। इदमादीनि त्रीणि सूत्राणि वा–सु इत्यत्र नोपन्यस्तानि स्वातन्त्र्येण। परंतु सुधाया क्रमेण २३३, २३९, २४२ पृष्ठेषु व्याख्यातान्येवेति तत्रापि सूत्रमुद्रणं स्वातन्त्र्येणावश्यकम्।

सू० १३ (१) च शब्दो नास्ति य–कु–सु।

सू० १४ (१) त्र प्र इति भाट्ट–क–वृ–य। (२) प्रयुक्तत्वात् इति य–कु–सु (२४२ पृ.)। वार्तिकेपि 'सर्वत्र च प्रयुक्तत्वादित्यनेन निदर्श्यते' इति श्लोकात् प्रयुक्तत्वादित्येव पाठः स्पष्टः। तथापि भापुस्तके तथा न मुद्रितं इति किं क्रियताम्। भाष्यं तूदासीनं पाठविषयेऽत्र। (३) ल–भिन्नेषु अत्र संनि इत्येव मुद्रणं, एवं सति असंनियमात् इत्यत्र कुतः असन्नि इति मुद्रणं इति त एव जानन्तु। अत्रापि सन्नि इत्येव ल।

अधि० ७ भा-भाट्ट-कौ, ८ इतरे.

१५ अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात्। १४ भाट्ट-क, १३ य-कु, ११ वा-सु, ८ बिन्दुः.

१६ अपिवा सर्वधर्मः स्यात् तन्न्यायत्वाद् विधानस्य। १५ भाट्ट-क, १४ य-कु, ११ वा-सु.

१७ दर्शनाद् विनियोगः स्यात्। १६ भाट्ट-क, १५ य-कु, १२ वा-सु.

१८ लिङ्गाभावाच्च नित्यस्य। १७ भाट्ट-क, १६ य-कु, १३ वा-सु.

१९ आख्या हि देशसंयोगात्। १८ भाट्ट-क, १७ य-कु, १४ वा-सु.

२० न स्याद्देशान्तरेष्विति चेत्। १९ भाट्ट-क, १८ य-कु, १५वा-सु.

२१ स्याद् योगाख्या हि माथुरवत्। २० भाट्ट-क, १८ य-कु, १६ वा-सु.

२२ कर्मधर्मो वा प्रवणवत्। २१ भाट्ट-क, १९ य-कु, १७ वा-सु.

२३ तुल्यं तु कर्तृधर्मेण। २२ भाट्ट-क, २० य-कु.

अधि० ८ भा-भाट्ट-क-कौ, ९ इतरे.

२४ प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात्। २३ भाट्ट-क, २१ य-कु, १८ वा-सु, ९ बिन्दुः.

२५ शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्। २४भाट्ट-क-२२ य-कु-वा-सु.

---

**अधि०** ७ सामान्यश्रुतिकल्पना इति म-सा-भाट्ट-शा-बिन्दु-बृ-सु। अस्यार्थं संपादकोऽपि जानाति नवेति संदेहोऽस्माकम्। होलाका इति भा-सा-भाट्ट-वि-ल-सु-कौ।

**सू० १५ (१)** तत् सं इति चौ। तत्तु न किंचित्, ऐकपद्यस्यैव वार्तिकादिसंमतत्वात्।

**सू० १६ (१)** अपिवा इति वि-शा। अपि वा इति इतरे। सुधायामिदं सूत्रं २४५ पृष्ठे। परंतु कृशाक्षरैः।

**सू० १७ (१)** दर्शनाद विनियोगस्य इत्येव सूत्रं य-कु। वार्तिके तु दर्शनाद्विनियोगः स्यात् पश्चावत्तादिधर्मवत् इत्येव। भाष्यं तूदासीनम्।

**सू० २० (१)** चेदन्तमुत्तरेणैकं य-कु।

**सू० २१ (१)** माधुर इति भाट्ट-य। दाक्षिणात्याः केचित् थकारस्थाने धकारं लिखन्ति यथा लकारस्थाने ळकारं दिङ्नामान्यन्तराळे इति। अथवा मथुरावासी माथुरः। मथुरा च भगवतः श्रीकृष्णस्य जन्मभूमिः। मधुरावासी माधुरः। मधुरा च भगवत्याः कामाक्षीदेव्याः स्थानं यल्लोकैर्मदुरा इत्युच्यते। मधुरावासिनं गृहीत्वा य-पाठः। तेन ज्ञायते य-पुस्तकीयसूत्रपाठो दाक्षिणात्यो मधुरादेशीयः इति। अत एव दाक्षिणात्येन कुतूहलेन य-पुस्तकस्य प्रायः संवादो दृश्यते।

**सू० २२ (१)** एकधर्मो इति वि-शा। तत्तु न क्वापि दृश्यतेऽन्यत्र। न च संगच्छते।

**सू० २३ (१)** तुल्यस्तु इति क। देशधर्मः कर्तृधर्मेण तुल्यः इति तत्पङ्क्तिः। प्रकरणानुसारात् पुंलिङ्गपाठ एव युक्तो भाति। तुल्यं इति सार्वत्रिकपाठे तु 'सामान्ये नपुंसकं' इति संतोष्टव्यम्। इदं सुधायां २५६ पृष्ठे कृशं संजातम्।

**अधि० ८** व्याकरणं इति भा-भाट्ट-कौ। साधुपदप्रयुक्तिः इति म-सा-वि-शा-ल-कु। साधुपदप्रयोगनियमः इति बृ-सु। साधुशब्दप्रयोगनियमः इति बिन्दुः।

**सू० २५ (१)** ब्देऽप्र इति वार्तिके पाठान्तरम्। 'अपर आह अप्रयत्ननिष्पत्तेरपराधस्य भागिता' इति हि तत्र पङ्क्तिः। तेन च 'भागित्वं' इत्यस्य स्थाने 'भागिता' इत्यपि अपरमतेन पाठः स्यादिति तर्क्यते।

२६ अन्यायश्चानेकशब्दत्वम्। २५ भाट्ट–क, २३ य–कु–वा–सु.

२७ तत्र तत्त्वमभियोगविशेषात् स्यात्। २६ भाट्ट–क, २४ य–कु–वा–सु.

२८ तदशक्तिश्चानुरूपत्वात्। २७ भाट्ट–क, २५ य–कु.

२९ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात्। २८ भाट्ट–क, २६ य–कु.

अधि० ९ भा–भाट्ट–क–कौ, १० इतरे. १० तः ११ कु–मण्डनः.

३० प्रयोगचोदनाभावादर्थैकत्वमविभागात् २९ भाट्ट–क–चौ, २७ तः २८ कु, २७ य, २६ वा–सु, १० बिन्दुः.

---

सू० २६ ( १ ) वा–सुपुस्तकयोः शब्दत्वमिति इति इतिशब्दोपि सूत्रावयवत्वेन मुद्रितः तदशुद्धम्। सू० २७ ( १ ) एतत्सूत्रोत्तरं वा–सुपुस्तकयोः 'नाकृत्स्नविषयत्वात् २५' इति सूत्रं साङ्कं मुद्रितम्। तत्तु अयुक्तमेव । आनंदाश्रमीयवार्तिके 'वेदे साधुशब्दमात्रदर्शनात् अनर्थकं व्याकरणमिति चेत्। न । अकृत्स्नविषयत्वात् । केचिद्व्यवस्थिता एव' इति पङ्क्तिः। तथा च वार्तिकमेवेदं न सूत्रम्। अत एव सुधामूले शङ्कामुपन्यस्योक्तं 'परिहरति नाकृत्स्नविषयत्वात् । भाषायामित्यधिकृत्यानुगतानां' इत्यादि 'उपपादयति केचिदिति' इति। तेन इदं सूत्रं न सुधासंमतं वार्तिकसंमतं वेति सिद्ध्यति । इति सूत्रत्वेनोपन्यस्यन्तः चौखम्बासंशोधकाः व्यक्तं बभ्रमुः।

अधि० ९ लोकवेद इति भा–भाट्ट–कौ। लोकवेदयोः पदपदार्थैक्यं इति शा। लोकवेदयोः पदार्थैक्यं इति बिन्दुः। अत्र पदानामर्थानां चैक्यं इति द्वंद्वगर्भः षष्ठीतत्पुरुषोऽभिप्रेतः स्यात्। परंतु बोधविप्रकर्षोत्र संपन्नः। लोकवेदयोः शब्दार्थानामनन्यत्वनिरूपणं इति भा। शब्दाना चार्थानां चेत्यर्थः। बिन्दुवदत्रापि बोधविप्रकर्षः । लोकवेदयोः शब्दार्थैक्यं इति वृ–सु । लोकवेदयोः शब्दैक्यं इति म–वि–भाट्ट–ल। तत् किं अर्था भिन्ना एव? ननु शब्दा इव अर्था अपि अभिन्ना इत्येव सिद्धान्तः। तत्रार्धं कुतस्त्यक्तम् ? । भाष्ये प्रथमसूत्रात्मकप्रथमवर्णके वैदिकलौकिकपदपदार्थानामैक्यं प्रसाध्य पुनः प्रथमसूत्रादि षोडशसूत्रात्मकं द्वितीयं वर्णकं विरचितम्। संपादकैरत्र एक एवाधिकरणाङ्को निवेशितः नव वा दश वेति पूर्वानुसारात्। मण्डनाचार्यैस्तु अधिकरणद्वयमेव स्वीकृतम्। तेन भा–संपादकमते अधिकरणानि नवैवास्मिन् पादे, मसाविशादिसंपादकमते दश, मण्डनाचार्यमते तु एकादश । आकृतिः इति भा–सा–वि–भाट्ट–ल–कौ। आकृतिशक्तिः इति म–सा–शा–बिन्दु–वृ–सु।

सू० २८ ( १ ) क्तिश्च तदनु इति भाट्ट–क–वृ–कुटि–कौ। अयमेव ह्ययः पाठः। भाष्यं उभयथापि योजयितुं शक्यते । परंतु वार्तिके १।३।२६ सूत्रान्ते 'तदशक्तिश्चानुरूपत्वात् इत्यत्र वर्णयिष्यते' इत्युक्तम्। साक्षात् अस्मिन् सूत्रे एतदुत्तरसूत्रे च वार्तिकमेव नास्तीत्यन्यदेतत्। वर्णयिष्यते इत्युक्त्वा कुतो न वर्णितं इति तु चिन्त्यम्।

सू० २९ ( १ ) नास्तीदं सूत्रं चौ। ( २ ) देशाच्च कु। (३) विपक्ति इति य। लेखकप्रमादादयं पाठः ( ४ ) ये प्रत्ययः स्यात् इति य–कु। भाष्यादपि अयमेव पाठः सिद्ध्यति। 'अत एव हि विभक्तिव्यत्ययेऽपि प्रत्ययो भवति' इति भाष्यपङ्क्तिः।

सू ३० ( १ ) इदं सूत्रं भाष्यमूले लोकवेदाधिकरणसिद्धान्तसूत्रत्वेन व्याख्यातं प्रथमतः । तत्र 'एवं प्रयोगचोदना संभवति यदि त एव शब्दास्त एवार्थाः' इत्युक्तं, तेन प्रयोगचोदनायाः भावात् इति समासः स्वीकृतो भवति। पुनश्च आकृत्यधिकरणपूर्वपक्षसूत्रत्वेनापि इदं सूत्रं व्याख्यातम्। तत्र च 'आलम्भनप्रोक्षणविशसनादीनां प्रयोगचोदनाः आकृत्यर्थे न संभवेयुः' इति व्याख्यातं, तेन प्रयोगचोदनानां अभावात् इति समासः स्वीकृतः एवं च भावात् अभावात् इत्युभयथा पाठो भाष्यसंमतः। कस्तूरिवृत्तौ भाष्यवदेव । सुबोधिनीवृत्तौ

३१ अद्रव्यशब्दत्वात् । ३० भाट्ट –क–चौ, २९ कु, २८ य.

३२ अन्यदर्शनाच्च । ३१ भाट्ट–क–चौ, ३० कु, २९ य.

३३ आकृतिस्तु क्रियार्थत्वात् । ३२ भाट्ट–क–चौ, ३१ कु, ३० य.

३४ न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् । ३३ भाट्ट–क–चौ, ३२ कु, ३१ य.

३५ तदर्थत्वात् प्रयोगस्याविभागः । ३४ भाट्ट–क–चौ, ३३ कु, ३२ य.

न्यायास्तु पादे दश वै तथैकः ।
धर्मस्यावाक्य प्रयोग नक्रियैकत्रिंशत् ।

॥ इति प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

* * *

॥ अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

अधि० १

१ उक्तं समाम्नायैदमर्थ्यं, तस्मात् सर्वं तदर्थं स्यात् ।

अधि० २ वि–भाट्ट–शा–ल–कु–कौ.

---

तु लोकवेदाधिकरणसिद्धान्तसूत्रत्वेन एकदैव व्याख्यातं, आकृत्यधिकरणे तु नैवास्यान्तर्भाव· कृतः । लोकवेदाधिकरणेऽपि ‘ प्रयोगचोदनायाः अभावात् अभावप्रसङ्गात् ’ इति अभावात् इत्येव पदं स्वीकृतम् । कुतूहले पूर्वाधिकरणे सिद्धान्तसूत्रत्वेन उत्तराधिकरणे पूर्वपक्षसूत्रत्वेन चेति द्विरुपन्यस्तं, सूत्राङ्कश्च, क्रमेण २७, २८ इति दत्तौ । उभयत्रापि च भावात् अभावात् इति उभयथैव पदच्छेद· स्वीकृतः । अथ अधिकरणविषये उच्यते । भाष्ये तावत् दशमाधिकरणमेव वर्णक· भेदेन स्थापितं अधिकरणाङ्को न वर्धितः । तत्रापि ३० सूत्रे एव प्रथमं वर्णकं, ३० तः ३५ सूत्रैः द्वितीयं वर्णकम् । भाट्टदीपिकापुस्तके तु प्रयोगचोदनासूत्रेण नवममधिकरणं अद्रव्यादिशेषसूत्रै· दशम· मधिकरणं इति व्यवस्था प्रदर्शिता । सा तु अयुक्तैव अधिकरणाङ्कवृद्धिस्तु न दोषाय । कस्तूरिवृतौ तु भाष्यस्थं वर्णकद्वयं अधिकरणद्वयत्वेनैव स्वीकृतमिति विशेषः । कौस्तुभे भाष्यवदेव व्यवस्था, प्रयोगचोदना सूत्रं द्विरेवोपन्यस्तं अङ्कस्तु एक एव निवेशितः इति युक्तमेव कृतं इति विशेष. । मण्डनेन तु लोकवेदाधिकरणं दशमं, आकृत्यधिकरणं तु एकादशं इति स्वीकृतम् ।

सू० ३१ ( १ )एवमादीनि पञ्च सूत्राणि वा–सु पुस्तकयोर्विद्यमानान्यपि न सूत्रत्वेनोपन्यस्तानि संशोधकैः सुधायां तु एतानि सूत्राणि क्रमेण ३५७।३५९ ३५९।३८७।३८८ पृष्ठेषु द्रष्टव्यानि ।

सू० ३४ ( १ ) न क्रिया स्यादिति चेन्नार्थान्तरे विधानान्न द्रव्यमिति चेत् तदर्थत्वात् प्रयोगस्याविभागः ३१ इति य । तत्रैव ‘ विधानं न द्र ’ शेषं य-वत् कु । ‘विधानं न द्रव्यवचनमिति चेत् ’ इति पाठान्तरं, शेषं य-वत् कु ।

अधि० १ अत्र सूत्रद्वयात्मकमेकमेवाधिकरणं भा–म–सा–वृ–बिन्दु–सु–मण्डनमतेन । वि–भाट्ट–शा–ल–कु–कौमतेन तु प्रथमसूत्रेण प्रथमाधिकरणं द्वितीयेन च द्वितीयम् । तेन भाष्याद्यपेक्षया विस्तरादिषु अधिकरणाङ्क एकेनाधिकः स्यात् । उद्भिदादिशब्दाना यागनामतया प्रामाण्यं इति वि–शा–ल–कु । नामधेयप्रामाण्यं इति भाट्ट–कौ इति प्रथमसूत्रात्मकप्रथमाधिकरणे । अथ भादिमतेन प्रथमाधिकरणस्य, वि–भाट्टादिमतेन द्वितीयाधिकरणस्य च शीर्षकाणि । उद्भिद् इति भा–भाट्ट–कौ । उद्भिदादिशब्दाना यागनामता इति म–सा–सु । उद्भिदादिशब्दाना यागनामधेयता इति वि–भाट्ट–शा–ल–कु । अत्र वि–भाट्टादिसंपादकैर्नामशब्दस्थाने प्रौढमिव सन्तं नामधेयशब्दं युञ्जानैः स्वातन्त्र्यं प्रदर्शितं विचारस्य ।

सू० १ ( १ ) यैतदर्थ्यं इति वृ ।

सू० २ ( १ ) अपिवा इति ल । अपि वा इतरे । ( २ ) स्यादु इति य । ( ३ ) यदुत्पत्तौ इत्यत्र पदभेदो वा पदैक्यं वा इति संदेहे ‘ यत् उत्पत्तौ विधिवाक्ये अपूर्वं उद्भिदादि पदं तन्नामधेयं स्यात्’

२ अपिवा नामधेयं स्याद् यदुत्पत्तावपूर्वमविधायकत्वात् ।

अधि० २. भा-म-सा-वृ-बिन्दु-सु-मण्डनः, ३ वि-भाट्ट-शा-ल-कु-कौ.

३ यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः । २ बिन्दुः.

अधि० ३ भा-म-सा-वृ-बिन्दु-सु-मण्डनः, ४ वि-भाट्ट-शा-ल-कु-कौ.

४ तत्प्रख्यं चान्यशास्त्रम् । ३ बिन्दुः.

अधि० ४ भा-म-सा-वृ-बिन्दु-सु-मण्डनः, ५ वि-भाट्ट-शा-ल-कु-कौ.

५ तद्व्यपदेशं च । ४ बिन्दुः.

अधि० ५ भा-म-सा-वृ-बिन्दु-कु-मण्डनः, ६ वि-भाट्ट-शा-ल-कु-कौ.

६ नामधेये गुणश्रुतेः स्याद् विधानमिति चेत् । ५ बिन्दुः.

७ तुल्यत्वात् क्रिययोर्न । ६ य-कु.

८ ऐकशब्द्ये परार्थवत् । ७ य-कु.

अधि० ६ भा-म-सा-वृ-बिन्दु-सु-मण्डनः, ७ वि-भाट्ट-शा-ल-कु-कौ.

---

इति क । तेन भिन्नं पदम् । वार्तिकेपि एवं पक्षेण । यस्य उद्भिदादेः पदस्य उत्पत्तौ प्रथमश्रवणे इत्यादि वृ । तेन पदैक्यम् । यत् यतः कारणात् उत्पत्तौ विधिवाक्ये इत्यादि कु । तेन पृथक् पदम् । अथवा कस्य नामधेयं इति संदेहेऽभिधीयते यस्योत्पत्तौ अपूर्वं निष्पद्यते, यागस्येत्यर्थः, इति वार्तिकम्, तेन पदैक्यम् । एवं च पक्षभेदेनैव निर्णयः ।

अधि० २ चित्रा इति भाट्ट-कौ । चित्राऽऽज्य इति भा । चित्रादिशब्दानां यागनामधेयता इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ -ल-कु-सु । वाक्यभेदन्यायः इति कौ ।

सू० ३ (१) देशप्र इति वा-पाठस्तु हस्तादिदोषः, सुधाया तु सविसर्गतैव ।

अधि० ३ अग्निहोत्र इति कौ । अग्निहोत्रादिशब्दानां यागनामधेयता इति म-सा-वि-भाट्ट-शा -बिन्दु-वृ-ल-कु-सु । आघाराग्निहोत्र इति भा -वि-शा-वृ । तत्प्रख्य इति भा-म-सा-वि-भाट्ट -शा-ल ।

सू० ४ (१) च शब्दो नास्ति क । तस्यास्तित्वं तु युक्तं सर्वत्र प्रसिद्धोपदेशात् ।

अधि० ४ तद्व्यपदेश इति भा-म-सा-वि-भाट्ट-ल-कौ । श्येनादिशब्दनां यागनामधेयता इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कु-सु ।

अधि० ५ वाजपेय इति भा-भाट्ट-बिन्दु-कौ । वाजपेयादिशब्दानां नामधेयता इति म-सा-वि-भाट्ट-शा-ल-कु । वाजपेयादिशब्दानां यागनामता इति वृ । वाजपेयादिशब्दानां यागनामधेयता इति सु । नामधेयता, यागनामता, यागनामधेयता इत्यादि शाब्दिकं वैचित्र्यं तत्तत्संपादकैः साधितमपि 'शाकाय वा स्याल्लवणाय वा स्यात्' इति न्यायमपि नानुसरति ।

सू० ६ (१) श्रुतौ स्या इति सु । न संदेहः श्रूयते हि गुण. इति भाष्यात्, नामधेये गुणश्रुतेः प्रसिद्ध्यादिभिर्गुणप्रत्ययानपगमात् इति वार्तिकाच्च सुपाठोऽयुक्त एव । (२) चेदन्तमुत्तरेणैकं क-य-कु ।

सू० ८ (१) एकशब्दे प इति वृ-कुटि । ऐकशब्दे इति चौ-पाठस्तु अशुद्ध एव । वृ-वदेव चौ-पाठो वस्तुतः स्यादिति भाति । एकारस्थाने ऐकारो हस्तदोषात् संभाव्यते ।

अधि० ६ आग्नेय इति भा-भाट्ट-कौ । आग्नेयादिशब्दानां यागनामत्वाभावः इति बिन्दुः । आग्नेयादिशब्दानामनामता इति वृ-ल । आग्नेयादिशब्दानामयागनामधेयता इति भाट्ट । आग्नेयादीनामनामता इति म-सा-वि-शा-कु-सु । अयुक्तमिदं नामधेयम् । नहि आग्नेयादीनां पुरोडाशानां नामतां कश्चिदपि अवैयाकरणो मन्यते, यन्निरासार्थमिदमधिकरणम् । वैयाकरणास्तु पदानां पदार्थानां चाभेदं मन्वते । तत्रापि बौद्धानामेव तेषां न स्थूलानाम् । आग्नेयादिशब्दास्तु विचार्यन्ते किमेतानि यागनामधेयानि गुणविधिर्वेति । तद्गुण इति कौ ।

९ तद्गुणास्तु विधीयेरन्नविभागाद् विधानार्थे न चेदन्येन शिष्टाः । ८ य-कु, ६ बिन्दुः.

अधि० ७ भा-म-सा-वृ-बिन्दु-सु-मण्डनः, ८ वि-भाट्ट-शा-ल-कु-कौ.

१० बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः । ९ य-कु, ७ बिन्दुः.

अधि० ८ भा-म-सा-वृ-बिन्दु-सु-मण्डनः, ९ वि-भाट्ट-शा-ल-कु-कौ.

११ प्रोक्षणीष्वर्थसंयोगात् । १० य-कु, ८ बिन्दुः.

अधि० ९ भा-म-सा-वृ-बिन्दु-सु-मण्डनः, १० वि-भाट्ट-शा-ल-कु-कौ.

१२ तथा निर्मन्थ्ये । ११ य-कु, ९ बिन्दुः.

अधि० १० भा-म-सा-वृ-बिन्दु-सु-मण्डनः, ११ वि-भाट्ट-शा-ल-कु-कौ.

१३ वैश्वदेवे विकल्प इति चेत् । १२ य-कु, १० बिन्दुः.

१४ न वा प्रकरणात् प्रत्यक्षविधानाच्च नहि प्रकरणं द्रव्यस्य । १२ य-कु.

१५ मिथश्चानर्थसंबन्धः । १४ वा, १३य-कु.

१६ परार्थत्वाद् गुणानाम् । १५ वा, १४ य-कु.

---

सू० ९ (१) र्थेन इति वा-सु । अशुद्धं तु तत् । तथा च भाष्यम् ‘ अविभक्ता हि ते कर्मणो विधानार्थे ताद्धिते शब्दे ’ इति, वार्तिके च ‘ न चेदन्येन शिष्टा इत्यन्यथानुपपत्तिशरणाभिधानं’ इति, सुधामूले च ‘ विशिष्टविधावपि अन्यतो लभ्यमानस्याविधानात् न गौरवलक्षणवाक्यभेदापत्तिः इत्यभिधानार्थो न चेदन्येन शिष्टा इति सूत्रावयव. ’ इति । तेन ज्ञायते विधानार्थे इति सप्तम्यन्तं पदं, नञ् तु उत्तरत्र निषेधकत्वेन अन्वेतीति । (२) ष्टाः स्युः इति शा । स्युःपदं नाशुद्धम् । ‘ न चेदन्येन शिष्टाः स्युर्यागाः शब्देन केन चित् ’ इति वार्तिकश्लोके तस्य दृष्टत्वात्, तत् सूत्रस्थमेवेति संशोधकमतेः संभवात् ।

अधि० ७ बर्हिराज्य इति भा-भाट्ट-कौ । बर्हिरादिशब्दाना जातिवाचिता इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कु-सु ।

सू० १० (१) ब्दः स्यात् इति क-वृ-कुटि । ब्दम् इति भवप्रसादसूत्रे । तन्मूले तु ‘अतच्छब्दः असंस्कारशब्दो बर्हिःशब्दः आज्यशब्दश्चेति ’ इत्युक्तत्वात् अयुक्तः सूत्रपाठः

अधि० ८ प्रोक्षणी इति भा-भाट्ट-कौ । प्रोक्षण्यादिपदानां यौगिकता इति म-सा-भाट्ट । प्रोक्षण्यादिशब्दाना यौगिकता इति वि-शा-वृ-ल-कु-सु । प्रोक्षण्यादीनां यौगिकता इति बिन्दुः । प्रोक्षणी पदार्थ. स्वसमवायिकारणीभूतावयवसंयोगजन्यः इति चेदस्मिन्नधिकरणे प्रतिपादनीयं भवेत्, तदा नूनं भवेत् अस्य शीर्षकस्य साधुता, तदभावे तु तदभावः।

अधि० ९ निर्मन्थ्य इति भा-भाट्ट-कौ । निर्मन्थ्यशब्दस्य यौगिकता इति भा-भाट्ट-कौभिन्नाः।

अधि० १० वैश्वदेव इति भा-भाट्ट । वैश्वदेवादिपदानां यागनामता इति बिन्दुः । वैश्वदेवादिशब्दानां नामधेयता इति म-सा-वि-भाट्ट-शा-वृ-ल-कु । वैश्वदेवादिशब्दानां यागनामधेयता इति सु ।

सू० १३ चेदन्तमुत्तरेणैकं क-य-कु ।

सू० १४ (१) न प्र इति भाट्ट-क-य-कु-सु कौ-भवप्रसादः । भाष्यवार्तिकयोश्चैव वा शब्दो नोपलभ्यते । इदं सूत्रं वा-पुस्तके न मुद्रितं, सुधायां मुद्रितं व्याख्या तूभयत्रापि । (२) धानेन नहि इति भवप्रसादः ।

सू० १५ (१) मिथोऽशंबन्धः इति मिथश्चासंबन्ध इति वा पाठो भाति कस्तूरिवृत्तौ ।

सू० १६ (१) अत्र वार्तिकं ‘ पूर्वेण एकसूत्रमपि संभवति ’ इति । तथा च पक्षे ‘ मिथश्चानर्थसंबन्धः पदार्थत्वाद् गुणामां ’ इत्येकं सूत्रम् ।

अधि० ११ भा-म-सा-बृ-बिन्दु-सु-मण्डनः, १२ वि-भाट्ट-शा-ल-कु-कौ.

१७ पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ।१६ वा, १५ य-कु,११ बिन्दु.

१८ गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका नहि तं प्रत्यर्थवत्ताऽस्ति। १६ य-कु.

१९ तच्छेषो नोपपद्यते । १९ वा, १७ य-कु.

२० अविभागाद् विधानार्थे स्तुत्यर्थेनोपपद्येरन् । १९ वा, १७ य-कु.

२१ कारणं स्यादिति चेत् । २० वा-सु, १८ य-कु.

---

अधि० ११ द्वादशकपाले अष्टाकपालादीनामर्थवादता इति बिन्दुः । वैश्वानर इति भाट्ट-कौ । वैश्वानरे अष्टत्वाद्यर्थवादता इति म-सा-वि-भाट्ट-शा-बृ-ल-कु-सु । वैश्वानरेष्टि इति भा । अत्र वैश्वानरदेवताया तावत् अष्टत्वादिसंख्या नास्त्येव । अथ वैश्वानरदेवताकद्वादशकपालपुरोडाशसंबन्धिकपालगतद्वादशत्वे अष्टत्वादीना अर्थवादता इत्यर्थो विवक्षितश्चेत् क्षम्यते । कपालद्वादशत्वे अष्टत्वादेरर्थवादता इति वा, द्वादशकपाले अष्टाकपालादेरर्थवादता इति वा बिन्दुवत् शीर्षकं युक्तम् । भाट्ट-कौगत तु विषयबोधकत्वात् समीचीनमेव ।

सू० १७ ( १ ) न्तो वि इत्यवग्रहरहितः पाठः वा-सु । स चात्र न युक्तः तस्य भाष्यान्तरगतत्वात् । सुधाया हि एवमुक्तं 'भाष्यकारान्तरकृताकारप्रश्लेषरहितसूत्रव्याख्यानत्यागेन अकारप्रश्लेषेण भाष्यकृतो व्याख्याने कारणं वक्तुं' इति । ( २ ) तत्सामर्थ्य इत्यत्र पदभेदो वा पदैक्यं वेति संदेहः । तत्र भाष्यं ' तदेतदस्य वाक्यस्य समाम्नाये सामर्थ्यं यत् अविहितपूर्वकाभिधानं ' इति । तेन पदभेदः सिद्धयति । तत्सामर्थ्यं अष्टाकपालत्वादीनां विधानसामर्थ्यं इति कस्तूरिमूलं, तत्सामर्थ्यं विधिसामर्थ्यं इति सुबोधिनी वृत्तिः, तत्सामर्थ्यं गुणविधिसामर्थ्यं इति कुतूहलं, एतेभ्य. पदैक्यं सिद्धयति ।

सू० १८ (१) र्थे त इति भा-वि-शा-कु-चौ । र्थेन इति म-सा । र्थेऽत इति-भाट्ट-क-बृ-वा-सु कौ । तत्र कुतूहले तद्गुणाः इति सुबोधिनीवृत्तौ च अतद्गुणाः इति स्पष्टम् । एवं क वार्तिकं च 'तथाचातद्गुणाः केवलपुरोडाशसंबन्धे प्रयोगे स्युरनर्थकाः' इति, 'अथवा कथमतद्गुणा इत्यत आह ' इति च । तेन सूत्रे भाष्यानुसारिणि र्थेऽत इत्येव पाठो युक्त इति सिद्धयति । भा-पुस्तके तु अवग्रहो न मुद्रित इति दोष एव ।

सू० १९ (१) द्यत इति चेत् इति भाट्ट-क-य कु । अत्र सुधा " इति यदुक्तमितिभाष्येण आभाषान्तमेतत् सूत्रं इत्युक्त्वा अविभागाद् विधानार्थे स्तुत्यर्थेनोपपद्येरन् इति सूत्रं परिहारार्थत्वेन भाष्यकृता ( तच्छेषो नोपपद्यते इत्येतस्मात् ) पृथक् पठितमपि 'यदा तु' इति भाष्यावयवेन आभाषासूत्रार्थस्य परिहारसूत्रार्थेन सह एकीकृत्य व्याख्यानात् स्वयमपि तथा व्याख्यातुं एकीकृत्य पठति । तच्छेष इति । 'चेत् इति' इति पदद्वयं भाष्यकारेणापठितमपि वृत्यन्तरे दृष्टत्वात् वार्तिककृता पठितं " एतेन भाष्यमते तच्छेष इत्यादिसूत्रं अविभागादित्यादिसूत्रं च भिन्नमेव ' इति चेत् ' इति पदद्वयं नास्ति इति सिद्धम् । भाष्यान्तरे तु सूत्रैक्यं 'इति चेत्' इति पदद्वयघटितं वार्तिककारेण अनूदितं इति भाष्यान्तरपाठः संमतो वार्तिककारस्येति च सिद्धम् । भाष्यान्तरपाठानुसारिण एव च क-य-कु-पाठा. इति च सिद्धयति । अत्रापि चेदन्तमुत्तरेणैकं क-य-कु ।

सू० २०(१) त्यर्थे नो इति वि-भाट्ट-शा पाठो न युक्तः । ' अतो द्वादशकपालस्य स्तुत्यर्थत्वेन अवयवस्तुतिरुपपद्यते ' इति हि भाष्यम् । अत्र स्तुत्यर्थेन इति भावप्रधानो निर्देशः तथैव वा भाष्यसंमतः पाठः इति स्वीकार्यम् । परंतु स्तुत्यर्थे इति सप्तम्यन्तः पाठो नास्तीति स्पष्टमेव । त्यर्थेन विधीयेरन् इति वाटि । अभ्यासअविभागात् विधानार्थस्तुत्य० इति चौ-पाठस्तु उत्स्वप्नायितम् ।

सू० २१ (१) चेदन्तमुत्तरेणैकं क-य-कु ।

२२ आनर्थक्यादकारणं, कर्तुर्हि कारणानि, गुणार्थो हि विधीयेते। २१ वा-सु, १८ य-कु.

अधि० १२ भा-म-वृ-बिन्दु-मण्डनः, १३ वि-भाट्ट-शा-ल-कु-कौ.

२३ तत्सिद्धिः। २२ भाट्ट-वा-सु, १२ बिन्दुः. (अधि० १३म-सा-वृ-बिन्दु-सु-मण्डनः, १४ वि-भाट्ट-शा-ल-कु-कौ).

सू० २२ (१) र्थो वि इति वि-शा। णार्थे इति भाट्ट-क-वृ-कुटि। णार्थे हि इति सु-कौ। सुधामूले तु ४९० पृष्ठे गुणार्थो हि इत्येव। (२) धीयन्ते इति भाट्ट-क-वृ-कुटि-कौ।

अधि० १२ तत्सिद्धि इति भाट्ट-कौ। तत्सिद्धि-पेटिका इति भा-कौ। यजमानपदस्य प्रस्तरादिस्तुत्यर्थता इति वृ। प्रस्तरादि इत्यादिपदेन किमभिप्रेतमानुमता? अधिकरणे तु न किमपि लभ्यते। यजमानशब्दस्य प्रस्तरस्तुत्यर्थता इति बिन्दुः समीचीनः। यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थता इति म-सा-वि-शा-ल-कु-सु।

अधि० (१३ म-सा) अग्न्यादिपदानां ब्राह्मणादिस्तुत्यर्थता इति बिन्दुः। अत्र अग्न्यादि इत्ययुक्तं आग्नेयादि इति म-सावदेव युक्तम्। आग्नेयो वै ब्राह्मणः इत्यादि हि वाक्यम्। तत्र ब्राह्मणक्षत्रियवैश्यानां आग्नेयेन्द्रवैश्वदेवशब्दैः स्तुतिः कृता इत्येव साधनीयम्। न अग्न्यादिपदैः स्तुति कृता इति। आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थता इति म-सा-वि-शा-वृ-ल-कु-सु। आग्नेयो वै ब्राह्मण इत्यत्र आग्नेयादिशब्दाना ब्राह्मणस्तुत्यर्थता इति भाट्ट। अत्र आदिशब्दो निवेशनीयश्चेत् स्थानत्रये निवेशनीयः क्वापि वा न निवेशनीयः। आग्नेयो वै ब्राह्मण इत्यादौ आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थता इति वा, आग्नेयो वै ब्राह्मण इत्यत्र आग्नेयशब्दस्य ब्राह्मणस्तुत्यर्थता इति वा। अर्धजरतीयं तु अशक्यं, आग्नेयो वै ब्राह्मणः इति वाक्ये ब्राह्मणभिन्नक्षात्रियादिशब्दाभावात्। जाति इति भाट्ट-कौ।

अधि० (१४ म-सा) आदित्यादिपदानां यूपस्तुत्यर्थता इति बिन्दुः। यूपादिशब्दानां यजमानस्तुत्यर्थत्वं इति म-सा-वि-भाट्ट-शा-वृ-ल-कु-सु। अत्र नवानामपि म-सादिसंशोधकानां महान् प्रमादः समजनि। विषयवाक्यनिर्देशस्तावत्, यजमानो यूपः आदित्यो यूपः इति वाक्यद्वयं क्रमेण सा, आदित्यो यूपः यजमानो यूपः इति साव्युत्क्रमेण शा, आदित्यो यूपः इत्येकमेव वाक्यं भाट्ट-वृ, यजमानो यूपः इत्येकमेव वाक्यं कु, आदित्यो यूपः इत्येकं वाक्यं मुख्यं यजमानो यूपः इति अन्ते अतिदेशार्थं वि इति। किंच वाक्यद्वयेपि स्तुत्यत्वं यूपस्यैव, न तु आदित्यस्य वा यजमानस्य वा। आदित्ययजमानशब्दयोस्तु यूपस्तावकत्वम्। उक्तं च विस्तरे मूले 'आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः' इति, 'यजमानशब्देन यूपः स्तूयते' इति च। तथा चात्र महान् प्रमादः।

अधि० (१५ म-सा) अपश्वादिपदानां गवादिस्तुत्यर्थता इति बिन्दु। अपश्वादिशब्दानां गवादिप्रशंसार्थत्वं इति म-सा-वि-भाट्ट-शा-ल-कु। अपश्वादिशब्दाना गवादिस्तुत्यर्थत्वं इति वृ-सु।

अधि० (१६ म-सा) बाहुल्येन सृष्टिव्यपदेशः इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-सु। भूमा इति भाट्ट-कौ। भूमाधिकरणे बाहुल्येन सृष्टिव्यपदेशः इति कु। तत् किं सृष्टीरुपदधाति इति वाक्ये नास्त्येव वा बाहुल्येन सृष्टिव्यपदेश, भूमाधिकरणे एव तु अयम्। भूमाधिकरणे इति निरर्थकमेव पदं संपादकमहाशयैर्निवेशितम्। सृष्टिव्यपदेश. इति ल।

अधि० (१७ म-सा) प्राणभृदादिशब्दानांस्तुत्यर्थता इति म-सा-वि-भाट्ट-शा-वृ-ल-सु। प्राणभृदादीना स्तुत्यर्थता इति बिन्दुः। प्राणभृच्छब्दबोध्यानामिष्टकानां द्रव्यरूपाणां नास्त्येव स्तुत्यर्थता इति बिन्दुशीर्षकमशुद्धम्। लिङ्गसमवाय इति भा-वि-भाट्ट-ल-कौ। लिङ्गसमवायन्याये प्राणभृदादिशब्दानां स्तुत्यर्थत्वं इति कु। लिङ्गसमवायन्यायः इति पृथक् शीर्षकं, प्राणभृदादिशब्दानां इत्यादि

जातिः। २४ म–सा–वि–शा–वृ–ल–चौ–कौ, २३ भाट्ट, २२ वा–सु,१९ य–कु, १३ बिन्दुः.
( अधि० १४ म–सा–वृ–बिन्दु–सु–मण्डनः, १५ वि–भाट्ट–शा–ल–कु–कौ ).

सारूप्यम्। २५ म–सा–वि–शा–वृ–ल–चौ–कौ, २३ भाट्ट वा–सु, १९य–कु. १४ बिन्दुः.
(अधि० १५ म–सा–वृ–बिन्दु–सु–मण्डनः, १६ वि–भाट्ट–शा–ल–सु–कौ).

प्रशंसा। २६ म–सा–वि–शा–वृ–ल–चौ कौ, २३ भाट्ट, २२ वा–सु, १९ य–कु, १५ बिन्दुः.
( अधि० १६ म–सा–वि–वृ–बिन्दु–सु–मण्डनः, १७ वि–भाट्ट–शा–ल–कु–कौ).

भूमा। २७ म–शा–वि–शा–वृ–ल–चौ–कौ, २३ भाट्ट, २२ वा–सु, १९ य–कु, १६ बिन्दुः.
(अधि० १७ म–सा–वृ–बिन्दु–सु–मण्डनः, १८ वि–भाट्ट–शा–ल–कु–कौ).

लिङ्गसमवायः। २८ म–सा–वि–शा–वृ–ल–चौ–कौ, २३ भाट्ट, २२ वा–सु १९ य–कु, १७ बिन्दुः.
अधि० १३ भा, १८ म–सा–वृ–बिन्दु–सु–मण्डनः, १९ वि–भाट्ट–शा–ल–कु–कौ.

२४ संदिग्धेषु वाक्यशेषात्। २९ म–सा–वि–शा–वृ–ल–चौ–कौ, २४भाट्ट, २३ वा–मु, २० य–कु, १८ बिन्दुः.
अधि० १४ भा, १९ म–सा–वृ–बिन्दु–सु–मण्डनः, २० वि–भाट्ट–शा–ल–कु–कौ.

---

तु पृथगेव शीर्षकं युक्तं तत्रापि स्तुत्यर्थत्वं इत्यपसिद्धान्त एव, परंतु लिङ्गसमवायन्याये इति सप्तम्यन्तं पदमनर्थकमेव। 'प्राणभृच्छब्देन समुदायग्रहणं' इति तु शीर्षकं शुद्धं स्यात्।

सू० २३ (१) सारूप्यात् इति पञ्चम्यन्त. पाठः म–सा–वि–शा–बिन्दु–ल–चौ–वा–सु। यदि पूर्वोत्तरसूत्रेषु प्रथमान्तता तदा अत्रापि सूत्रे प्रथमान्ततैव युक्ता। यदि तु अत्र पञ्चम्यन्तता पूर्वोत्तरेष्वपि पञ्चम्यन्ततैव युक्ता। धूमकेतुवत् मध्ये एव कस्मादकस्मात् पञ्चमी। अर्धजरतीयं न न्याय्यम्। एवं लिङ्गसमवायादित्यत्रापि। (२) लिङ्गसमवाया इति गुणाश्रया इति कौ–पाठ एव साधिष्ठः। भाष्यादौ वर्तमानयथाश्रुतपाठे तु गुणाश्रयशब्दस्य लोप एव प्रसज्येत। अत्र तत्सिद्धिः इत्यारभ्य लिङ्गसमवायः इत्यन्तानि सूत्राणि मिलित्वा एकमेव सूत्रं, तच्च 'तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः' इति। तत्र गुणाश्रया इति विसर्गरहितः सु–पाठः अशुद्ध एव। गुणाश्रयः इत्येकवचनान्तः पाठः कौस्तुभे। सोपि न युक्तः गुणाश्रयाः इति बहुवचनान्तः य–कु–कौ–वा पाठ एव समीचीनः। अत्र कौस्तुभः 'यद्यपीदमेकमेव सूत्रं तथापि भेदेनोपन्यासो भाष्यादौ' इति। अत एव तत्सिद्धिपेटिका इतिशब्देनेदं आकरेषु प्रसिद्धम्। अत्र सुधा १।२।३१ सूत्रे 'ग्रन्थान्तरेष्वदर्येकं सूत्रं तत्सिद्धिसूत्रवत्' इति। भाष्यपुस्तके तु तत्सिद्धिः जातिः इतिरीत्या पृथगेव मुद्रितानि सूत्राणि। सूत्राङ्कस्तु लिङ्गसमवाय. इत्यत्रैव २३ इति मुद्रितः। कौस्तुभे तु "गुणाश्रया इत्यन्तस्यैकसूत्रत्वेपि मन्त्राधिकरणपूर्वपक्षसूत्रवत् प्रत्येकं प्रथमान्तसूत्रोपन्यासो व्याख्यासौकर्यार्थं न विरुद्ध्यते" इत्युक्तम्। मुद्रणे तु पृथक् सूत्राणि उपन्यस्तानि सूत्राङ्काश्चापि एकैकवृद्ध्या मुद्रिताः, अन्तिमं च सूत्रं 'लिङ्गसमवाया इति गुणश्रयाः' इति मुद्रितम्। चौखम्बावार्तिके सुधाया च प्रथमत. एकसूत्रत्वेन संमुद्र्य पुन. भित्त्वाऽपि सूत्राणि निवेशितानि अङ्कश्च न वर्धितः।

अधि० १३ अक्त इति भा। वाक्यशेष इति भाट्ट–कौ। वाक्यशेषेण संधिग्धार्थनिरूपणं इति म–सा–वि–भाट्ट–शा–वृ–ल–कु–सु। वाक्यशेषेण संदिग्धार्थनिर्णय इति बिन्दुः।

अधि० १४ अव्यवस्थितेषु सामर्थ्याद् व्यवस्था इति बिन्दुः। सामर्थ्यं इति भा–भाट्ट–कौ। सामर्थ्यानुसारेण व्यवस्था इति वृ। सामर्थ्यानुसारेण अव्यवस्थिताना व्यवस्था इति म–सा–

२५ अर्थाद् वा कल्पनैकदेशत्वात् । ३० म
—सा—वि—शा—वृ—ल—चौ—कौ, २५भाट्ट
—क, २४ वा—सु, २१य—कु, १९बिन्दुः.

न्यायास्त्वेकोनविंशतिः ॥
उक्तं तथाऽर्थादेकविंशतिः ॥
॥ इति प्रथमाध्यायस्य चतुर्थः पादः अध्यायश्च समाप्तः ॥

---

भाट्ट-सु । सामर्थ्येन अव्यवस्थितानां व्यवस्था इति वि-शा-ल-कु ।

सू० २४ ( १ ) गधे तु वा इति कु । गधेषु वा इति कु-पाठान्तरम् ।

सू० २५ ( १ ) कल्पना इति पृथक् पदं भा-क-कु-कौ । कल्पनायाः वेदैकदेशत्वात् इति वृमूलं तेन पदैक्यम् ।

---

## ॥ अथ द्वितीयोऽध्यायः ॥

॥ अथ द्वितीयाध्यायस्य प्रथमः पादः ॥
अधि० १, १।२ भाट्ट-कौ-मण्डनः.

१ भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ।

२ सर्वेषां भावोऽर्थ इति चेत् ।

३ येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात् तेभ्यः पराऽऽकाङ्क्षा भूतत्वात् स्वे प्रयोगे ।

---

अधि० १ अत्र भाष्ये वर्णकद्वयम् । तत्र प्रथमवर्णकमेव प्रतिपदाधिकरणं नाम । तच्च उत्सूत्रम् । तच्च अङ्कतः प्रथमाधिकरणत्वेन गृहीतं भाट्ट-कौ-मण्डनैः । द्वितीयं तु भावार्थाधिकरणं नाम । भाष्ये तु द्वयमपि प्रथमाधिकरत्वेनैव मुद्रितम् । मण्डनकृतविभागस्तु समीचीनः । ततश्च इतआरभ्यैव भाट्ट-कौ-मण्डनाधिकरणाङ्कः भा-धिकरणाङ्कात् एकेनाधिकः । अपूर्वस्याख्यातपदप्रतिपाद्यत्वं इति म-बिन्दुः । अपूर्वस्याख्यातप्रतिपाद्यत्वं इति सा-वि-शा-वृ-ल-कु-सु । प्रतिपद इति-भाट्ट-कौ । भावार्थ इति भा-भाट्ट-कौ ।

सू० २ ( १ ) " सर्वेषां भावोऽर्थ इति चेद्येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे, येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः क्रिया प्रतीयेताश्रितत्वात् प्रयोगस्य " इत्येतावत् द्वितीयं सूत्रं य-कु । एकार्थपर्यवसायित्वादेकमपि सूत्रं व्याख्यासौकर्याय त्रेधा विभज्योपात्तं भाष्ये इति कुतूहलम् । भाष्ये वार्तिके सुधायां वा एकस्य सतः सूत्रस्य त्रेधा विभागः इत्यत्र न किमपि विवेचनमुपलभ्यते । वस्तुतत्त्वं तु सूत्रकार एव जानीयात् । कुतूहलाभिप्रायस्तु साधीयान् । सर्वेषा भावोऽर्थः इत्याशङ्काया उत्तरस्य आख्यातविवेचकसूत्रांशे एव दर्शनात् एकसूत्रत्वस्यैव प्रतीतेः ।

सू० ३ ( १ ) 'येषामुत्पत्तौ स्वप्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराऽऽकाङ्क्षा भूतत्वाद्येषां तूत्पत्तौ स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेत ' इत्येतावदेतादृशं तृतीयं सूत्रं भाट्ट-क । (२) परा इति आकाङ्क्षा इति च पृथक् पदद्वयं क-वृ । परस्य आकाङ्क्षा इति समासेन सामासिकपदैक्यं वृ । परस्य आकाङ्क्षा नेत्यध्याहार्य इति केचिन्मतेन, परस्य आकाङ्क्षा, काङ्क्षाया

४ येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात् तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य । ४ तः ५ कौ, २ य–कु.

अधि० २, ३ भाट्ट–कौ–मण्डनः.

५ चोदना पुनरारम्भः । ६ कौ, ३ य–कु.

अधि० ३, ४ भाट्ट–मण्डनः, २ बिन्दुः.

६ तानि द्वैधं गुणप्रधानभूतानि । ७ कौ, ४ य–कु, ३ बिन्दुः.

७ यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् । ८ कौ, ५ य–कु.

८ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् । ९ कौ, ६ य–कु.

अधि० ४, ५ भाट्ट–कौ–मण्डनः, ४ बिन्दुः.

९ धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् । ७ य–कु, ४ बिन्दुः.

१० तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात् । ८ य–कु.

---

अभावः, इति स्वमतेन सामासिकपदैक्यं वा, कु । ‘ पराकाङ्क्षा अन्याकाङ्क्षा निष्पाद्यत्वेन वा प्रधानाकाङ्क्षा, न विद्यते इत्यध्याहारः ” इति सामासिकपदैक्यं वा, “ परा दूरे आकाङ्क्षा ” इति पदभेदो वा वार्तिकमतेन । ( ३ ) स्वे प्रयोगे इति पदद्वयं नास्त्येव भाट्ट–क ।

सू० ४ (१) भ्यः क्रिया प्र इति य–कु ( २ ) आश्रितत्वात् प्रयोगस्य इत्येतावत् पृथक् चतुर्थ सूत्रं भाट्ट–क, पञ्चमं सूत्रं कौ । तथा च चतुर्थपञ्चमसूत्रयोः भाष्यादौ अन्यथा योगविभागः, अन्यथा च भाट्ट–क ग्रन्थयोः । कौस्तुभे तु अत्र सूत्राङ्कवृद्धिर्नवमसूत्रपर्यन्तं तत्र सशोधको जजागार । सूत्रद्वये भिन्ने नवमाङ्क एव निवेशितवान् विस्तरादिना च साकं अङ्कैक्यं चकार । सर्वोऽयं कौस्तुभसंशोधकप्रयासोऽङ्कविषये निष्फल एवेति मन्यामहे ।

अधि० २ अपूर्वं इति भा–भाट्ट–कौ । अपूर्वसद्भावः इति बिन्दुः । अपूर्वस्यास्तित्वं इति म–सा–वि–भाट्ट–शा–वृ–ल–कु–सु ।

सू० ५ (१) पुनः आरम्भः इति पदद्वयं क–सोम –वृ–बिन्दुटि–कौ । तेन भाष्यादावपि तथैव स्यादित्यनुमीयते । तत्र ‘ तु पुनः ’ इति क–सोम, ‘पुनरिति शब्दालंकारे ’ वृ, ‘पुनः शब्दो यत इत्यर्थे ’ कु, ‘ पुनः शब्दो हेतौ ’ बिन्दुटिप्पणी ।

अधि० ३ कर्मणां गुणप्रधानभावनिरूपणं इति बिन्दुः । कर्मणां गुणप्रधानभावविभागः इति म–सा –वि–भाट्ट–शा–वृ–ल–कु–सु । तानि द्वैधं इति भा –भाट्ट–कौ ।

सू० ७ ( १ ) यैर्द्रव्यं न चिकीर्ष्यते इति सप्तमं, तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्, इति नवमं चौ । ‘ यैस्तु द्रव्यं चिकीर्ष्यते ’ इत्यादि सूत्रं तु तत्र परित्यक्तमेव । तत्सर्वं निद्रालोर्लक्षणम् ।

अधि० ४ संमार्गे इति भा–भाट्ट–कौ । संमार्जनादीनामप्रधानता इति म–सा–वि–भाट्ट–शा –वृ–ल–कु–सु । संमार्जनादीनामप्राधान्यं इति बिन्दुः । शीर्षकद्वयमपीदं न युक्तं, नह्यत्र प्राधान्याभावमात्रं प्रतिपादनीयं, किंतु गुणत्वं, तथा च संमार्जनादीनां गुणकर्मत्वं इति युक्तम् । अत एव ‘संमार्जनक्रियायाः गुणकर्मत्वमवघातवद् भविष्यति’ इति विस्तरः ।

सू० १० (१) स ध इति च्छित्त्वा मुद्रणं वा–सु । एतेन सः इति पृथक् पदं भाति, तथापि साधर्म्याभिधानं युक्तं इति सुधामूलोक्तत्वात् अशुद्धमेव । (२) धर्मा स्यात् इति भाट्ट–क–वृ । धर्म स्यात् इति य–कु–कौ । अत्र सधर्मः इति भाष्यसूत्रे भाष्यमूले च, सधर्मा इति अनिच्प्रत्ययान्तः पुंलिङ्गपाठः वृ–क, सधर्म इति अनिच्प्रत्ययान्त एव नपुंसकपाठः य–कु । तत्र य–कु–पाठ एव साधीयान् नेतरौ, पूर्वसूत्रस्थकर्मपदस्य विशेष्यत्वात् इति मन्यामहे ।

११ द्रव्योपदेश इति चेत्। ९ य-कु.

१२ न तदर्थत्वाल्लोकवत्, तस्य च शेषभूतत्वात्। ९ य-कु.

अधि० ५, ६ भाट्ट-कौ-मण्डनः.

१३ स्तुतशस्त्रयोस्तु संस्कारो याज्यावत्, देवताऽभिधानत्वात्। १० य-कु, ५ बिन्दुः.

१४ अर्थेन त्वपकृष्येत देवतानामचोदनाऽर्थस्य गुणभूतत्वात्। ११ य-कु.

१५ वशावद् वाऽगुणार्थं स्यात्। १२ य-कु.

१६ न श्रुतिसमवायित्वात्। १३ य-कु.

१७ व्यपदेशभेदाच्च। १४ य-कु.

१८ गुणश्चानर्थकः स्यात्। १५ य-कु.

१९ तथा याज्यापुरोरुचोः। १६ य-कु.

२० वशायामर्थसमवायात्। १७य-कु.

२१ यत्रेति वाऽर्थवत्त्वात् स्यात्। १८य-कु.

---

सू० ११ (१) चेदन्तमुत्तरेणैकं क-य-कु।

अधि० ५ स्तुतशस्त्रं इति भा-भाट्ट-कौ। स्तोत्रादिप्राधान्यं इति म-सा-वि-भाट्ट-शा-वृ-ल-कु-सु। स्तोत्रादीना प्राधान्यं इति बिन्दुः।

सू० १४ (१) अर्थे न इति सु। तत्तु अशुद्धं, मन्त्रप्रकाश्येन देवतारूपेण अर्थेन स्तोत्रप्रयोजनेन अपकृष्टत्वात् इति सुधामूलात्। तस्यार्थेनापकृष्टत्वात् इति च वार्तिकात्। (२) देवतानामचोदनार्थस्य इत्यैकपद्यं भाष्यमूल-क-वृ-संमतम्। कुतूहले तु अर्थस्येति भिन्नं पदं, देवतानामचोदना सा अर्थेन अपकृष्येत, कुतः, अर्थस्य गुणभूतत्वात् इति तेनोक्तत्वात्। सूत्रे तु 'नाऽर्थ' इति न मुद्रितम्। मन्त्रोऽभिधानवाची (२।१।२८) इत्यत्र तु अवग्रह आहत्य दत्तोऽनावश्यकत्वेऽपि। आवश्यकत्वेऽपि च प्रकृतेऽवग्रहो न दत्त इति वैपरीत्यम्।

सू० १५ (१) अत्र गुणार्थं अगुणार्थं इति वा पदच्छेदः इति संशयः समुत्पद्यते। तत्र तावद् भाष्येतरसर्वपुस्तकेषु 'वशावद्वा गुणार्थं स्यात्' इति च्छित्त्वा अवग्रहमदत्वा च मुद्रितम्। 'तादृशाकृग्द्वयं अगुणार्थं वा' इति तु क-मूलम्। 'गुणार्थं महत्त्वरूपगुणसहितेन्द्रस्मरणार्थं' इति वृ-मूलम्। महत्त्वादिगुणकीर्तनार्थमेव महदादिपदं इति कु-मूलम्। सुधाया तु "यथा वशात्वगुणविशिष्टस्यापि अजाद्रव्यस्यागुणार्थं शुद्धाजाप्रकाशनार्थं इत्यकारप्रश्लेषेण सूत्रव्याख्यां सूचयति नचेति" "निर्गुणशब्देनाकारप्रश्लेषो-गुणार्थमिति सूत्रावयवे सूचितः" इति चोक्तम्।

सू० १६ (१) वायत्वात् वृ-कुटि। वृमूले यद्यपि 'श्रुत्या इन्द्रपदश्रुत्या मन्त्रस्य समवायत्वात् संबन्धत्वात्' इति व्याख्यातं तथापि अर्थशून्यैव सा व्याख्या। 'श्रुत्या मन्त्रस्य संबन्धत्वात्' इति वाक्यं जरद्गवादिवाक्यवदेव निरर्थकम्। अथ संबन्धत्वात् इत्यत्र संबद्धत्वात् इति चेत् पठिष्यते, तथा सति समवायित्वात् इत्येवापतितम्।

सू० १७ (१) देशाच्च इति भाट्ट-वा-सु। चौखम्बावार्तिके व्यपदेशाच्च इति सूत्रं, व्यपदेशभेदाच्च इति तु वार्तिकमूलम्। वस्तुतस्तु व्यपदेशभेदात् इत्येव पाठः सर्वत्र व्याख्यातः इति भाट्ट-वा-सुमुद्रणमशुद्धमेव (२)चेति इति इतिशब्द. सुधाया सूत्रावयवत्वेनैव मुद्रितः। तत्तु अव्यवस्थितचित्ततां संशोधकस्य कथयति। 'व्यपदेशभेदाच्चेति सूत्रोक्तेन इन्द्रमहेन्द्रयोर्भेदापदेशेन इति हि सुधापङ्क्तिः।

सू० २० (१) र्थसंयोगात् इति भाट्ट-क-कौ.

सू० २१ (१) यच्चेति इति सा-वृटि-ल-चौ-कुटि। अत्र सुधा, "इतिकरणेन संस्कार्यसद्भावं परामृश्य यत्र संस्कार्यसद्भावः तत्र प्रगाथः स्यात् इत्येवं सूत्रं व्याख्यातम्। प्रगाथमेव वा इतिकरणेन परामृश्य यत्र प्रगाथः पठ्यते तत्रैव स्यात् इति।" 'यत्र इति एतत् स्यात्' इति च कस्तूरिवृत्तिः। अत्र भाष्यमूले विद्यमानया 'यच्चैतत् प्रगाथस्योत्कर्ष इति'

२२ नै त्वाम्नातेषु । १९ य-कु.
२३ दृश्यते । २० य-कु.
२४ अपिवा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् । २२ वृ, २१ य-कु.
२५ शब्दपृथक्त्वाच्च । २३ वृ, २२ य-कु.
२६ अनर्थकं च तद्वचनम् । २४ वृ, २३ य-कु.
२७ अन्यश्चार्थः प्रतीयते । २५ वृ, २४ य-कु.
२८ अभिधानं च कर्मवत् । २६ वृ,२५य-कु.
२९ फलनिर्वृत्तिश्च । २७ वृ, २६-य-कु.
अधि० ६, ७ भाट्ट-कौ-मण्डनः.
३० विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् । २८ वृ, २७ य-कु, ६ बिन्दुः.
३१ अपिवा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् । ३२ कौ, २९ वृ, २८ य-कु.
अधि० ७, ८ भाट्ट-कौ-मण्डनः.
३२ तच्चोदकेषु मन्त्राऽऽख्या । ३३ कौ, ३० वृ, २९ य-कु, ७ बिन्दुः.
अधि० ८, ९ भाट्ट-कौ-मण्डनः.
३३ शेषे ब्राह्मणशब्दः । ३४ कौ, ३१ वृ, ३० य-कु, ८ बिन्दुः.
अधि० ९, १० भाट्ट-कौ-मण्डन..
३४ अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः । ३५ कौ, ३२ वृ, ३१ य-कु, ९ बिन्दुः.
अधि० १०, ११ भाट्ट-कौ-मण्डनः.
३५ तेषामृग् यत्रार्थवशेन पादव्यवस्था । ३६ कौ, ३३ वृ, ३२ य-कु, १० बिन्दुः.

---

इतिपङ्क्त्या विद्यासागरादयोऽपि विप्रलब्धाः इति मन्यामहे ।

सू०२२ (१) इदं उत्तरं चेति द्वे सूत्रे न विद्येते वृ । 'नेदं दृश्यते क्वचिदन्यत्र' इति सूत्रद्वयेऽपि कु-टिप्पणी ।

सू० २९ (१) र्वृत्तेश्च इति भाट्ट-वृ-कुटि ।

सू० ३० (१) र्थ्यमेकशब्दात् इति वृ-कुटि बिन्दुः । यद्यपि बिन्दौ ऐकशब्दात् इति मुद्रितं तथापि तत्र ऐकशब्द्यात् इति वा एकशब्दात् इति वा पाठो ग्राह्यः । यथामुद्रणं तु अशुद्धमेव ।

अधि० ६ मन्त्र इति बिन्दुशीर्षकं न युक्तं, मन्त्राधिकरणस्य प्रथमाध्यायतृतीयपादगतत्वात् । अत्र च मन्त्रगताख्यातस्य न विधायकत्वं इति सिद्धान्तितत्वात् । मन्त्राणामविधायकत्वं इति वृ । मन्त्राविधायकत्वं इति भा-म-सा-वि-भाट्ट-शा-ल-कु-सु-कौ । विधिमन्त्र इति कौ । विधिमन्त्रयोरैकार्थ्य इति सूत्रस्य विधिमन्त्रशब्देनारम्भात् तदेवास्याधिकरणस्य नामधेयं संपन्नम् ।

अधि० ७ मन्त्रनिर्वचनं इति म-सा-वि-भाट्ट-शा-ल-कु-सु। मन्त्रनिर्वचनं, ब्राह्मणनिर्वचनं इति बहुषु ग्रन्थेषु विद्यमानमपि अयुक्तम् । लक्षणमन्यत् निर्वचनं चान्यत् । निरुक्तं, निरुक्तिः, निर्वचनं इति पर्यायाः । लक्षणं तु इतरव्यावर्तको धर्मः । मन्त्रलक्षणं इति भा-बिन्दु-वृ-कौ ।

अधि० ८ ब्राह्मणनिर्वचनं इति म-सा-वि-भाट्ट-शा-ल-कु-सु । ब्राह्मणलक्षणं इति भा-बिन्दु-वृ-कौ ।

अधि० ९ ऊहादीनाममन्त्रत्वं इति भा-बिन्दु-वृ । ऊहाद्यमन्त्रता इति म-सा-वि-भाट्ट-शा-ल-कु-सु-कौ ।

अधि० १० ऋग्लक्षणम् ।

अधि० ११, १२ भाट्ट-कौ-मण्डनः.

३६ **गीतिषु सामाऽऽख्या ।** ३७ कौ, ३४ वृ, ३३ य-कु, ११ बिन्दुः.

अधि० १२ १३ भाट्ट-कौ-मण्डनः.

३७ **शेषे यजुःशब्दः ।** ३८ कौ, ३५ वृ, ३४ य-कु, १२ बिन्दुः.

अधि० १३, १४ भाट्ट-कौ-मण्डनः.

३८ **निगदो वा चतुर्थं स्याद् धर्मविशेषात् ।** ३९ कौ, ३६ वृ,३५ य-कु, १३बिन्दुः.

३. **व्यपदेशाच्च ।** ४० कौ, ३७ वृ, ३६ य-कु.

४० **यजूंषि वा तद्रूपत्वात् ।** । ४१ कौ, ३८ वृ, ३७ य-कु.

४१ **वचनाद् धर्मविशेषः ।** ४२ कौ, ३९ वृ, ३८ य-कु.

४२ **अर्थाच्च ।** ४३ कौ, ४० वृ, ३९ य-कु.

४३ **गुणार्थो व्यपदेशः ।** ४४ कौ, ४१ वृ, ४० य-कु

४४ **सर्वेषामिति चेत् ।** ४५ कौ, ४२ वृ, ४१ य-कु.

४५ **न ऋग्व्यपदेशात् ।** ४६ कौ, ४३ वृ, ४१य-कु.

अधि० १४, १५ भाट्ट-कौ-मण्डनः.

---

**अधि० ११** सामलक्षणम् ।

**अधि० १२** यजुर्लक्षणम् ।

**अधि० १३** निगद इति भा-कु-कौ । निगदानां यजुःष्वन्तर्भावः इति बिन्दु-वृ । निगदानां यजुष्ट्वं इति म-सा-वि-भाट्ट-शा-ल-कु-सु-कौ ।

**सू० ३८** ( १ ) तुर्थःस्या इति भा-भाट्ट-क-वृ -बिन्दुः । यद्यपि भा-सूत्रे चतुर्थः इति मुद्रितं तथापि भाष्यमूले चतुर्थं मन्त्रजातं निगदो नाम इत्युक्तत्वात् चतुर्थं इत्येव भाष्यसंमतः पाठ इति स्पष्टम् । वार्तिकेऽपि चतुर्थं मन्त्रजातं निगदः स्यात् इत्येव । कस्तूरिवृत्तौ तु चतुर्थः प्रकारः इति, बिन्दौ च चतुर्थो भेद· इति व्याख्यानात् तन्मते चतुर्थः इति पाठ एव । अत्र भाष्यवार्तिकसोमनाथकुतूहलैः चतुर्थं इत्युक्तत्वात् तथा स्वीकार्यमेव । प्रकरणविचारे तु निगदः इत्यस्य उद्देश्यत्वात् विधेयबोधकश्चतुर्थशब्दोऽपि तदनुसारेण पुंलिंगो भवितुमर्हति । चतुर्थं इति पाठं दृष्ट्वा सिद्धस्य गतेश्चिन्तनार्थं मन्त्रजातं इत्यध्याहृतम् । अनुवृत्तिस्तु न कस्याऽपि लिङ्गस्य । मन्त्रः सामाख्या यजुःशब्दः इति पूर्वत्र पदानि । महतां पुरतस्तु किं मादृशेन वराकेण वक्तव्यम् ?

**सू० ४४** ( १ ) षामपि चेत् इति वृ । षामपीति चेत् इति क ( २ ) चेदन्तमुत्तरेणैकं क-य-कु ।

**सू० ४५** ( १ ) ऋक् इति पृथग्वा पदं, व्यपदेशपदेन समस्तं वेति विचारे, ' चेन्न. कुतः, ऋग्व्यपदेशात् ' इति कुतूहलात् 'निगदानां ऋग्भेदव्यपदेशोऽपि संगच्छते ' इति कौस्तुभात्, 'ऋचा निगदभेदव्यपदेशात् ' इति कस्तूरिग्रन्थाच्च पदैक्यं सिद्धयति । न्यायसुधा च ' ऋचः सकाशात् निगदस्य भेदेनोपदेशात् न ऋचः निगदत्वप्राप्तिः इत्येवं सूत्रव्याख्यानार्थं नेत्यादि भाष्यं व्याचष्टे ' इति । तेनाऽपि पदैक्यमेव सिद्धयति । भाष्यं तु " न ऋचो निगदा इति व्यपदिश्यन्ते अयाज्या वै निगदाः, ऋचैव यजन्ति इति । पृथक्त्वनिमित्ता हि व्यपदेशा भवन्ति " इति । निगदः न ऋक् तयोर्भेदेन व्यपदेशात् इति भाष्यार्थः । तथा च भाष्यात् पदभेदः सिद्धयति इति वयं प्रतीमः । ऋग्व्यपदेशः ऋक्त्वेन व्यपदेशः इत्यर्थस्तु सिद्धान्तविरुद्धः इति कुतूहलं न संगच्छते । कौस्तुभसुबोधिन्योस्तु भेदपदस्याध्याहारेण साधितं, तत्तु ऋक्पदस्य पृथक्त्वेऽपि सिद्धयत्येव । सर्वथाऽपि ऋक् इति पदस्य भेदमेव श्रेयांसं मन्यामहे ।

**अधि० १४** अर्थैकत्वं इति भाट्टशीर्षकं सूत्रगतप्रथमपदत्वमात्रेण प्रयुक्तमिति भाति । वस्तुतस्तु तत् पदं एकवाक्यलक्षणबोधकं, एकवाक्यत्वं चात्र प्रतिपाद्यम् । एकवाक्यत्वं इति भाट्ट-कौ । एकवाक्यत्वलक्षणं इति म-सा-वि-शा-बिन्दु-वृ-ल -कु-सु । यजुःपरिमाणं इति भा । यजुरेकत्वं इति कु ।

४६ अर्थैकत्वादेकं वाक्यं, साकाङ्क्षं चेद् विभागे स्यात् । ४७ कौ, ४४ वृ, ४२ य–कु, १४ बिन्दुः.

अधि० १५, १६ भाट्ट–कौ–मण्डनः.

४७ समेषु वाक्यभेदः स्यात् । ४८ कौ, ४५ वृ, ४३ य–कु, १५ बिन्दुः.

अधि० १६, १६ तः १७ वि, १७ भाट्ट–कौ, १७ तः १८ मण्डनः.

४८ अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् । ४९ कौ, ४६ वृ, ४४य–कु, १६ बिन्दुः.

अधि० १७, १९ मण्डनः, १८ वि–भाट्ट–शा–कौ.

४९ व्यवायान्नानुषज्यते । ५० कौ, ४७ वृ, ४५य–कु, १७ बिन्दुः.

न्यायास्तु पादे नव वै दशापि॥
भावार्थी अर्थेनाऽपिवाऽनाम्नातेषु सर्वेषां पञ्चचत्वारिंशत्॥

॥ इति द्वितीयाध्यायस्य प्रथमः पादः ॥

* * *

॥ अथ द्वितीयाध्यायस्य द्वितीयः पादः ॥

अधि० १.

१ शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् । १ तः २ चौ.

अधि० २.

---

सू० ४६ ( १ ) अर्थैक्यादे इति वैयाकरणभूषणस्य दर्पणटीकाया पाठः १।२ पृ. ३५ ।

अधि० १५ यजुर्भेदः इति कु । वाक्यभेदः इति कु–भिन्नाः सर्वे ।

अधि० १६ अनुषङ्गः इति सर्वे ।

सू० ४८ ( १ ) क्यपरिस इति भाट्ट–क–वृ–कुटि–बिन्दु–सु–कौ ।

अधि० १७ अननुषङ्गः इति बिन्दुर्न साधीयान्, व्यवधाने सति अनुषङ्गो न कर्तव्य इति हि प्रतिपाद्यम् । व्यवायः इति कु–कौ । इदमपि न साधीयः । व्यवेताननुषङ्गः इति बिन्दु–कु–कौभिन्नाः सर्वे । इदं तु साधीयः ।

सू० ४९ ( १ ) व्यवया इति म–वि–ल–पाठः अशुद्ध एव । ( २ ) षज्येत इति भा–म–सा–वि–भाट्ट–शा–ल–चौ । षज्यते वृ–य–कु–बिन्दु–वा–सु–कौ । अत्र भाष्यं " वायुर्वातेन गच्छतां इत्येष ( मन्त्रः ) सं यजत्रैरङ्गानि इति बहुवचनान्तेन व्यवहितत्वात् संयज्ञपतिराशिषा इत्यत्र नानुषज्जते " ( न तु सज्यते ) इति । वार्तिकं तु ' असंबन्धतिरोधाने वैषम्यान्नानुषज्यते ' इति, ' योग्येनापि यज्ञपतिना नानुषज्यते ' इति च । तथा च सज्येत सजते सज्यते इति पाठत्रयम् । तत्र ग्लुञ्चु षस्ज गतौ इति सस्ज्धातोर्भौवादिकत्वात् लिङ्श्चात्रानावश्यकत्वात् दैवादिकत्वाभावात् कर्मणिरूपस्य चायोग्यत्वात् ' अनुषज्जते ' इति भाष्यमूलपाठमेव साधीयांसं मन्यामहे ।

अधि० १ अङ्गापूर्वभेद इति भा–भाट्ट–कौ–भिन्नाः सर्वे । नितान्तमसङ्गतमिदम् । यजते जुहोति ददाति इति शब्दभेदात् कर्मभेदोऽत्र प्रतिपाद्यते । भावनाभेदे च अपूर्वभेदोऽर्थसिद्ध इत्यन्यदेतत् । शब्दान्तरं इति भा–भाट्ट–कौ । भावनाभेदकेषु शब्दान्तरं प्रथमं कारणमिदं प्रदर्शितम् । सूत्रे च प्रथममिदं पदमिति ।

सू० १ (१) भेदः इत्यन्तं प्रथमं सूत्रं, कृतानुबन्धत्वात् इति द्वितीयं चौ । तत्तु अयुक्तम् ( २ ) बन्धित्वात् इति वृ–कुटि वा–वैजयन्ती ( १।१।१ )

अधि० २ अभ्यास इति भा–भाट्ट–कौ । समिदाद्यपूर्वभेदः इति भा–भाट्ट–कौ–भिन्नाः सर्वे । अत्राधिकरणे यजतिपदाभ्यासात् कर्मभेदः साधितः । तथा च आख्याताभ्यासात् भावनाभेदोऽधिकरणप्रतिपाद्यः । एवं सति अपूर्वशब्देन यदि भावना विवक्ष्येत तदा समिदादौ अपूर्वस्य भावनायाः अभ्यासात् भेदः इति कथंकथंचित् संगमयितुं शक्येत । स्वरसतस्तु अयुक्तमेव ।

२ एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ।

अधि० ३.

३ प्रकरणं तु पौर्णमास्यां रूपावचनात् ।

४ विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ।

५ गुणस्तु श्रुतिसंयोगात् ।

६ चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत ।

७ व्यपदेशश्च तद्वत् ।

८ लिङ्गदर्शनाच्च ।

अधि० ४.

९ पौर्णमासीवदुपांशुयाजः स्यात् । ८ य, ४ बिन्दुः.

१० चोदना वाऽप्रकृतत्वात् । ९ य.

११ गुणोपबन्धात् । १० य.

१२ प्राये वचनाच्च । ११ य.

---

सू० २(१) स्यैव पु इति वृ-बिन्दुः । सोमे तु २।४।२ अधिकरणे ' एव ' इति, प्रकृताधिकरणे तु ' एवं ' इति मुद्रितम् । ( २ ) भाष्यादौ सूत्रे पुनः इति च्छिन्नं मूले तु संहितम् । ( ३ ) नास्तीदं सूत्रं चौ । सुधाया द्वितीये सूत्रेपि प्रथमोऽङ्क एव निवेशित, तृतीये सूत्रे २ अङ्कः, चतुर्थे च सूत्रे ४ इत्येव यथाभाष्यं ज्ञेयं ।

अधि० ३ आघारायाग्नेयादीनामङ्गाङ्गिभाव इति म-सा-वि-भाट्ट-शा-वृ-ल-कु-सु । पौर्णमासी इति भा-भाट्ट-कौ । विद्वद्वाक्यानुवादकत्वं इति वृ । विद्वद्वाक्यस्यानुवादकत्वाघारायाग्नेयादीनामङ्गाङ्गिभावः इति बिन्दुशीर्षकं चमत्कारावहमेव । अत्र विद्वद्वाक्यस्येति षष्ठ्यन्तं पदं अनुवादकत्वे एवान्वेति । तथा च विद्वद्वाक्यानुवादकत्वं एकः पदार्थः । अनुवादकत्व, आघारादि, आग्नेयादि इति त्रयाणां द्वंद्वः कृतः । तर्हि किं त्रयाणामेषां अङ्गाङ्गिभावः संमतो महाशयस्य ? आग्नेयादीनामङ्गित्वं आघारादीनामङ्गत्वं इति हि प्रतिपाद्यमस्मिन्नधिकरणे । विद्वद्वाक्यस्य अनुवादकत्वं तु प्रतिपाद्यं स्यान्न वा । अनुवादकत्वं तु नाङ्गि नाप्यङ्गम् । सर्वथाऽपि उद्वेजकमेवेदं बिन्दुशीर्षकं शीर्ष्णः ।

सू० ३(१) इदं सूत्रं द्वितीयाधिकरणगुणसूत्रत्वेन मुद्रितं ल । तत्तु अयुक्तम् ।

सू० ४ ( १ ) च पूर्वे इति भाट्ट-क-वृ-कु-वा-सु । ( २ ) सर्वेषु इति कौ ।

सू० ५ ( १ ) गुणयोगात् इति सूत्रं वा । तत्तु सुधाव्याख्यानविरुद्धम् ।

सू० ६ ( १ ) च्छासनाच्चो इति भाट्ट-वृ-कुटि । भाष्यमूलादपि अयमेव पाठः सिद्ध्यति । ' गुणानां युगपच्छासनात् ' इत्येव हि भाष्यपङ्क्तिः शास्त्रशब्दस्यैव शासनपदेन व्याख्यानं इति तु शास्त्रशब्दस्य प्रसिद्धार्थत्वाभावे स्यात् । अत्र युगपच्छासनात् इत्येकमेव समस्तं पदं मन्यामहे । ( २ ) स्त्राच्चो इति शापाठस्तु अशुद्ध एव ( ३ ) तस्यतस्येति वीप्सा । वीप्सायां चैकपद्यमेव युक्तं स्वीकर्तुम् , अत एव वैदिकाः गणंगणं सुशस्तिभिः इत्यादौ गणंगणमिति गणंऽगणम् इति द्विखण्डं कुर्वन्ति न पदभेदम् । भाष्यादिसर्वपुस्तकेषु क्वापि अपराध्यापि पदैक्यं न स्वीकृतं, तदयुक्तम् ।

सू० ८ ( १ ) नास्तीदं सूत्रं य ।

अधि० ४ उपांशुयागापूर्वत्वं इति वृ । उपांशुयाज इति भा-भाट्ट-कौ । उपांशुयाजापूर्वता इति भा-भाट्ट-कौभिन्नाः सर्वे । ' उपांशुयाजमन्तरा यजति' इति श्रुत्यनुसारात् उपांशुयाजशब्द एव साधुः न उपांशुयाग इति, तेन वृ-शीर्षकमशुद्धम् ।

सू० १० ( १ ) वा प्र इति कौ-वा-सु । अत्र भाष्ये ' प्रकृतानां यागानामभावात् ' इत्युक्तत्वात्, ' प्रकृतानामसद्भावाद् गम्यते नानुवादता ' इति वार्तिकाच्च ' वाऽप्र ' इत्यवग्रह आवश्यकः । कौस्तुभेपि अन्तरालवाक्ये एव कर्मचोदना, विष्ण्वादिवाक्ये कर्मविध्यसंभवेनानुवादासंभवात् इत्युक्त्वा तन्मतेऽपि अवग्रह आवश्यक एव ।

सू० १२ (१) प्रायव इति विटि-भाट्ट-वृ-कुटि ।

अधि० ५.

१३ आघाराग्निहोत्रमरूपत्वात्[1] । १२ य, ५ बिन्दुः.

१४ संज्ञोपबन्धात् । १३ य.

१५ अप्रकृतत्वाच्च । १४ य.

१६ चोदना[1] वा शब्दार्थस्य प्रयोगभूतत्वात्, तत्संनिधेर्गुणार्थेन पुनः[2]श्रुतिः । १५य.

अधि० ६.

१७ द्रव्य[1]संयोगाच्चोदना पशुसोमयोः, प्रकरणे ह्यनर्थको द्रव्यसंयोगो, नहि तस्य गुणार्थेन[2] । १६ य, ६ बिन्दुः.

१८ अचोदकाश्च संस्काराः । १७ य.

१९ तद्भेदाद् कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्, भेदो द्रव्यगुणी[1]भावात् । १८ य.

२० संस्कारस्तु न[1] भिद्येत[2] परार्थत्वाद् द्रव्यस्य गुणभूतत्वात्[3] । १९ य.

अधि० ७.

२१ पृथक्त्वनिवेशात्[1] संख्यया कर्मभेदः स्यात् । २०भाट्ट–य–वा–कौ, ७बिन्दुः.

अधि० ८.

२२ संज्ञा चोत्पत्तिसंयोगात् । २१ भाट्ट–य–कौ, ८ बिन्दुः.

---

**अधि० ५** आघाराग्निहोत्रं इति भा–भाट्ट–कौ । आघारादीनामपूर्वत्वं इति वृ । आघाराद्यपूर्वता इति म–सा–वि–शा–बिन्दु–वृ–ल–कु–सु । आघाराद्यपूर्वतादि इति भाट्ट । शीर्षकत्रयमिदमन्तिमं न साधीयः । आघारादिवाक्यं कर्मान्तरविधायकं न समुदायानुवादः इति हि साधितम् ।

**सू० १३** (१) अत्र सूत्रे सुधायां द्वादशाङ्क एव मुद्रितः, सोऽनवधानात् । उत्तरसूत्रे चतुर्दशाङ्कस्य निवेशात् ।

**सू० १६** ( १ ) ना श इति वृ. ( २ ) नः श्रु इति वि–वृ–ल–चौ–सु–कौ । भाष्ये तु 'तस्मात् सिद्धं गुणार्थेन दध्ना जुहोतीत्येवमादीनां पुनःश्रुतिरिति' इत्युक्तत्वात् 'अतश्च अनन्यपरपुनःश्रवणादपि' इति कौस्तुभाच्च पुनःश्रुतिः इत्येकपद्यमेव स्वीकार्यम् ।

**अधि० ६** पशुसोम इति भा–भाट्ट–सु–कौ । पशुसोमयोरपूर्वत्वं इति बिन्दु–वृ । पशुसोमापूर्वता इति म–सा–वि–भाट्ट–शा–ल–कु । सोमेन यजेत इत्यादौ अनुवादो विधिर्वा इति संशये विधिः सिद्धान्तितः । ततश्च 'पशुसोमयोर्विधिः' इति युक्तं शीर्षकम् । ननु पूर्वत्वं अनुवादः, अपूर्वत्वं अनुवादाभावः विधिरित्यर्थः, इति कल्प्यतामिति चेन्न क्लिष्टत्वात् ।

**सू० १७** ( १ ) द्रव्यचोदना इति वि । 'कथं, द्रव्यसंयोगात् हृदयादिद्र०संयोगात्' इति वार्तिकात्तु द्रव्यसंयोगात् इत्येव पाठो युक्तः । ( २ ) णार्थत्वेन इति क । इदं सूत्रं सुधायां ७८८ पृष्ठे ।

**सू० १९** ( १ ) गुणभा इति कु । सुधाया तु द्रव्यगुणीभावात् इत्येव ८०२ पृष्ठे ।

**सू० २०** ( १ ) न विभि इति य । ( २ ) भिद्यते प इति कु । ( ३ ) इदं सूत्रं नास्ति भाट्ट–क–कौ–वा–सु । पूर्वसूत्रान्ते एव प्रयोजनप्रतिपादनान्तं अधिकरणं वार्तिके समापितम् । सुधायामपि संस्कारस्तु इत्यादिसूत्रस्य नाशतोपि स्पर्शः ।

**अधि० ७** संख्यया कर्मभेदः इति भा–भाट्ट–सु–कौ । संख्या इति भा–कौ । संख्याकृतकर्मभेदः इति म–सा–वि–भाट्ट–शा–ल–कु–सु । संख्याभेदात् कर्मभेदः इति बिन्दुशीर्षकमयुक्तम् । 'यत्रोत्पत्तिविधौ कर्मणा देवताविशिष्टद्रव्येण वा संख्यासामानाधिकरण्यं प्रतीयते तत्र स्वाश्रयसमवेतत्वसंबन्धेन स्वाधिकरणावधिकपृथक्त्वव्याप्तेः कर्मभेदः' इति तत्संपादकेनैव प्रतिपादितत्वात् ।

**सू० २१** ( १ ) निवेशित्वात् इति सोम ( ९। २।१५ अधिकरणे )–य–कु ।

**अधि० ८** संज्ञया कर्मभेदः इति बिन्दुः । संज्ञा इति भा–कौ । संज्ञाकृतः कर्मभेदः इति वृ । संज्ञाकृतकर्मभेदः इति म–सा–वि–भाट्ट–शा–ल–कु–सु ।

अधि० ९.

२३ गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् । २२ भाट्ट–य–कौ, ९ बिन्दुः.

अधि० १०.

२४ अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत । २३ भाट्ट–य–कौ, १० बिन्दुः.

अधि० ११, १० वृ.

२५ फलश्रुतेस्तु कर्म स्यात्, फलस्य कर्मयोगित्वात् । २४ भाट्ट–य–कौ, ११ बिन्दुः.

२६ अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत । २५ भाट्ट–य–कौ.

अधि० १२, ११ वृ.

२७ समेषु कर्मयुक्तं स्यात् । २६ भाट्ट–य–कौ, १२ बिन्दुः.

---

**अधि०** ९ आमिक्षा इति भाट्ट । गुण इति भा–कौ । देवताभेदकृतः कर्मभेदः इति वृ । देवताभेदकृतकर्मभेदः इति म–सा–वि–भाट्ट–शा–ल–कु–सु । देवताभेदात् कर्मभेदः इति बिन्दुः । अन्तिमं शीर्षकत्रयमशुद्धं । नहि क्वापि ग्रन्थे देवताभेदात् कर्मभेदः साधितः किंतु आमिक्षावाजिनरूपगुणभेदात् कर्मभेदः सिद्धान्तितः । अत एवेदमधिकरणं गुणाधिकरण इति प्रसिद्धम् । अत एव च गुण इति भा–कौ–शीर्षकम् ।

**सू०** २३ ( १ ) योगाद् वाक्य इति भाट्ट–क । भाष्ये तु अपूर्वसंयोगपदं गुणविशेषणत्वेन व्याख्यातं तेन पञ्चम्यन्तपाठो न भाष्यसंमतः ।

**अधि०** १० गुणप्रत्युदाहरणं इति भा । गुणशेष इति सु–कौ । द्रव्यविशेषानुक्तिकृतकर्मैक्यं इति म–सा–वि–भाट्ट–शा–ल–कु । द्रव्यविशेषानुक्तेः कर्मैक्यं इति बिन्दुः । स्वरसतस्तु गुणप्रत्युदाहरणं इति भा–शीर्षकमेव साधीयः । अन्तिमशीर्षकद्वयं तु न शुद्धं नाप्यशुद्धम् ।

**सू०** २४ ( १ ) अगुणे तु कर्मशब्दः एतावदेव ईदृशमेव च सूत्रं बिन्दु–वा । अत्र वार्तिकं ' अगुणे तु कर्मशब्द इति प्रत्युदाहरणसूत्रम् ' इति । तेन बिन्दु–वा–संशोधकौ विप्रलब्धौ । ' कर्मशब्द इति ' इत्यत्र सप्तम्यन्तत्वेन छेदो न तेषां मनसि प्रादुर्भूतः किं तु कर्मशब्दः इति प्रथमान्तत्वेनैव प्रादुर्भूतः उत्तरत्र च वार्तिकेऽपि ' कर्मशब्देऽगुणेऽप्यत्र कर्म भूयो विधीयते' इति सप्तम्यन्तता स्पष्टैव । किं च अगुणे तु कर्मशब्दे इति सूत्रैकदेशोऽयं न सर्वं सूत्रमेतावदेव इत्यपि न मनसि प्रादुरभूत् तयोः । सन्ति हि मानुष्यकसुलभा दोषाः । नवमाधिकरणगुणसूत्रमेतत् वृ । भाष्येऽपि सूत्रमिदं प्रथमतः नवमाधिकरणगुणसूत्रत्वेन व्याख्याय, ' अथवा अधिकरणान्तरं ' इत्युक्त्वा, दशमाधिकरणत्वेन व्याख्यातम् । अत्र वयं पृच्छामो भाष्यसंशोधकान्, 'अथवा अधिकरणान्तरं ' इति भाष्यात् यदि अधिकरणाङ्को वर्धितस्तत्रभवद्भिः, तर्हि ' हेतुदर्शनाच्च १।३।४ ' इत्यत्र ' अधिकरणान्तरं वा ' इति भाष्ये सत्यपि अधिकरणाङ्कः कुतो न वर्धितः इति । यदि तत्र न वर्ध्यते नात्रापि वर्धनीयः । वर्धनयोग्यत्वं तु समानमुभयत्र ।

**अधि०** ११ इन्द्रियकाम इति भा–भाट्ट–कौ । दध्यादिद्रव्यसफलत्वं इति म–सा–वि–भाट्ट–शा–ल–कु–सु । दध्यादिद्रव्यस्य फलवत्ता इति बिन्दुः । दध्यादिद्रव्यस्य सफलत्वं इति वृ । अन्तिमं शीर्षकत्रयमसाधु । कर्मान्तरं वा गुणफलसंबन्धो वा इति संदेहे गुणफलसंबधस्यैवात्र विधिः इत्येव सर्वग्रन्थेषु सिद्धान्तितम् । दध्यादिद्रव्यस्य साफल्यं वैफल्यं वेति नैवात्र विचारः ।

**सू०** २५ (१) लस्याक इति चौपाठो न युक्तः ।

**सू०** २६ ( १ ) पञ्चविंशं सूत्रं प्रागगतमेव । अत्र पुनः ' अतुल्यत्वात् २५ अतुल्यत्वात्तु वाक्ययो० २६' इति चौ–पुस्तके यत्किमपि कृतम् । एतादृशो दोषोत्र अनेकत्र दृश्यते (२) तत्र प्र इति य ।

**अधि०** १२ रेवती इति भा–भाट्ट–कौ । वारवन्तीयादीनां कर्मान्तरता इति म–सा–वि–भाट्ट–शा–बिन्दु–वृ–ल–कु–सु ।

**सू०** २७ ( १ ) मे यु इति पृथक् पदं शा–सोमसूत्रे । सोमव्याख्यायां तु ऐकपद्यमेव कर्मयुक्तं इति । अत एव भाष्यं ' समेषु एवंजातीयकेषु भिन्नवाक्येषु कर्मयुक्तं ( क्रियायुक्तं, विधिविषयः ) फलं भवेत् ' इति ।

अधि० १३, १२ वृ.

२८ सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ।

२७ भाट्ट-य-कौ, १३ बिन्दुः.

२९ सर्वस्य वोक्तकामत्वात् तस्मिन् कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः ।

२८ भाट्ट क-य-कौ.

पादे त्रयोदश नयानुपवर्णयन्ति ।
शब्दान्तरे प्राये संज्ञाचाष्टाविंशतिः ।

॥ इति द्वितीयाध्यायस्य द्वितीयः पादः ॥

॥ अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

अधि० १.

१ गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्, संयोगस्याशेषभूतत्वात् ।

२ एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ।

अधि० २

३ अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ।

---

अधि० १३ सौभर इति भा-भाट्ट-कौ । सौभरनिधनयोः कामैक्यं इति म-सा-वि-शा-वृ-ल-कु-सु । सौभरनिधनयोः फलैक्यं इति बिन्दुः ।

सू० २८ (१) धनं का इति म-सा-वि-ल-चौ । अत्र भाष्यं 'सौभरे निधने अपरः कामो विधीयते' इति ।

सू० २९ (१) स्य चोक्त इति वा । सुधायां तु 'वाशब्दव्याख्यानार्थं' इत्यादि । सर्वस्योक्त इति म । सर्वस्य उक्त इति सा-पाठस्तु अयुक्त एव । 'वाशब्द. पक्षं व्यावर्तयति' इति भाष्यात् म-पाठोऽपि न युक्तः । (२) र्थो श्रु इति वृ । वृ-सूत्रे पुनःशब्दो नास्ति । वृ मूले तु पुनः श्रुतिः इति पदद्वयमपि नास्ति, स्यात्पदं च नास्ति । तेन वृ-मूलमतेन 'सर्वस्य वोक्तकामत्वात् तस्मिन् कामश्रुतिर्निधनार्था' इत्येव सूत्रम् । (३) पुनः श्रुतिः इति छेदेनैव भा-सूत्रपाठे मुद्रितम् । वार्तिकं तु 'तत्र न शक्यं विधिमात्रप्रवृत्तया पुनःश्रुत्या गत्यन्तरे संभवति बाधनं कर्तुम्' इति, '-तस्मान्निधननियमार्था पुनःश्रुतिरिति' इति च ।

अधि० १ ग्रहाग्रताया ज्योतिष्टोमाङ्गता इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कु-सु । रथंतर इति भा-भाट्ट-कौ ।

सू० १ (१) गुणस्त्वक्र इति य । गुणस्तु कर्मा इति क । (२) योगे क इति भाट्ट । क्रतुसंयोगात् इत्येव भाष्यमूलम् । भाट्टपाठस्तु न युक्तः । अत्र कुतूहलं 'क्रतुसंयोगात् रथंतरसामादिगुणस्य ज्योतिष्टोमात् क्रत्वन्तरेणैव संयोगात्, प्रकृतकर्मणा च संयोगासंभवात् । कुतः । क्रतुसंयोगस्याशेषभूतत्वात् रथंतरादिसंयोगस्य क्रतुविशेषणत्वाभावात्' इति । अत्र संयोगस्याशेषभूतत्वात् इति सौत्रो हेतुः 'प्रकृतकर्मणा च संयोगासंभवात्' इत्यनेनैव संयोजितः न तु 'क्रतुसंयोगात्' इत्यनेन । तेन च संयोगस्य अशेषभूतत्वात् प्रकृतकर्मणा संयोगासंभवात् गुणः कर्मान्तरं प्रयोजयेत् इति सूत्रस्यान्वयार्थः संपन्नः । प्रकृतकर्मणा संयोगासंभवात् इति अक्रतुसंयोगात् इत्यस्य व्याख्या । तथा च य-पाठोऽपि संगच्छते । भङ्ग्यन्तरेण य-पाठ एव कुतूहलेन व्याख्यात इव ।

सू० २ (१) उच्यते इति वृ-मूले पदं, तेन 'प्रयोजनार्थमुच्यत एकत्वं' इति पाठः सिद्ध्यति । वृ-सूत्रे तु 'मुच्येतैकत्वं' इत्येव । (२) कत्र सगु इति चौ-पाठः अयुक्त एव । (३) वाक्यात् इति वृ । 'गुणवाक्यत्वाच्च अकर्मान्तरप्रत्यये सति एकत्वं विज्ञायते' इति तु वार्तिकमूलम् ।

अधि० २ अवेष्टिः इति भा-भाट्ट-कौ । अवेष्टेः कर्मान्तरत्वं इति बिन्दु-वृ । अवेष्टेः क्रत्वन्तरताधिकारता इति म-सा-वि-ल-कु-सु । क्रत्वन्तरताधिकारता इति शा । अत्र तृतीयचतुर्थयोः शीर्षकयोः कोऽर्थः इति त एव संपादका जानीयुः कदाचिन्नैव वा जानीयुः । मादृशानां तु दुर्ज्ञेयमेवेदम् ।

सू० ३ (१) मुच्येत इति य-वा-कौ । कुतूहलसूत्रे उच्यते इति पठितं, मूले तु 'क्रतुप्रधानं ब्राह्मणादिविशिष्टप्रयोगान्तरपरतया प्रतीयेत' इत्युक्तं तेन उच्येत इत्येव पाठः कुतूहलसंमतः स्यात् ।

अधि० ३.

४ आधानेऽसर्वशेषत्वात् ।

अधि० ४.

५ अयनेषु चोदनान्तरं संज्ञोपबन्धात् ।

६ अगुणां च कर्मचोदना ।

७ समाप्तं च फले वाक्यम् ।

८ विकारो वा प्रकरणात् ।

९ लिङ्गदर्शनाच्च ।

१० गुणात् संज्ञोपबन्धः ।

११ समाप्तिरविशिष्टा ।

अधि० ५.

१२ संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ।

१३ यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ।

१४ यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात् ।

१५ लिङ्गदर्शनाच्च ।

अधि० ६.

१६ विशये प्रायदर्शनात् ।

१७ अर्थवादोपपत्तेश्च ।

अधि० ७.

---

**अधि० ३** आधानं इति भाट्ट-कौ । आधानस्य विधेयत्वं इति म-सा-वि-भाट्ट-शा-बिन्दु वृ-ल-कु-सु । विशिष्टाधानविधेयत्वं इति भा ।

**सू० ४ ( १ )** ने स इति म-सा-वि-शा-ल-य-वा-सु । अत्र भाष्यं " एवं प्राप्ते ब्रूमः आधानेऽसर्वशेषत्वात् । प्रापकाणि आधानस्य एतानि श्रवणानि । कुतः । सर्वकर्मणां शेषभूतमाधानं इति न श्रुतिलिङ्गादीनामन्यतमेनोच्यते किं तर्हि अग्नीनां तच्छेषत्वाच्च आधानस्य " इति । तेन सर्वशेषत्वात् इत्येव पदं सिद्ध्यति । परंतु वार्तिककारैः ' आधानेऽपि पूर्ववदेव प्रापकाणि श्रवणानि । कथं, असर्वशेषत्वात् ' इति । सुधायां च अस्य वार्तिकस्य भाष्यव्याख्यानपरत्वं, भाष्यस्य असर्वशेषत्वात् इत्यस्यैव हेतोः प्रतिपादनपरत्वं च प्रदर्शितम् ।

**अधि० ४** दाक्षायणयज्ञ इति भा-भाट्ट-कौ । दाक्षायणादीनां गुणता इति भा-भाट्ट-कौभिन्नाः सर्वे । अयुक्तमिदम् । नहि दाक्षायणादयो गुणाः किंतु आवृत्तिरूपगुणबोधकास्ते शब्दाः । दाक्षायणयज्ञेन यजेत इत्यादौ किं दर्शपूर्णमासयोरेव गुणात् फलं उत कर्मान्तरमिति विचारितमत्र ।

**सू० ६ ( १ )** णाच्च क इति म-सा-वि-शा-ल-सु । अयं पाठोऽशुद्ध एव । णा क इति वा । भाष्यं तु ' न चात्र गुण उपरुद्ध्यते कश्चित् ' इति ।

**अधि० ५** ईषा इति भाट्ट । ईषालम्भ इति कौ । द्रव्यदेवतायुक्तानां यागान्तराधिकरणं इति शा । द्रव्यदेवतायुक्तानां इत्यस्य क्वान्वयः ? न तावत् यागे यागान्तरे वा संभवति । द्रव्यदेवतायुक्तानां यागः, द्रव्यदेवतायुक्तानां यागान्तरं इति वाक्ययोरर्थबोधकत्वाभावात् । नापि यागान्तराधिकरणे पदार्थेऽन्वयः संभवति । द्रव्यदेवतायुक्ताना कर्मान्तरता इति वृ । द्रव्यदेवतायुक्तानां यागान्तरता इति म-सा-वि-भाट्ट-ल-कु-सु । द्रव्यदेवतासंयुक्तानां कर्मान्तरता इति बिन्दुः । द्रव्यदेवतासंयोगे यागविधायकत्वं इति भा ।

**सू० १२ ( १ )** र्म शेषत्वात् इति वृ ।

**सू० १४ ( १ )** यजिस्तु इति य-कु । अत्र भाष्यं ' यजिमती एते कर्मणी इति ' इति तेन भाष्यसंमत एव य-कु-पाठः स्यादिति सिद्ध्यति ।

**अधि० ६** देवतासंयोगाभावे यागविधायकत्वं इति भा-सु । वत्सालम्भ इति कौ । वत्सालम्भादीनां संस्कारता इति भा-सु-कौभिन्नाः ।

**सू० १६ ( १ )** विषये इति चौ पाठस्तु अशुद्ध एव । विशये संशये सति इति हि विवक्षितमत्र ।

**अधि० ७** नैवारचरोराधानार्थता इति म-सा-वि-भाट्ट-शा-वृ-ल-कु-सु । अत्र आधानपदं प्रयुक्तं, भा-कौ-बिन्दुषु तु उपधानपदं प्रयुक्तम् । अन्यदाधानं अन्यच्चोपधानम् । अग्नीनामाधानं, समिधामाधानं, इष्टकानां तु उपधानम् । इष्टकाश्च मृन्मय्यः अमृन्मय्यश्चेति । नैवारश्चरुः अमृन्मयी इष्टकैव । अतस्तस्य उपधानमेव, नाधानम् । तस्मादाधानशब्दप्रयोगः अनवधानप्रयुक्तः । नैवारचरोरुपधानार्थता इति बिन्दुः । चरूपधानं इति कौ । चरोरुपधानार्थता इति भा ।

१८ संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ।

अधि० ८.

१९ पात्नीवते तु पूर्वत्वादवच्छेदः ।

अधि० ९.

२० अद्रव्यत्वात् केवले कर्मशेषः स्यात् ।

अधि० १०.

२१ अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ।

२२ द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ।

२३ तत्संयोगात् क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ।

अधि० ११.

सू० १८ (१) र्थश्रु इति बिन्दु-पाठो न युक्तः । 'तदर्थ एव स्यात् उपधानार्थः' इति भाष्यात् ।

अधि० ८ त्वाष्ट्रपात्नीवतस्य पर्यग्निकरणगुणकत्वं इति म-सा-भाट्ट-सु । अयुक्तमिदम् । नहि पात्नीवते पर्यग्निकरणं गुणो विधीयतेऽत्र । किं तु पर्यग्निकरणान्ताङ्गरीतिर्विधीयते चोदकप्राप्तेः प्रागेव । त्वाष्ट्रपात्नीवतस्य पर्यग्निकरणान्तत्वं इति बिन्दु-वृ । इदं शीर्षकं तु साधीयः । पात्नीवत इति भा-भाट्ट-कौ । पात्नीवतस्य पर्यग्निकरणगुणकत्वं इति ल । पर्यग्निकरणगुणकत्वं अग्नीषोमीयस्यापि भवति न केवलं पात्नीवतस्यैव । पर्यग्निकरणान्तत्वमात्रं तु पात्नीवतस्यैव नाग्नीषोमीयादेः ।

सू० १९ (१) र्वत्त्वा इति शा-सोम-वृ-य-कु-बिन्दु । (२) दपच्छे इति य-कु । य-कु-पाठौ एव युक्तौ । परंतु भाष्ये वार्तिके च पूर्वत्वात् अवच्छेदः इत्येव पठ्यते ।

अधि० ९ अंश्वदाभ्य इति भाट्ट-कौ । अंश्वदाभ्यग्रहयोर्ज्योतिष्टोमार्थता इति भा । अत्र भाट्टशीर्षकं अधिकरणविषयबोधकं, तेन च सर्वोपि अधिकरणार्थः स्मार्यते । भा-शीर्षकं तु साक्षात् अधिकरणसिद्धान्तबोधकमेवेति विशेषः । अदाभ्यादिशब्दानां ग्रहनामता इति भाट्ट-बिन्दु । अदाभ्यादीनां ग्रहनामता इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल-कु-सु । आश्चर्यमिदं, यत् अदाभ्यादिग्रहरूपद्रव्यस्य ग्रहनामता संपन्नेति । द्रव्यं हि पदार्थो न पदं पदपदार्थयोस्तु भेद एव मीमांसकमते । दशभिः संपादकैरविचार्यैव अधिकरणनामधेयं निवेशितमिति द्वितीयमाश्चर्यम् । न च ते संपादका अपण्डिता इति वक्तुं शक्यम् ।

सू० २० (१) त्वात्तु के इति शा-कौ । अद्रव्यत्वात् इत्यस्य स्थाने अद्रव्यदेवताकत्वात् इति पाठ आवश्यक इति मन्यामहे । तथा च भाष्यं 'एवं प्राप्ते ब्रूमः अद्रव्यदेवताके केवले नामधेये श्रूयमाणे' इत्यादि । वार्तिकं च 'देवता तावद् दूरभ्रष्टैव । यद् गृह्यमाणं द्रव्यं तदपि न केनचिदुपात्तम्' इति, 'द्रव्यदेवतासंयोगेऽपि चैवंजातीयकाना यजिमत्त्वं निराकृतं, अत्र पुनस्तदपि न विद्यते' इति च । अस्य सिद्धान्तसूत्रत्वात् शा-कौ-वत् 'तु' शब्दोऽपि आवश्यक एव । यथाऽन्यत्र सिद्धान्तसूत्रेषु ।

अधि० १० अग्निः इति भाट्ट । अग्निचयनस्य संस्कारता इति म-सा-वि-ल-कु-सु । अग्निचयनस्य संस्कार्यता इति भाट्टशीर्षकं विरुद्धम् । अग्निः संस्कार्यः चयनं तु संस्कार इति सिद्धान्तः । अग्निचयनस्यासंस्कारता इति शा-शीर्षकं तु रीत्यन्तरेण विरुद्धम् । चयनस्य अग्निसंस्कारत्वात् । चयनं इति कौ । चयनस्याग्निसंस्कारत्वं इति भा ।

सू० २१ (१) प्रतीयते इति बिन्दुः ।

सू० २३ (१) क्रतुसं इति वृ-कुटि । (२) नात् इति य । शाबरे भाष्ये तु 'तेन क्रतुवचनानि तद्धर्मविधानानि' इत्येव पाठः ।

अधि० ११ प्रकरणान्तरं इति भा-भाट्ट-कौ । प्राणाग्निहोत्रस्य यागान्तरता इति बिन्दुः । किमिदं प्राणाग्निहोत्रं नाम । किं, तत् वेदान्तोदितं वैश्वानरोपासनाङ्गभूतं प्राणाग्निहोत्रमत्र गृह्यते ? ननु तस्यापि संभवः । सत्यं, परंतु उत्तरमीमांसाविषयः सः, नैतन्मीमांसितव्यमत्र, न च मीमांसितमाकरे । तथा च मासाग्निहोत्रमेव ग्राह्यं, न प्राणाग्निहोत्रम् ।

२४ प्रकरणान्तरे प्रयोजनान्यत्वम् ।

अधि० १२.

२५ फलं चाकर्मसंनिधौ ।

अधि० १३.

२६ संनिधौ त्वविभागात् फलार्थेन पुनः-श्रुतिः ।

अधि० १४.

२७ आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेते ।

२८ अविभागात्तु कर्मणो द्विरुक्तेनै विधीयेते ।

संशोधकानां सर्वदर्शनगामित्वात् प्राणाग्निहोत्रस्य स्मरणं संजातमित्येव मन्यामहे। मासाग्निहोत्रादीनां क्रत्वन्तरता इति म-सा-वि-भाट्ट-क-शा-बिन्दु-वृ-ल-कु-सु।

अधि० १२ आग्नेयादिकाम्येष्टिः इति म-सा-वि-भाट्ट-शा-ल-कु-सु। आग्नेयादीष्टीनां कर्मान्तरत्वं इति बिन्दुः। फलसंस्कार्ये इति कौ। फलसंस्कार्ययोः कर्मभेदकत्वं इति भा।

सू० २५ (१) च क इति कुटि। भाष्यं तु 'फलं च भेदकं अकर्मसंनिधौ श्रूयमाणं, कथं, अनुवादे सति न शक्येत फलं विधातुम्' इति।

अधि० १३ अवेष्टेरन्नाद्यफलकत्वं इति म-सा-वि-शा-बिन्दु-वृ-ल-कु-सु। प्रकरणान्तरप्रत्युदाहरणं इति कौ। संनिधौ अनुपादेयगुणानां कर्मान्तरत्वासाधकत्वं इति भाट्ट। संनिधौ फलादेः कर्मभेदकत्वाभावः इति भा। भा-भाट्ट शीर्षके अयुक्ते। तत्र संनिधौ इति पदं सूत्रस्थं, तन्न अधिकरणनामधेये अन्तर्भवितुमर्हति।

सू० २६ (१) धौ तु वि इति सोमनाथीपाठः 'सूत्रे विभागात् विपरिवृत्तेरित्यर्थः' इति अधिकरणान्ते सोमनाथीपङ्क्तिर्मुद्रिता। वार्तिकं तु 'विपरिवृत्तिरेव चेहाविभागशब्देनोक्ता' इति। एतदनुसारेण तु सोमनाथ्यामपि 'सूत्रे विभागात्' इत्यत्र अकारप्रश्लेषः कर्तुं शक्यः। तेन वार्तिकैकवाक्यता संपन्ना भवेत्। (२) र्थे न इति वृ-सूत्रे, मूले तु फलार्थेन फलसंबन्धित्वेन पुनर्विधिः इति। तेन वृ-सूत्रेऽपि तृतीयान्ततैव। कस्तूरिवृत्तौ तृतीयान्ततैव। कु-सूत्रे फलार्थे न इति पृथक् पदम्। मूलेपि 'इत्यत आह फलार्थे न पुनःश्रुतिरिति। फलनिमित्तसंस्कार्यवाक्येषु यत् पुनःश्रवणं तन्न कर्मभेदं प्रयोजयितुं क्षमते' इति। तेन फलार्थे इति सप्तम्यन्तं, न इति पृथक् पदम्। भाष्ये तु 'एवं प्राप्ते ब्रूमः संनिधौ फलार्थेन पुनः श्रुतिरवेष्टेरेव, न कर्मान्तरमिति' इति फलार्थेनेति तृतीयान्ततैव। (३) पुनः श्रुतिः इति तु क्वचित् भित्त्वा मुद्रितं क्वचित्संधाय मुद्रितम्। संधाय मुद्रणमेव तु युक्तम्।

अधि० १४ आग्नेयद्विरुक्तेः स्तुत्यर्थता इति भा-कौ भिन्नाः। आग्नेयपुनःश्रुतेः स्तुत्यर्थता इति भा। आग्नेयस्तुत्यर्थता इति कौ। भा-शीर्षकमेव युक्तं इतरदयुक्तम्। नहि आग्नेयमात्रस्य स्तुत्यर्थता, किंतु आग्नेयपुनःश्रुतेरेव स्तुत्यर्थतेति।

सू० २७ (१) य सूक्त इति म-सा-ल-चौ। म-सा-मूले भाष्येपि आग्नेयसूक्त इत्येव मुद्रितम्। अशुद्धं तु तत्। नह्यत्र अग्निदेवताकेन सूक्तेन किंचित् प्रयोजनम्। आग्नेयपुरोडाशस्तु चिन्त्यतेऽत्र। (२) तीयेत इति भाष्यादिसर्वग्रन्थेषु बिन्दुभिन्नेषु। परंतु भा-म-सा मूले भाष्ये तु 'आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयते' इत्येव सूत्रमनूदितम्। सूत्रभाष्यगतपाठभेदविरोधपरिहारार्थं तु सूत्रे प्रतीयते इत्येव पाठः स्वीकार्यः। भाष्यान्तरे तु प्रतीयेत इति पाठोऽस्तु वा मास्तु वा।

सू० २८ (१) गात् क इति क। (२) र्मणा द्वि इति म-सा-वि-शा-कुटि। र्मणां द्वि इति ल. (३) क्तेर्न वि इति म-सा-वि-शा-ल चौ-कुटि। रुक्ते न इति वृ-कु। रुक्तेन तु वि इति य। (४) धीयेत इति भाट्ट-क-वृ-य-कु वा-सु। कुतूहले यद्यपि द्विरुक्तो न विधीयेत इति सूत्रे पाठः, तथापि तन्मूले 'द्विः पठितेन वाक्येनान्यतरेण आग्नेयो यागो विधीयेत' इत्युक्तत्वात् द्विरुक्तेन इत्येव पाठः सिद्ध्यति। अत एवोत्तर-

२९ अन्यार्थो वा पुनःश्रुतिः ।

पादे चतुर्दश न्याया भाष्यकारेण वर्णिताः ।
गुणस्तु समाप्तिः भ्रमिस्तु नवविंशतिः ।
॥इति द्वितीयाध्यायस्य तृतीयः पादः समाप्तः॥

॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

अधि० १.

१ यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ।

२ कर्तुर्वा श्रुतिसंयोगात् ।

३ लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात् ।

४ व्यपवर्गं च दर्शयति कालश्चेत् कर्मभेदः स्यात् ।

५ अनित्यत्वात्तु नैवं स्यात् ।

६ विरोधश्चापि पूर्ववत् ।

७ कर्तुस्तु धर्मानियमात् कालशास्त्रं निमित्तं स्यात् ।

अधि० २.

---

सूत्रे "द्विरुक्तेन तु विधीयेत इत्यानर्थक्यमुक्तं नाङ्गीकुर्मः" इत्युक्तं संगच्छते । किं च द्विरुक्तो न विधीयेत इत्यस्य स्थाने 'द्विरुक्तेन तु विधीयेत' इत्येव पाठ :सिद्ध्यति तेनोत्तरेणानुवादेन । इति य-पाठेनापि संवादः संपद्यते । भाष्यवार्तिकसुधापाठस्तु 'अविभागात्तु कर्मणा द्विरुक्तेन विधीयते' इत्येव ।

सू० २९ (१) पुनःश्रुतिः इत्येतत्पाठविषये पिष्टपेषणमेवेति तद्विषये विरम्यतेऽत्रैव ।

अधि० १ यावज्जीव इति भा-कौ । यावज्जीविकाऽग्निहोत्रं इति म-सा-वि-शा-बिन्दु-ल-कु-सु । यावज्जीविकाभ्यासस्य कर्तृधर्मत्वं इति वृ । यावज्जीविताग्निहोत्रं इति भाट्ट ।

सू० ३ (१) लिङ्गदर्शनाच इत्येतावत् पृथक् सूत्रं, कर्मधर्मे इत्यादि च पृथक् इति तर्कयामो वयम् । भाष्यपुस्तके सूत्रद्वयमेकीकृत्य एकसूत्रत्वेन संमुद्र्य उभयसूत्रभाष्यद्वयमपि एकभाष्यत्वेन संयोज्य संमुद्रितं, तदपि न गणयामः । सूत्रद्वयानुसारेण भाष्यं वार्तिकं च विभज्य मुद्रापयितुं शक्यत्वात् । न च एकवाक्यत्वन्यायविरोधः । विभागेऽपि साकाङ्क्षत्वाभावात् । पूर्ववाक्ये कर्मधर्मत्वे हेतुत्वेन लिङ्गदर्शनमुक्तं लिङ्गत्वसाधकं चोत्तरवाक्यं, तेन न साकाङ्क्षता पदसंबन्धिनी । वाक्यानि तु वाक्यान्तरसापेक्षाणि भूयांसि भवन्ति । यथा महा-

सू० ५

वाक्ये अवान्तरवाक्यानि । (२) धर्मो हि इति भाट्ट-क-कुटि-कौ । भाष्यमूले तु कर्मधर्मे इत्येव स्पष्टम् । (३) तत्रानुष्ठेयम इति वृ-कुटि । तत्र चान इति वा । 'तत्र चानर्थकमन्यत् स्यात् प्रायश्चित्तादि विधीयमानं' इति भाष्यपङ्क्तिर्विद्यते । तदनुसारेणैव च वा-पाठः स्यात् इति कल्पयितुं शक्यते । तथापि तत्रत्यश्चकारः भाष्यकारीयो वा सूत्रगतो वेति उभयथापि शक्यम् ।

सू० ४ (१) अपवर्गं इति वि-शा-कुटि ।(२) व्यपवर्गं च दर्शयति इति पृथक् सूत्रं कालश्चेत् इत्यादि च पृथक् इति पूर्ववदेव तर्कयामः । भाष्यस्यापि च विभागः कर्तुं शक्यः । वार्तिकमपि भेदपक्षं न विरुणद्धि ।

सू० ७ (१) स्तु नि इति वि-शा-कुटि । सुधाया सूत्रे तु 'नैतदिति कर्तुस्तु' इत्यादि मुद्रितम् । तत्र नैतदिति सुधामूलस्थं वार्तिकप्रतीकम् । तच्चानवधानेन सूत्रावयवत्वेनैव मुद्रितम् । कर्तुस्तद्धर्म इति वा । (२) मित्तार्थं स्यात् इति य-कु । स च भाष्यान्तरपाठः स्यात् न शाबरभाष्यपाठः । शाबरे तु निमित्तं इत्येव ।

अधि० २ नानाशाखासु विहिताग्निहोत्रादिकर्मणामैक्यं इति वृ । शाखान्तरं इति भा-कौ । सर्वशाखागतकर्मैक्यं इति बिन्दुः । सर्वशाखाप्रत्ययैककर्मता इति भा-बिन्दु-वृ-कौ भिन्नाः ।

८ नामरूपधर्मविशेषपुनरुक्ति[1]निन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदः[2] स्यात् ।

९ एकं वा संयोगरूपचोदनाऽऽख्याविशेषात् ।

१० न नाम्ना स्या[1]दचोदे[2]नाऽभिधा[3]नत्वात् ।

११ सर्वेषां चैककर्म्यं[1] स्यात् ।

१२ कृतकं चा[1]भिधानम् ।

१३ एकत्वेऽपि परम् ।

१४ विद्यायां धर्मशास्त्रम्[1] ।

१५ आग्नेयवत् पुनर्वचनम् ।

१६ अ[1]द्विर्वचनं वा[2] श्रुतिसंयोगाविशेषात् ।

१७ वा[1]क्यासमवायात् ।

१८ अर्थासंनिधेश्च । १७ म-सा-वि.

१९ न चैकं प्रति शिष्यते । १८ म-सा-वि.

२० स[1]माप्तिवच्च संप्रेक्षा । १९ म-सा-वि.

२१ एकत्वेऽपि पराणि[1] निन्दा[2]ऽशक्तिसमाप्तिवचनानि । २० म-सा-वि.

२२ प्रायश्चि[1]त्तं निमित्तेन । २१ म-सा-वि.

२३ प्रक्रमाद्वा नियोगेन[1] । २२ म-सा-वि.

२४ समा[1]प्तिः पूर्ववत्त्वाद् यथाज्ञाते प्र[2]तीयते । २३-म-सा-वि.

२५ लिङ्गमविशिष्टं स[1]र्वशेषत्वान्नहि तत्र कर्मचोदना, तस्माद् द्वादशा[2]हस्याऽऽहारव्यपदेशः स्यात् । २४ म-सा-वि.

---

**सू०** ८ ( १ ) रुक्तनि इति वा-सु । भाष्ये तु पुनरुक्तिः इत्येव । ( २ ) रेषु क इति म-सादिषु, भाष्यात्तु एकवचनमेव सिध्यति ।

**सू०** १० ( १ ) स्यात् शब्दो नास्ति क। ( २ ) चोदितत्वात्, न नाम्ना स्यादचोदितत्वात् इति सूत्रं भाट्ट। ( ३ ) धानात् इति कौ। ब्रह्मसूत्रशांकरभाष्यादावपि ( ३।३।१ ब्र. ) । न नाम्ना स्यादचोदनाभिधानत्वात् इत्येवानुवादः ।

**सू०** ११ ( १ ) कर्म स्यात् इति सुधासूत्रे। सुधामूले तु कर्म्यं इत्येव। कर्म्यात् इति भाट्ट-क-वृ-कुटि ।

**सू०** १२ ( १ ) कं त्वभि इति वृ ।

**सू०** १४ ( १ ) शास्त्रमिति इति सु । अनवधानात् सुधास्थ इति शब्दः सूत्रे मुद्रितः ।

**सू०** १६ ( १ ) अकारो नास्ति कुटि । ( २ ) वाऽश्रु इति वृ-कुटि ।

**सू०** १७ ( १ ) इदं सूत्रं नास्ति म-सा-वि-शा-वृ-ल-चौ । अत्र वार्तिकं ' अत्रान्तरे भाष्यकारस्य सूत्रं भ्रष्टं वाक्यासमवायादिति ' इति । अत्र सुधा ' वाक्यासमवायादिति सूत्रं विस्मृतत्वात् न भाष्यकृता व्याख्यातम्' इति। कौस्तुभे भाट्टदीपिकायां चास्ति इति न विशेषः । य-पुस्तके नास्ति इति विशेषः ।

**सू०** २० ( १ ) अत्र वार्तिकं ' असमाप्तिवत् इति वा छेदः 'इति । सूत्राणां संहितया पाठे 'शिष्यते समाप्तिवत् ' इत्यत्र अकारप्रश्लेषः संभवति । एतेन व्याकरणसूत्रवत् मीमांसासूत्रपाठोऽपि संहितया आसीत् इति सिद्धम् । कौस्तुभेऽपि विकल्पेन अकारप्रश्लेषः स्वीकृतः ।

**सू०** २१ ( १ ) एकत्वेऽपि पराणि एतावदेव सूत्रं य-कु । भाष्यवत् सूत्रं कुटि । य-कुपाठमेव साधीयांसं मन्यामहे । निन्दाऽशक्तिसमाप्तिवचनानि इति तु पराणि इत्यस्यैव व्याख्या । ( २ ) निन्दाशक्ति इत्यत्र अवग्रहोऽवश्यमेव दातव्यःसन् न दत्तः भा-म-सा-वि इत्यादौ । भाट्टादौ तु क्वचिद्दत्तः ।

**सू०** २२ ( १ ) त्तं वा नि इति भाट्ट-वृ ।

**सू०** २३ ( १ ) नियम्येत इति य ।

**सू०** २४ ( १ ) प्तिश्च पू इति भाट्ट-वृ । ( २ ) तीयते इति वा-सु-कौ । अयमेव पाठो युक्तः । भाष्यादपि सोऽनुमातुं शक्यते ।

**सू०** २५ ( १ ) सर्वशेषत्वात् इति पदं नास्ति, 'शिष्टं नहि ' इत्येव परिपाटी क । ( २ ) शाहार इति भाट्टपाठः अशुद्धः ।

२६ द्रव्ये चाचोदितत्वाद् विधीनामव्यवस्था स्यान्निर्देशाद् व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् । २५–म–सा–वि.

२७ विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात् । २६ म–सा–वि.

२८ सारस्वते विप्रतिषेधाद् यदेति स्यात् । २७–म–सा–वि.

२९ उपहव्ये प्रतिप्रसवः । २८ म–सा–वि.

३० गुणार्था वा पुनःश्रुतिः । २९–म–सा–वि.

३१ प्रत्ययं चापि दर्शयति । ३० म–सा–वि.

३२ अपिवा क्रमसंयोगाद् विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत । ३१ म–सा–वि.

३३ विरोधिनां त्वसंयोगादेककर्म्ये तत्संयोगाद् विधीनां सर्वकर्मप्रत्ययः स्यात् । ३२ म–सा–वि.

॥ नययुगलमिहोक्तं नीतिविद्भिः समीक्ष्य ॥
यावज्जीविकः सर्वेषां एकत्वे प्रत्ययं च
त्रयस्त्रिंशत् ॥

॥ इति द्वितीयाध्यायस्य चतुर्थः पादः अध्यायश्च समाप्तः ॥

---

सू० २६ (१) व्येऽचो इति क व्ये वाऽचो इति कु । व्ये वा चो इति वा–सु । परं तु सुधामूले ‘ अचोदितत्वात् ’ इत्येव ।

सू० २९ (१) उपशब्दो नास्ति य–कु । (२) व्येऽप्र इति भा–म–सा–वि–शा–ल–कु–चौ । व्ये प्र इति तु भाट्ट–क–वृ–वा–सु–कौ । ‘ एककर्मत्वे प्रतिप्रसवतयाऽप्यसंभवात् ’ इति भाष्यम् । अनुभाषणं सामान्यपरिहारो वा इति वार्तिकम् । अत्र सुधा “ उपहव्यस्य भेदे सति अतिदेशप्राप्तबृहद्रथंतरविकल्पनिवृत्तिः प्रतिप्रसवाख्या पुनःश्रुतिः प्रयोजनं स्यात्...इत्येवं अनुभाषणार्थत्वेन यथाभाष्यं तावत् सूत्रं व्याचष्टे । अनुभाषणमिति । उपहव्ये बृहद्रथंतरपुनःश्रुतेः न प्रतिप्रसवः अस्माकं प्रयोजनत्वेनेष्टः... इत्येवं सामान्यपरिहारार्थत्वेन स्वयं व्याचष्टे । सामान्येति । ” इति । एतेन भाष्यमतेन प्रतिप्रसवः इत्येव नञ्रहितः पाठः, वार्तिकमतेन तु नञ्रहितः नञ्सहितो वेति उभयथा पाठः इति सिद्धम् ।

सू० ३० (१) र्था पु इति य ।

सू० ३२ (१) वा श्रुतिसं इति य–कु । (२) मेकैकस्यां शाखायां व्य इति य–कु । (३) स्यां शाखायां व्य इति भाट्ट–क–वृ ।

सू० ३३ (१) धिना त्व इति म–सा–वि–शा–ल–चौ–य–कु । (२) र्म्येऽत इति वि (३) र्वप्र इति क–य–कु–कौ । (४) स्यात् पदं नास्ति य–कु ।

## ॥ अथ तृतीयोऽध्यायः ॥

॥ अथ तृतीयाध्यायस्य प्रथमः पादः ॥

अधि० १.

१ अथातः शेषलक्षणम् ।

अधि० २.

२ शेषः परार्थत्वात् ।

अधि० ३.

३ द्रव्यगुणसंस्कारेषु बादरिः ।

( अधि० २ मण्डनः )

४ कर्माण्यपि जैमिनिः फलार्थत्वात् ।

५ फलं च पुरुषार्थत्वात् ।

६ पुरुषश्च कर्मार्थत्वात् ।

अधि० ४, ३ मण्डनः

७ तेषामर्थेन संबन्धः । ६ वृ, ४ बिन्दुः.

८ विहितस्तु सर्वधर्मः स्यात्, संयोगतोऽविशेषात्, प्रकरणाविशेषाच्च । ७ वृ.

९ अर्थलोपादकर्म स्यात् । ८ वृ.

१० फलं तु सह चेष्टया, शब्दार्थोऽभावाद् विप्रयोगे स्यात् । ९ वृ.

अधि० ५, ४ मण्डनः

---

अधि० १ प्रतिज्ञा इति म-सा-वि-भाट्ट-शा-ल-कौ । प्रतिज्ञासूत्रं इति भा आदौ । शेषप्रतिज्ञा इति भा अन्ते । शेषलक्षणप्रतिज्ञा इति बिन्दु-वृ-कु ।

अधि० २ द्रव्यगुणकर्तृकालदेशादौ यागाङ्गत्वोपपादनं इति भाट्ट । शेषत्वकारणसहितशेषलक्षणं इति म-साशीर्षकं पुनरुक्तिग्रस्तम् । अत्र कारणत्वं ज्ञानकारणत्वरूपमेव प्राह्यं न जनकत्वम् । तथाच शेषत्वकारणमेव शेषलक्षणम् । शेषत्वनिर्वचनं इति भा । तत् किं शिष असर्वोपयोगे इति धातोर्घञि ततो भावार्थके त्वप्रत्यये शेषत्वशब्दस्य निष्पत्तिः इति प्रतिपाद्यते वा अस्मिन्नधिकरणे ? । शेषलक्षणं इति वि-भाट्ट-शा-बिन्दु-वृ-ल-कु-कौ ।

अधि० ३ बादरिः इति कौ । शेषत्वलक्ष्यं इति बिन्दु-वृ । शेषत्वस्य लक्ष्यनिर्देशः इति भा । तर्हि शेषत्वलक्ष्यस्य निर्देशः इत्येव वक्तव्यं, स्वाधीने शब्दप्रयोगे कस्मादेकदेशान्वयः ?। शेषलक्ष्यं इति वि-भाट्ट-शा-ल-कु-कौ । शेषस्य न किंचिदपि लक्ष्यं, नहि शेषः कस्यचिल्लक्षणमुक्तम् । शेषत्वस्य तु स्याल्लक्ष्यम् ।

सू० ४ ( १ ) मीमांसामण्डने गङ्गानाथझामहोदयैः द्वितीयाधिकरणस्य ३ तः ६ सूत्राण्युक्तानि । आचार्यमण्डनवाक्यं तु ' कर्मोद्यपि फलादिनः ' इति । तानि च पदानि 'कर्माण्यपि जैमिनिः फलार्थत्वात्' इति चतुर्थसूत्रे एव दृश्यन्ते । तस्मात् चतुर्थसूत्रमारभ्यैव द्वितीयमधिकरणं संमतमाचार्यस्येति प्रतीमः ।

सू० ६ ( १ ) नास्तीदं सूत्रं वृ । तेनाङ्कव्यत्ययः ।

अधि० ४ अवहननादीनां व्यवस्थितविषयत्वं इति वृ-कु । तेषामर्थ इति भा-कौ । निर्वपणादीनां व्यवस्थितविषयता इति वि-शा-ल । परंतु वि-शामूले निर्वपणस्य नामापि न श्रूयते । अवहननादीनां तु व्यवस्था प्रतिपादिता । एवमुत्तरेष्वपि शीर्षकेषु द्रष्टव्यम् । निर्वपणादीनामर्थानुसारेण व्यवस्थितविषयता इति म-सा । निर्वापादीनां व्यवस्थयाऽनुष्ठेयता इति बिन्दुः । निर्वापादीनामर्थानुसारेण व्यवस्थितविषयता इति भाट्ट ।

सू० १० ( १ ) सहचेष्टया इति संधाय मुद्रितं म-सा । तत्तु न युक्तम् ।

अधि० ५ द्रव्यविषये उद्देश्यतावच्छेदकनिरूपणं इति भा । अत्रैव कस्मात् अवच्छेदकारण्ये पर्यटनं? 'द्रव्याणां यथासंयोगं विनियोगः' इत्येव भाष्यवार्तिकमूलानुसारेण वक्तव्यम् । स्फ्यः इति भाट्ट-कौ । स्फ्यादीनां व्यवस्थितत्वं इति वृ । स्फ्यकपालादीनां स्वरूपेण नास्ति कदाचिदपि अव्यवस्थितत्वम् । तद्विनियोगे तु अव्यवस्थितत्वशङ्का संभवति । स्फ्यादीनां

११ द्रव्यं चोत्पत्तिसंयोगात् तदर्थमेव चोद्येत । १० वृ, ५ बिन्दुः.

अधि० ६, ५ मण्डनः

१२ अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् । ११ वृ, ६ बिन्दुः.

अधि० ७, ६ मण्डनः.

१३ एकत्वयुक्तमेकस्य श्रुतिसंयोगात् । १२ वृ, ७ बिन्दुः.

१४ सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् । १३ वृ.

१५ चोदिते तु परार्थत्वाद् यथाश्रुति प्रतीयेत । १४ वृ.

अधि० ८, ७ मण्डनः.

१६ संस्काराद् वा गुणानामव्यवस्था स्यात् । १५ वृ, ८ बिन्दुः.

१७ व्यवस्था वाऽर्थस्य श्रुतिसंयोगात् तस्य शब्दप्रमाणत्वात् । १६ वृ.

अधि० ९, ८ मण्डनः.

१८ आनर्थक्यात् तदङ्गेषु । १७ वृ, ९ बिन्दुः.

अधि० १०, ९ मण्डनः.

१९ कर्तृगुणे तु कर्मासमवायाद् वाक्यभेदः स्यात् । १८ वृ, १० बिन्दुः.

२० साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण । १९ वृ.

अधि० ११, १० मण्डनः.

२१ संदिग्धे तु व्यवायाद् वाक्यभेदः स्यात् । २० वृ, ११ बिन्दुः.

अधि० १२, ११ मण्डनः.

---

संबन्धतो व्यवस्थितता इति बिन्दुः । स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वं इति म-वि-भाट्ट-शा-ल-कु ।

सू० ११ ( १ ) चोद्यते इति वृ ।

अधि० ६ अरुणा इति भा-म-सा-भाट्ट-ल-कु-कौ । आरुण्यादिगुणानामसंकीर्णता इति म-सा-वि-भाट्ट-शा-वृ । आरुण्यादीनां गुणानामसंकीर्णता इति ल । आरुण्यादीनामसंकीर्णत्वं इति बिन्दुः ।

सू० १२ ( १ ) कर्म्यानिय इति ल, तदशुद्धम् ।

अधि० ७ उद्देश्यगतसंख्याऽविवक्षा इति वृ । ग्रहसंमार्जनं इति वि-शा-ल-कु । ग्रहैकत्वं इति भा-म-सा-वि-भाट्ट-बिन्दु-ल-कु-सु-कौ । सर्वेषां ग्रहादीनां संमार्गः इति म-सा-भाट्ट-सु । आदिशब्देन किं विवक्षितं तत्रभवद्भिः ? ग्रहाणामेव सर्वेषां, न ग्रहादीनां इति तु सिद्धान्तः ।

सू० १५ ( १ ) ते प इति य-कु ।

अधि० ८ चमस इति भा-कौ । चमसादौ संमार्गाद्यप्रयोगः इति म-सा-वि-भाट्ट-शा-ल-कु-सु । चमसादौ संमार्गाननुष्ठानं इति बिन्दु-वृ ।

सू० १७ ( १ ) तस्यां श इति क ।

अधि० ९ आनर्थक्यतदङ्ग इति भा-कु-कौ । सप्तदशारत्नितायाः पशुधर्मता इति म-सा-वि-भाट्ट-शा-वृ-ल-कु-सु । सप्तदशारत्नित्वस्य पशुधर्मता इति बिन्दुः । वस्तुतस्तु सप्तदशारत्निता साक्षाद् यूपे, यूपश्च पश्वर्थः, पशुश्च वाजपेयार्थ इति स्थितिः । ततश्च ' सप्तदशारत्निता वाजपेयाङ्गपश्वर्थयूपे ' इति वक्तव्यम् ।

अधि० १० अभिक्रमणं इति भा-कु-कौ । अभिक्रमणादीनां प्रयाजमात्राङ्गता इति भा-कु-कौ भिन्नाः ।

सू० १९ ( १ ) वायित्वाद् इति वृ । ( २ ) स्यात पदं नास्ति भाट्ट-क ।

अधि० ११ उपवीतं इति कु-कौ । कुतूहले द्वादशाधिकरणान्ते एतन्नामधेयं लिखितं तत्तु तत्सूत्रस्य एकादशाधिकरणगुणसूत्रस्वपक्षेण । उपवीतस्य दर्शपूर्णमासाङ्गता इति भा । उपवीतस्य प्राकरणिकाङ्गता इति भा-कु-कौभिन्नाः सर्वे । किं तत् प्राकरणिकं इति साकाङ्क्षत्वात् अयुक्तमिदं शीर्षकं, भा-वत् तु ग्राह्यम् ।

सू० २१ ( १ ) ग्धेषु व्य इति वृ-कुटि ।

अधि० १२ गुणानां मिथोऽसंबधः इति वि-शा-ल-कु । मिथोऽसंबन्धः इति म-सा-सु । जगति कयोरपि मिथः संबन्धो नास्तीति प्रतिपाद्यते वाऽत्र ? सर्वथापि शीर्षकमिदमयुक्तमबोधकत्वात् । वारण इति

**२२ गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् । २१ वृ, १२ बिन्दुः.**

**अधि० १३, १२ मण्डनः.**

**२३ मिथश्चानर्थसंबंधात् । २२ वृ, १३बिन्दुः.**

**अधि० १४, १३ मण्डनः.**

**२४ आनन्तर्यमचोदना । २३ वृ, १४ बिन्दुः.**

**२५ वाक्यानां च समाप्तत्वात् । २४ वृ.**

**अधि० १५, १४ मण्डनः.**

**२६ शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसंबन्धात् । २५वृ,१५बिन्दुः.**

**२७ व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः । २६ वृ.**

**पादे चतुर्दश न्याया भाष्यकारेण वर्णिताः ॥**

**अथातो द्रव्य संदिग्धेषु सप्तविंशतिः ॥**

**॥ इति तृतीयाध्यायस्य प्रथमः पादः समाप्तः॥**

---

**अथ तृतीयाध्यायस्य द्वितीयः पादः**

**अधि० १.**

---

कौ । वारणवैकङ्कतादिपात्राणा कृत्स्नयागगुणता इति म–सा–भाट्ट–सु । वारणादीना सर्वयज्ञाङ्गता इति भा । वारणादीना सर्वयज्ञार्थत्वं इति कौ । वैकङ्कतादिपात्राणां कृत्स्नयागगुणत्वं इति वृ । वैकङ्कतादिपात्राणां सर्वयागगुणत्वं इति बिन्दुः ।

**अधि० १३** वार्त्रघ्न्याद्यनुवाक्यानामाज्यभागाङ्गता इति बिन्दुः । वार्त्रघ्नी इति म–सा–वि–भाट्ट –शा–ल–कु–कौ । वार्त्रघ्न्यादीनामाज्यभागाङ्गता इति भा । वार्त्रघ्न्याद्यनुवाक्यानामाज्यभागाङ्गता इति म–सा–वृ–सु । अत्र बिन्दुशीर्षके वार्त्रघ्नीशब्दस्य पुंवद्भावं कृत्वा वार्त्रघ्न इति साधितं, तत्तु न युक्तं, वार्तघ्नीशब्दस्य भाषितपुंस्कत्वाभावात् । वार्त्रघ्न्यादिशब्दः अनुवाक्याशब्दस्य विशेषणं न तु वार्त्रघ्नीशब्दः । तथाच पुंवद्भावस्य प्राप्तिरेव नास्ति ।

**सू० २३** ( १ ) बन्धः इति भाट्ट–क–य–कु –बिन्दु–कौ । ' मिथश्चानर्थसंबन्धादिष्टो नाङ्गाङ्गिसंगमः ' इति तु वार्तिकम्, भाष्यात्तु प्रथमापि सिद्ध्यति ।

**अधि० १४** आनन्तर्यानियामकत्वं इति भा। आनन्तर्यं नैकवाक्यतानियामकं इत्यर्थः । मुष्टिकरणादीनां कृत्स्नप्राकरणिकाङ्गता इनि म–सा–सु । हस्तावनेजनं इति कौ । हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गता इति वि–भाट्ट–शा–वृ–ल–कु–कौ । हस्तावनेजनादीनां यावत्प्राकरणिकाङ्गता इति बिन्दुः । वि–शा शीर्षकस्थं कृत्स्नपदं प्रत्याख्याय ' यावत् ' पदमुपसंख्यातं बिन्दुसंपादकैः । एतेन कोऽतिशयः साधित इति न ज्ञायते ।

**अधि० १५** आग्नेयचतुर्धाकरणं इति कौ । चतुर्धाकरणं इति भा–भाट्ट–कौ । चतुर्धाकरणस्याग्नेयमात्राङ्गता इति म–सा–कु–सु । चतुर्धाकरणादीनामाग्नेयमात्राङ्गता इति वि–भाट्ट–शा–बिन्दु–वृ–ल । आदिशब्देन किं गृह्यते तत्रभवाद्भिः ? आदिशब्दोऽनर्थकोऽत्र ।

**सू० २७** ( १ ) वाऽर्थस्य श्रुतिसंयो इति भाट्ट–क–कौ । ( २ ) गस्यार्थे इति शा–पाठस्तु अशुद्धः ।

+मण्डनाचार्येण चतुर्दशैवाधिकरणान्युक्तानि । इतरैस्तु पञ्चदश कृतानि । तत्र शेषलक्षणप्रतिज्ञा मण्डनाचार्येण पृथगधिकरणत्वेन न स्वीकृता इतरत्र तु स्वीकृता इति संख्याभेदः ।

**अधि० १** बर्हिर्न्यायः इति म–सा–वि–ल–कु–सु । मन्त्राणां मुख्यार्थविनियोग; इति भा । यदि मन्त्राणां इति षष्ठी प्रयुक्ता तदा मुख्यार्थे इति सप्तमी कस्मान्न प्रयुक्ता ? मन्त्राणां विनियोगो मुख्यार्थे न गौणेऽर्थे इति हि प्रतिपादनीयम् । मुख्यार्थे मन्त्रविनियोगः इति भाट्ट। इदं तु साधीयः । मुख्ये विनियोगः इति वि–शा–ल–कु । कस्य विनियोग इत्याकाङ्क्षायां सत्यामपि नोक्तं इति न्यूनताग्रस्तमिदम् । लवनप्रकाशकमन्त्राणां मुख्ये विनियोगः इति म–सा–सु । तर्हि किं इतरयागाङ्गप्रकाशकमन्त्राणां अमुख्येपि विनियोगो भवति ? । मन्त्रसामान्यस्यैव तु विनियोगो निर्णीतोऽत्र न

१ अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् ।
२ संस्कारकत्वादचोदिते न स्यात् ।

अधि० २.

३ वचनात् त्वयथार्थमैन्द्री स्यात् । २बिन्दुः.
४ गुणाद् वाऽप्यभिधानं स्यात् संबन्धस्याशास्त्रहेतुत्वात् ।

अधि० ३.

५ तथाऽऽह्वानमपीति चेत् । ३ बिन्दुः.

---

केवलं लवनमन्त्राणामेव । लवनप्रकाशकमन्त्राणां मुख्ये बर्हिषि विनियोगः इति वृ । लवनमन्त्राणां मुख्ये विनियोगः इति बिन्दुः । लिङ्गं इति कौ अन्ते, लिङ्गविनियोगः इति कौ अनुक्रमण्याम् ।

सू० १ ( १ ) न सामर्थ्यान्म इति भा-म-सा -वि-शा-ल-चौ । ' स चासौ अर्थाभिधानसंयोगात् शक्नोत्युपकर्तुं, न गौणमर्थं शक्नोत्यभिधातुं ' इति भाष्यात् , ' अर्थाभिधानसंयोगान्मत्राणां क्रतुशेषता ' इति ' तेनैष सूत्रार्थः यस्मादर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः ' इति च वार्तिकात् अर्थाभिधानसंयोगात् इत्येव पाठः सिद्धयति, न तु 'सामर्थ्यात् ' इति । स्पष्टयोरपि भाष्यवार्तिकयोः सतोः भा-संशोधकैः अर्थाभिधानसामर्थ्यात् इतिपाठः कुतः स्वीकृतः इति त एव जानन्तु । तथालिखितपाठोपि व्यक्ताभ्यां भाष्यवार्तिकाभ्यां बाधनीय एवेति मन्यामहे । ' संयोगात् ' इत्यत्रैव च भाट्ट-क-वृ-बिन्दु-य-कु-वा-सु-कौ--सोमसूत्र -- सोमव्याख्या एते ग्रन्था-अनुकूलाः । न संबन्धान्म इति कुटि । स तु भाष्यान्तरगतः स्यान्न वा ।

सू०२ ( १ ) रत्वा इति य-सु-कौ । (२) तेन इति तृतीयान्तत्वेन मुद्रितं म-सा-वि-शा-ल-कु । परंतु ' अचोदिते पूषादौ दर्शपूर्णमासयोः यन्मन्त्रा न विनियुज्यन्ते युक्तमेव तत् ' इति वार्तिके, कु-मूलेपि च ' अचोदिते पूषणि मन्त्रो न ' इत्येव व्याख्यानात् तृतीयान्तः पाठः अशुद्ध एव ।

अधि० २ इन्द्रप्रकाशकमन्त्राणां गार्हपत्ये विनियोगः इति म-सा-सु । इन्द्रप्रकाशकमन्त्राणां श्रुत्या गार्हपत्ये विनियोगः इति वृ । इदं द्वयमपि अयुक्तं, इन्द्रप्रकाशकास्तु मन्त्राः शतशो विद्यन्ते । न च तेषां गार्हपत्ये विनियोगः । अत्र तु निवेशनः संगमन इत्यस्य वा, कदा चन स्तरीरसि इत्यस्य वा एकस्यैव मन्त्रस्य गार्हपत्ये विनियोगः सिद्धान्तितः । ऐन्द्री इति भा-भाट्ट-कौ । ऐन्द्रीन्याये ( ऐन्द्या गार्हपत्ये ) विनियोगः इति शा । विचित्रमेवेदं शीर्षकम् । कोऽर्थोऽभिप्रेतोऽस्य संपादकेनेति न ज्ञायते । मध्य एकः कंसः कुतः समायातो मथुरायां भगवता हतोऽपि ? । ऐन्द्रीन्याये इत्यस्य चान्वयोपि न क्वचिद्भवति इति तत् पदं त्रिशङ्कुरिव निराधारमवलम्बते । ऐन्द्या गार्हपत्ये विनियोगः इति वि-भाट्ट-ल-कु । गार्हपत्यन्यायः इति-म-सा -सु । श्रुत्या विनियोगः इति बिन्दुः ।

सू० ३ ( १ ) वचनान्वयार्थमैन्द्री स्यात् इति ९२ पृष्ठे कुतूहले पाठः । २८० पृष्ठे तु प्रकृते स्थले यथाभाष्यमेव पठितम् ।

सू० ४ ( १ ) णादप्य इति कौ ।

अधि० ३ आह्वानप्रकाशकमन्त्राणामाह्वानविनियोगः इति भाट्ट । आह्वानप्रकाशकमन्त्राणामाह्वाने विनियोगः इति म-सा-वृ-सु । ननु आह्वानमन्त्राः कति सन्ति ? । मन्त्राणामाह्वानविनियोग इति षष्ठ्याः क्वान्वयः ? । आह्वानविनियोगः इति वि-शा -ल । अत्र षष्ठीतत्पुरुषः सप्तमीतत्पुरुषो वा ? आद्ये क इति प्रश्नः । द्वितीये कस्येति प्रश्नः । आह्वानार्थानां तत्र विनियोगः इति बिन्दुः । अत्र आह्वानार्थाः के इति प्रश्नः । तत्र कुत्र, इति द्वितीयः प्रश्नः । आह्वाने विनियोगः इति कु । अत्रापि कस्येति प्रश्नः । हविष्कृन् इति भाट्ट । हविष्कृदाह्वानं इति कौ । हविष्कृन्मन्त्रस्य विनियोगः इति भा । अत्रापि क इति प्रश्नः । वस्तुतस्तु हविष्कृन्मन्त्रस्य मुख्येऽर्थे आह्वाने विनियोगः इति आवश्यकम् ।

सू० ५ ( १ ) चेदन्तमुत्तरेणैकं क-य-कु । अर्थात् उत्तरसूत्रमारभ्य सूत्राङ्कः एकत्वेन न्यूनः स्यात् य-कु ।

६ न कालविधिश्चोदितत्वात् । ५ य–कु.
७ गुणाभावात् । ६ य–कु.
८ लिङ्गाच्च । ७ य–कु.
९ विधिकोपश्चोपदेशे स्यात् । ८ य–कु.

अधि० ४.

१० तथोत्थानविसर्जने । ९–य–कु, ४ बिन्दुः.

अधि० ५.

११ सूक्तवाके च कालविधिः परार्थत्वात् । १० य–कु, ५ बिन्दुः.
१२ उपदेशो वा याज्याशब्दो हि नाकस्मात् । ११ य–कु.
१३ स देवतार्थस्तत्संयोगात् । १२ य–कु.
१४ प्रतिपत्तिरिति चेत् । १३ य–कु.
१५ स्विष्टकृद्वदुभयसंस्कारः स्यात् । १४ म–सा–वि–शा–वृ–ल–चौ, १३ य–कु.

अधि० ६.

१६ कृत्स्नोपदेशादुभयत्र सर्ववचनम् । १५ म–सा–वि–शा–वृ–ल–चौ, १४ य–कु, ६ बिन्दुः.
१७ यथार्थं वा शेषभूतसंस्कारात् । १६ म–सा–वि–शा–वृ–ल–चौ, १५ य–कु.
१८ वचनादिति चेत् । १७ म–सा–वि–शा–वृ–ल–चौ, १६ य–कु.

---

सू० ८ ( १ ) इतश्च तथा लिङ्गात् इति सूत्रं भाट्ट–वृ । परंतु कस्तूरिवृत्तौ अन्यत्र च सर्वत्र लिङ्गाच्च इत्येव सूत्रम् । कस्यां चित् वृत्तौ ' इतश्च तथा ' इति अवतरणं स्यात् । स च लिङ्गाच्च इति सूत्रस्थचकारार्थः । भाट्टसंशोधकेन सुबोधिनीकर्त्रा च तदवतरणं सत् सूत्रावयवत्वेन कल्पितं, अर्थात् चकारो व्यर्थः संपन्नः इति तस्मै अर्धचन्द्रः प्रदत्तः । तदिदं अनवधानमूलकत्वादुपेक्ष्यम् ।

अधि० ४ अग्निविहरणप्रकाशकमन्त्रविनियोगः इति वि–शा–ल । अग्निमन्त्रविनियोगः इति कु–शीर्षकं न्यूनताग्रस्तम् । अग्निविहरणादिप्रकाशमन्त्राणा तत्रैव विनियोगः इति म–सा–वृ–सु । तत्रैव कुत्रैव ? । अग्निविहरणादिप्रकाशकानां तत्रैव विनियोगः इति भाट्ट–बिन्दुः । के ते प्रकाशकाः ? । अग्निविहरणादि-मन्त्रविनियोगः इति भा । एतावन्ति सर्वाण्यपि शीर्षकाणि अशुद्धानीति प्रतीमः । अत्र '' किमुत्थानं वाग्विसर्जनं च प्रति मन्त्रयोरुपदेशः उत कालार्थः संयोगः इति । अत्र पूर्वाधिकरणन्यायोऽतिदिश्यते '' इत्युक्त्वा ' उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर ' इति 'व्रतं कृणुतेति वाचं विसृजति' इति च कालार्थः संयोग इति सिद्धान्तितं भाष्ये । ' उत्थानवाग्विसर्जनयोः कालार्थः संयोगः ' इति तु शीर्षकमावश्यकम् । उत्थानवाग्विसर्ग इति कौ अन्ते । वाग्विसर्ग इति कौ आदौ ।

अधि० ५ प्रस्तरप्रहरणं इति म–सा–वि–ल–कु–सु । सूक्तवाक इति भा–कु–कौ । सूक्तवाकस्य प्रस्तरप्रहरणाङ्गता इति म–सा–वि–भाट्ट–शा–बिन्दु–वृ–ल–कु–सु ।

सू० १२ ( १ ) देशौ वा इति चौ–पाठस्तु अशुद्ध एव ।

सू० १४ ( १ ) चेदन्तमुत्तरेणैकं क–य–कु । किं चात्र य–कुवत् एकसूत्रत्वं, म–सा–वि–शा–वृ–ल–चौ इत्यत्रापि स्वीकृतं, तेन उत्तरसूत्रमारभ्य तेषु सूत्राङ्कः एकेन न्यूनः स्यात् , द्वाभ्यां तु य–कु इत्यत्र ।

सू० १५ ( १ ) स्यादिति इति सु । अयमिति-शब्दो न सूत्रस्थः, तथा मुद्रणं तु भ्रान्त्या ।

अधि० ६ अर्थानुसारेण सूक्तवाकविनियोगः इति बिन्दुः । सूक्तवाक इति म–सा–वि–ल–कु–सु । सूक्तवाकस्य विभज्य विनियोगः इति भा । सूक्त-वाकानामर्थानुसारेण विनियोगः इति म–सा–वि–भाट्ट–शा–वृ–ल–कु–सु । कति सन्ति भोः सूक्तवाकाः ?

सू० १७ ( १ ) स्कारत्वात् इति वृ–य–कु । य–कु पाठ एव स्वारसिकार्थवाहकः । भाष्यवार्तिके च नानुकूले न प्रतिकूले ।

सू० १८ ( १ ) चेदन्तमुत्तरेणैकं क–य–कु । ३।२।१८,१९ सूत्रयोरिव अत्रापि सूत्रैकत्वे न प्रय-

१९ प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः। १८ म–सा–वि–शा–वृ–ल–चौ, १६ य–कु.

अधि० ७.

२० लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्। १९ म–सा–वि–शा–वृ–ल–चौ, १७ य–कु, ७ बिन्दुः.

अधि० ८.

२१ अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात्। २० म–सा–वि–शा–वृ–ल–चौ, १८ य–कु, ८ बिन्दुः.

२२ तदाख्यो वा प्रकरणोपपत्तिभ्याम्। २१ म–सा–वि–शा–वृ–ल–चौ, २१स्य २सु, १९ य–कु.

२३ अनर्थकश्चोपदेशः स्यादसंबन्धात् फलवता नह्युपस्थानं फलवत्। २२ म–सा–वि–शा–वृ–ल–चौ, २० य–कु.

२४ सर्वेषां चोपदिष्टत्वात्। २३ म–सा–वि–शा–वृ–ल–चौ–सु, २३ स्य २ कौ, २१ य–कु.

अधि० ९.

---

तितं म–सा–वि–शादिभिः। कस्मात् तथा इति तु त एव जानन्ति। इत उत्तरसूत्रमारभ्य य–कु इत्यनयोः सूत्राङ्केषु त्रितयेन न्यूनता स्यात्, म–सादिषु तु पूर्वानुवृत्तं एकेनैव न्यूनत्वम्।

अधि० ७ काम्ययाज्यानुवाक्याकाण्डानां काम्यमात्राङ्गता इति म–भाट्ट–सु। काम्ययाज्यानुवाक्याऽनुवाकानां बहुत्वेपि काण्डमेकमेव। तस्मात् काण्डानां इति बहुवचनमयुक्तम्। काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गता इति सा–वि–शा–बिन्दु–वृ–ल–कु। लिङ्गक्रमसमाख्या इति कौ। लिङ्गस्य दुर्बलप्रमाणोपजीवित्वं इति भा। लिङ्गमात्रस्य न दुर्बलप्रमाणोपजीवित्वं किं तु काम्ययाज्यानुवाक्यास्वेव। ततश्च सामान्यबोधकं शीर्षकमयुक्तम्।

सू० २० (१) म्नातम् इति वि-पाठो न साधीयान्। म्नायात् इति चौ–पाठस्तु अयुक्त एव।

अधि० ८ आग्नीध्रोपस्थाने प्राकृतमन्त्रविनियोगः इति बिन्दु–ल। आग्नीध्रोपस्थाने प्राकृताना मन्त्राणां विनियोगः इति म–सा–वि–भाट्ट–शा–वृ–सु। मन्त्राणां इति बहुवचनमशुद्धं, एक एव हि मन्त्र आग्नीध्रमण्डपोपस्थाने विनियुज्यते नानेके। प्राकृतानां इत्यपि अशुद्धं, प्राकृत इति प्रकृतौ भव इत्यर्थः। अत्र तु प्रकृतः प्रकरणे प्राग्गत एव ग्राह्यः इति विधातव्यम्। आग्नीध्रोपस्थाने प्रकृतानां मन्त्राणां विनियोग इति कु। तत्र प्रकृतशब्दमभिनन्दामः, बहुवचनं तु न सहामहे। आग्नेयी इति भा–कु–कौ। तत्र आग्नेयी ऋक् इत्यर्थः। अयं आग्नेयीन्यायः इत्युच्यते।

सू० २१ (१) धिस्तदा इति ल-पाठः अशुद्धः। लिखितादौ 'रत' इति विद्यमानं 'स्त' इति पठितं तत्संशोधकैः विशेषस्याल्पत्वात्।

सू० २२ पूर्वसूत्रस्य २१ अङ्क एव अत्रापि सूत्रे पुनर्निवेशितो द्वितीयवारम्। उत्तरसूत्रं सुधायामवतरणे विद्यमानमपि सूत्रत्वेन न मुद्रितं इति तदङ्कोऽवशिष्टः सन् सर्वेषा इति सूत्रे एव निवेशितः, इति भूयसी अव्यवस्था अङ्कविषये सुधायाम्।

सू० २३ (१) न ह्युपस्थानं फलवत् इति भागो नास्त्येव वि–शा–य–कु–लटि। सुधायां तु ११३१ पृष्ठे कृशाक्षरैर्मुद्रितं, ' नहि ' इत्यादि सूत्रभागश्च भाष्यवार्तिकाभ्यां व्याख्यातः इति प्रतिपादितम्। महापण्डितानां हि सर्वं शोभते।

सू० २४ कौस्तुभे 'अनर्थकः' इति सूत्रेऽपि २३ अङ्कः, अत्र सूत्रेऽपि स एव। उत्तरसूत्रेषु च क्रमेण एकेन वर्धिता एवाङ्का मुद्रिताः। एवं सुधायामपि। एवं च सुधाकौस्तुभयोः विना कारणमेव एकाङ्कन्यूनता वास्तविकाङ्कात्।

अधि० ९ भक्ष इति कौ। भक्षन्यायः, भक्षाधिकरणं इत्यर्थः। भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ

२५ लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य । २४ म-सा-वि-शा-वृ-ल-चौ-सु-कौ, २२ य-कु, ९ बिन्दुः.

२६ तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् । २५म-सा-वि-शा-वृ-ल-चौ-सु कौ, २३ य-कु.

अधि० १०.

२७ गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्, तयोरेकार्थसंयोगात् । २६ म-सा-वि-शा-वृ-ल-चौ-सु-कौ, २४य-कु १० बिन्दुः.

अधि० ११ सू० २८, २९, ३९, ४४.

२८ लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम् । २७ म-सा-वि-शा-वृ-ल-चौ-सु-कौ, २५य-कु, ११ बिन्दुः.

२९ यथादेवतं वा, तत्प्रकृतित्वं हि दर्शयति । २८ म-सा-वि-शा-वृ-ल-चौ-सु-कौ, २६ य-कु.

अधि० १२.

---

विनियोगः इति भाकौभिन्नाः सर्वे । भक्षमन्त्राणां इत्यस्य स्थाने भक्षानुवाकस्येति युक्तं विचार्यमाणभक्षमन्त्रबहुत्वाभावात् । भक्षानुवाकस्य यथालिङ्गं विनियोगः इति भा । लिङ्गसमाख्या इति कौ अधिकरणान्ते । इदं विनियोजकप्रमाणनामधेयम् ।

सू० २५ (१) ख्याभ्यां इति शा-बिन्दु-वृ-कुटि ।

सू० २६ (१) तस्यापक इति क ।

अधि० १० गुणाभिधानं इति कौ । अधिकरणसूत्रगतप्रथमावयवोऽयं अधिकरणनामधेयम् । मन्द्राभिभूतिरित्यादिमन्त्राणामेकवाक्यत्वं इति भा-बिन्दुः । अत्र भाष्यं ' तत्र संदेहः किं मन्द्रादिः तृप्यतु इत्येवमन्तः एको मन्त्रः, वसुमद्गणादिरपरः, उत मन्द्रादिर्भक्षयाम्यन्तः एक एव मन्त्र इति' द्वौ मन्त्रौ द्वौ ह्येतावर्थौ' इति पूर्वः पक्षः । एवं प्राप्ते उच्यते गुणाभिधानात् मन्द्रादिरेकमन्त्रः स्यादिति ' इति सिद्धान्तः । एवं सति 'मन्त्राणामेकवाक्यत्वं ' इति अपसिद्धान्तः । पूर्वपक्षेपि नैते बहवो मन्त्राः किंनु द्वावेव । सिद्धान्ते तु अवान्तरवाक्यभेदेपि एक एव मन्त्रः । मन्द्राभिभूतिरित्यादेरेकमन्त्रता इति वि-शा-ल-कु । मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकमन्त्रत्वं इति वृ-सु । मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकशस्त्रता इति म-सा-भाट्ट । किमिमं भक्षमन्त्रं आज्यवत् प्रउगवत् मरुत्वतीयवत् शस्त्रं मन्यन्ते संपादकमहाभागाः ? महदाश्चर्यम् । होत्राभिः सप्तभिः पठनीया गीतिरहिताः शंसनोपयोगिनो मन्त्रविशेषसमुदाया हि शस्त्रम् । भक्षमन्त्रस्तु न शस्त्रम् ।

अधि० ११ इन्द्रपीत इति भा-कौ । भक्षमन्त्रगतस्य इन्द्रपीतपदस्य विवादास्पदत्वात् तदेवाधिकरणस्य नामेदम् । इन्द्रपीतस्येत्यादिमन्त्राणां विनियोगः इति वि-शा-कु । इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषु ऊहेन विनियोगः इति म-सा-भाट्ट-वृ-सु । अत्र मन्त्राणा इति बहुवचनं न विवक्षितम् । मन्त्रस्य च इन्द्रपीतस्येति पदं नारम्भकं । 'मन्द्राभिभूतिः केतुर्यज्ञानां ' इति तु भक्षमन्त्रस्य आरम्भः । ऊहेन विनियोग· इति च पूर्वपक्षो भवति न सिद्धान्तः । तथाचाशुद्धमिदं शीर्षकम् । इन्द्रपीतस्येत्यादीनामूहेन यावद्भक्षेषु विनियोगः इति बिन्दु. । इदमपि पूर्ववदशुद्धम् । एवं च भाकौभिन्नं सर्वमशुद्धम् । ऐन्द्राणां अनैन्द्राणां चेति सर्वेषां समन्त्रकं भक्षणं, यथासमाम्नातश्च मन्त्रः, न ऊहः इति हि सिद्धान्तः ।

सू० २८ (१) ने नै इति सुधासूत्रे । तत्र विधाने अनैन्द्राणां इति पदच्छेदः । सुधामूले तु भा-वत् । वृ-मूले तु विधाने अनैन्द्राणां इति व्याख्यातं, सूत्रे तु भा-वत् ।

सू० २९ (१) यथादैव इति भाट्टटि-वृ । यथादैवतं च त इति भाट्ट । यथादैवतं त इति क । (२) त्वं द इति सुधासूत्रे, सुधामूले तु यथाभाष्यमेव ।

अधि० १२ अभ्युन्नीत इति कौ । अभ्युन्नीतसोमभक्षणं इति वि-शा-ल-कु । अधिकरणार्थेनासं-

३० पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं[1] द्विशेषत्वात् । २९ म–सा–वि–शा–बृ–ल–चौ–सु–कौ, २७य–कु, १२ बिन्दुः.

३१ अपनयाद्वा पूर्वस्यामुपलक्षणम् । ३० म–सा–वि–शा–बृ–ल–चौ–सु–कौ,२८ य–कु.

३२ [1]अग्रहणाद्वाऽनपायः स्यात् । ३१ म–सा–वि–शा–बृ–ल–चौ–सु–कौ,२९य–कु.

अधि० १३.

३३ पात्नीवते[1] तु पूर्ववत् । ३२ म–सा–वि–शा–बृ–ल–चौ–सु–कौ,३०य–कु,१३ बिन्दुः.

३४ ग्रहणाद् वाऽपनीतः स्यात् ।३३ म–सा–वि–शा–बृ–ल–चौ–सु–कौ,३१य–कु.

अधि० १४.

३५ त्वष्टारं तूपलक्षयेत् पानात्[1] । ३४ म–सा–वि–शा–बृ–ल–चौ, सु–कौ, ३२ य–कु, १४ बिन्दुः.

---

बद्धत्वादयुक्तमिदम् । अभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणं इति म–सा–भाट्ट–बृ–सु । पुनरभ्युन्नीत इति कौ अधिकरणान्ते । पुनरभ्युन्नीतपूर्वदेवतोपलक्षणं इति कौ । अत्र पुनरभ्युन्नीते इति सप्तमी युक्ता । वस्तुतस्तु पुनरभ्युन्नीतभक्षे इत्येवावश्यकम् । पुनरभ्युन्नीतभक्षणे इन्द्रस्याप्युपलक्षणं इति भा । पुनरभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणं इति बिन्दु-शीर्षकं तु सर्वोत्तमम् ।

इत आरभ्य एतत्पादान्तं सर्वाणि अधिकरणानि कृत्वाचिन्तया अन्तर्गर्भिणीरूपाणि इति ज्ञेयम् ।

सू० ३० (१) णं विशे इति चौ । णं तद्वि इति बिन्दुः ।

सू० ३२ (१) ग्रहणाद्वाऽपनयः स्यात् इति म–सा–वि–शा–ल–चौ । ग्रहणाद्वाऽनपायः स्यात् इति य । अग्रहणाद्वाऽपनयः इत्येव सूत्रं कुटि ।

अधि० १३ पात्नीवत इति कौ । विषयसूचकं नामधेयमिदम् । पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणं इति म–सा–वि–भाट्ट–शा–बृ–ल–कु–सु । पात्नीवतभक्षणे इन्द्रादीनामनूहः इति बिन्दुः । पात्नीवतभक्षणे पूर्वदेवतानुपलक्षणं इति भा । पात्नीवते द्विदैवत्यदेवतोपलक्षणं इति कौ अधिकरणादौ । पात्नीवते द्विदैवत्योपलेक्षणं इति कौ अनुक्रमण्याम् । द्विविधमपि कौ–शीर्षकं सिद्धान्तविरुद्धम् ।

सू० ३३ (१) ते पू इति क । (२) वत्त्वात् इति बृ–कुटि ।

सू० ३४ (१) णादप इति क । (२) नीतं स्यात् इति भा–म–सा–वि–भाट्ट–क–शा–ल–चौ–वा–सु–कौ । नीतः इति तु बृ–य–कु । अत्र प्रश्नः संमुखीभवति को वाऽपनीतः किं वाऽपनीतमिति । तत्र भाष्यं ' अपनीयते हि स शेष इह ' इति, वार्तिकं च ' यस्य ग्रहणवेलायां संनिधिः सोऽपनीयते ' इति, सुधा च ' अपनीतोक्तिव्याख्यार्थं अपनीयते हीति भाष्यं ' इति, तेन भाष्यवार्तिकसुधासंमतः पाठः ' अपनीतः ' इत्येव । ' सोमशेषः अपनीतः ' इति बृ–कु । पूर्वदैवतं अपनीतं इति तु क । तथाच भाष्यवार्तिकसुधापुस्तकेषु अपनीतं इति मुद्रणं विचारराहित्यमूलकमेवेति निश्चीयते । कस्तूरिपाठे तु अपनीतं इत्येव ।

अधि० १४ त्वष्टृ इति कौ । सौत्रेण पदेन नामधेयमिदम् । पात्नीवतभक्षणे त्वष्टुरनुपलक्षणं इति भा–बिन्दुः । पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणं इति बृ । पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणीयता इति म–सा–वि–भाट्ट–शा–ल–कु–सु । पात्नीवते त्वष्टुरदेवतात्वं इति कौ ।

सू० ३५ (१) पानात् इति पदं नास्ति वि–चौटि–कुटि । भाष्ये तु ' कुतः पानात् ' इत्युक्तं, वार्तिके च ' पातृत्वनिर्देशात् ' इत्युक्तम् । इति पानात् इति पदमावश्यकमेव सूत्रे ।

३६ अतुल्यत्वात्तु नैवं स्यात्। ३५ म-सा-वि-शा-वृ-ल-चौ-सु-कौ, ३३ य-कु.

अधि० १५.

३७ त्रिंशच्च परार्थत्वात्। ३६ म-सा-वि-शा-वृ-ल-चौ-सु-कौ, ३४ य-कु, १५ बिन्दुः.

अधि० १६.

३८ अनुवषट्कारश्च कर्तृवत्। ३७ म-सा-वि-शा-वृ-ल-चौ-सु-कौ, ३५ य-कु, १६ बिन्दुः.

अधि० ११स्य गुणसूत्रम्, *१७ भाट्ट-बिन्दुः.

३९ छन्दःप्रतिषेधस्तु सर्वगामित्वात्। ३८ म-सा-वि-शा-ल-चौ-सु-कौ, ३६ य-कु, १७ बिन्दुः.

अधि० १७, १८ भाट्ट-बिन्दुः.

---

अधि० १५ त्रिंशत् इति कौ। सूत्रस्थेन पदेन नामधेयमिदम्। पात्नीवतभक्षणे त्रयस्त्रिंशतोऽनुपलक्षणं इति भा। पात्नीवतभक्षणे त्रिंशतामनुपलक्षणं इति बिन्दुः। पात्नीवतशेषभक्षणे त्रिंशतामनुपलक्षणं इति भाट्ट। पात्नीवतशेषभक्षणे त्रिंशतोऽनुपलक्षणं इति वृ-कु। पात्नीवतशेषभक्षे त्रिंशतामनुपलक्षणं इति म-सा-वि-शा-ल-सु। एतेषु चतुर्षु अन्तिमेषु शीर्षकेषु क्वचित् त्रिंशतः इत्येकवचनं क्वचिच्च त्रिंशतां इति बहुवचनम्। तत्र त्रिंशतां इत्युक्ते त्रिंशत्संख्याकानामेको गणः, तादृशानां च गणानां बहुत्वं इति प्रतीतं भवेत्। त्रिंशतः इत्युक्ते तु एक एव गणः प्रतीतो भवेत्। यथा विंशतिर्ब्राह्मणाः इत्युक्ते दशाधिका दश ब्राह्मणाः प्रतीता भवन्ति। विंशतयो ब्राह्मणा इत्युक्ते तु षष्टिर्ब्राह्मणाः प्रतीताः स्युः। एवं सति त्रिंशतां इत्ययुक्तमेव। तदपेक्षया त्रिंशतः इति युक्तम्। वस्तुतस्तु 'त्रिंशतं त्रींश्च देवान्' इति श्रुतेः त्रयस्त्रिंशत् देवता अत्र गृहीताः सन्ति। अत एव भा-शीर्षके त्रयस्त्रिंशतोऽनुपलक्षणं इत्युक्तम्। ततश्च त्रिंशतां इति वा त्रिंशतः इति वा उभयथाप्यशुद्धम्। सूत्रे तु त्रिंशत्-शब्देन 'पत्नीवतस्त्रिंशतं त्रींश्च देवान्' इति मन्त्रवाक्यं सूचितं न केवलं त्रिंशत्संख्येति न दोषः।

सू० ३७ (१) रार्थत्वात् इति सु। अत्र थकारस्य धकार उच्चारवैचित्र्यात्। अशुद्धता तु स्पष्टैव।

अधि० १६ अनुवषट्कारदेवतानुपलक्षणं इति भा-कौ। भक्षणे अनुवषट्कारदेवताया अनुपलक्षणं -इति म-सा-वि-भाट्ट-शा-वृ-ल-कु-सु। भक्षे वषट्कारदेवतानुपलक्षणं इति बिन्दुः।

सू० ३८ (१) य-कुभिन्नग्रन्थेषु सर्वत्र 'वषट्' इत्येव मुद्रितम्। अत्र भाष्यं 'एवं प्राप्ते ब्रूमः अनुवषट्कारदेवता नोपलक्षयितव्या कर्तृवत्' इति। वार्तिकमपि 'अनुवषट्कारदेवतायाश्चोदनया' इत्यादि। तेन अनुवषट्कारश्च इत्येव सूत्रे स्यात्। सुधा तु 'वषट्कारशब्देन अनुवषट्कारदेवतायाः लक्षितलक्षणोक्तायाः' इत्यादि। सा तु शिरोवेष्टनेन नासास्पर्शमनुधावति। मण्डनश्लोकेऽपि 'सा नोपलक्ष्या तु वषट्कृतेज्या' इत्यत्र 'लक्ष्याऽनुवषट्' इति पाठः स्यात् इति संभाव्यते। (२) श्च पूर्ववत् इति वि-कुटि। 'यथा पश्चात्तनः पाता पूर्वपात्रुपलक्षणं' इति वार्तिकानुसारेण वि-कुटिपाठोऽपि संगच्छते, तथापि भाष्यात् कर्तृवत् इत्येव पाठः।

* अनैन्द्राग्नाममन्त्रकभक्षणं इति भा-भिन्नाः। इदं सप्तदशमधिकरणं इति भा-भिन्नैः सर्वैः संपादकैर्गृहीतम्। वस्तुतस्तु नेदमधिकरणान्तरं किंतु अनेन ३९ तमसूत्रेण इन्द्रपीताधिकरणोक्तद्वितीयोद्दपूर्वपक्षनिराकरणमात्रं क्रियते। इन्द्रपीताधिकरणं तु नाद्यापि समाप्तम्।

सू० ३९ (१) छन्दोनिषे इति वृ-कुटि।

अधि० १७ ऐन्द्राग्नभक्षणे मन्त्राभावः इति कौ। ऐन्द्राग्नभक्षस्यामन्त्रकत्वं इति कौ-भिन्नाः सर्वे।

४० ऐन्द्राग्ने तु लिङ्गभावात् स्यात् । ३९ म–सा–वि–शा–बृ–ल–चौ–सु–कौ, ३७ य–कु, १८बिन्दुः.

४१ एकस्मिन् वा देवतान्तराद् विभागवत् । ४०–सा–वि–शा–बृ–ल–चौ–सु–कौ, ३८य–कु.

अधि० १८, १९ भाट्ट-बिन्दु.

४२ छन्दश्च देवतावत् । ४१ म–सा–वि–शा–बृ–ल–चौ–सु–कौ, ३९ य–कु, १९ बिन्दुः.

४३ सर्वेषु वाऽभावादेकछन्दसः । ४२ म–सा–वि–शा–बृ–ल–चौ–सु–कौ, ४० य–कु.

अधि० ११ स्य गुणसूत्रं, * २० भाट्ट-बिन्दुः १९ मण्डनः.

४४ सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि । ४३म–सा–वि–शा–बृ–ल–चौ–कौ, ४२सु, ४१ य–कु, २० बिन्दुः.

---

सू० ४० ( १ ) लिङ्गभवात् इति कौस्तुभमुद्रणं तु हस्तादिदोषः ।

अधि० १८ गायत्रं छन्द इत्यादीनामनेकच्छन्दस्के विनियोगः इति बिन्दुः । गायत्रच्छन्द इत्यादिमन्त्राणामनेकच्छन्दस्के विनियोगः इति सु । इदं द्वयमपि न युक्तं ' गायत्रं छन्दः ' ' गायत्रच्छन्दः ' इत्यादेर्वा मन्त्रस्य मन्त्रांशस्य वा सोमभक्षमन्त्रेऽभावात् । गायत्रच्छन्दसः इति तु मन्त्रांशो विद्यते । सोपि न मन्त्रः । गायत्रच्छन्दस इत्यादिमन्त्रविनियोगः इति वि–ल–कु । गायत्रच्छन्दस इत्यादिमन्त्राणामनेकच्छन्दस्के विनियोगः इति म–सा–भाट्ट–बृ । गायत्रछन्दस इत्यादेर्नानाछन्दस्के विनियोगः इति भा । भक्षमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि विनियोगः इति अधिकरणादौ कौ । भक्षणमन्त्रस्य गायत्रान्यच्छन्दस्केऽपि विनियोगः इति अनुक्रमण्यां कौ । मन्त्रविशेषाणामनेकच्छन्दस्के विनियोगः इति शा । मन्त्रविशेषणामिति अतिशिथिलं, केषा इत्याकाङ्क्षाया अशान्तेः ।

सू० ४२ इदं सूत्रं सुधायां ११६२ पृष्ठे कृशाक्षरैर्मुद्रितमवतरणे ।

* एकादशाधिकरणोक्तोपसंहाराधिकरणं इति म–सा–भाट्ट–शा–बिन्दु–बृ–सु । इदं विंशमधिकरणं इति तैः स्वीकृतम् । वस्तुतस्तु इदं नाधिकरणान्तरं किंतु ३९ सूत्रोक्तपूर्वपक्षस्य निरासेन एकादशाधिकरणस्योपसंहारः कृतः ।

अस्मिन् पादे वस्तुतः अष्टादशैवाधिकरणानि । म-सा-दिभिः एकोनविंशतिः स्वीकृतानि । मण्डनेन एकोनविंशतिरेव । परंतु ४४ सूत्रे इन्द्रपीतपदं इन्द्रविशेषणं वा सवनविशेषणं वा इति संशयं गृहीत्वा सवनविशेषणं इति सिद्धान्तमुक्त्वा इदमेव ४४ सूत्रात्मकं एकोनविंशमधिकरणमिति स्वीकृतम् । म-सादिभिस्तु ४४ सूत्रात्मकं विंशमधिकरणं इति स्वीकृतं, परंतु संपादककल्पनैव सा, न मूलकाराणां, मण्डनोक्तिस्तु तदीया स्वीयैव न संपादकीया ।

अत्र एवं वस्तुस्थितिः । भाष्यगताष्टाविंशं सूत्रमारभ्य भाष्यगतचतुश्चत्वारिंशसूत्रान्तं एकमधिकरणम् । उक्तं च सुधायां 'मन्द्रादिर्मन्त्रो लिङ्गेन भक्षणे विनियुज्यते इत्युक्ते प्रसङ्गात् किं ऐन्द्रसोमभक्षणेष्वेव विनियुज्यते, सर्वेषु वा सोमभक्षणेषु इति चिन्तार्थं आपादसमाप्तेः एकमधिकरणम् ' इति । परंतु एतस्याधिकरणस्यैव मध्ये सप्त अन्तरागर्भिणी अधिकरणानि । तानि च अधि० १२ सू० ३० तः ३२, अधि० १३ सू० ३३–३४, अधि० १४ सू० ३५–३६, अधि० १५।३७, अधि० १६।३८, अधि० १७।४०–४१, अधि० १८।४२–४३ इति । ३९ सूत्रं, ४४ सूत्रं च एकादशाधिकरणस्यैव गुणसूत्रे न तु तयोरधिकर-

न्यायास्तु पादे दश वै नवापि ॥
अर्थोपदेशः सर्वेषां ग्रहणात् सर्वेषां त्वेकचत्वा-
रिंशत् ॥
॥ इति तृतीयाध्यायस्य द्वितीयः पादः समाप्तः॥
॥ अथ तृतीयाध्यायस्य तृतीयः पादः ॥
अधि० १.
१ श्रुतेर्जाताधिकारः स्यात् ।
२ वेदो वा प्रायदर्शनात् ।
३ लिङ्गाच्च ।
४ धर्मोपदेशाच्च नहि द्रव्येण संबन्धः ।
८ भाट्ट—क.
५ त्रयीविद्याऽऽख्या च तद्विदि । ४भाट्ट—क.
६ व्यतिक्रमे यथाश्रुतीति चेत् । ५ भाट्ट
—क.

णान्तरता । तथा च अन्तरागर्भिणी—अधिकरणानि सप्त स्वतन्त्राणि संकलनेन अष्टादशैवाधिकरणानि पादेऽस्मिन् । अत एव भाष्यं २९ सूत्रोत्तरं ' एवं स्थितं तावदपर्यवसितम् । तत एवं सति चिन्तान्तरं वर्तिष्यते ' इति । पुनः ३९ सूत्रादौ भाष्यं ' स्थितादुत्तरमुच्यते ' इति । पुनः ४० सूत्रादौ भाष्यं ' एवं स्थिते चिन्त्यते ' इति । ४४ सूत्रादौ च ' यदुक्तं अनैन्द्राणाममन्त्रकं भक्षणमिति तन्न ' इत्यादि । मण्डनाचार्येण तु चतुश्चत्वारिंशं सूत्रं अधिकरणान्तरपरत्वेनैव स्वीकृतं, तेन तन्मते १९अधिकरणानि भवन्ति । बिन्दुसंशोधकैस्तु ३९ सूत्रं सप्तदशाधिकरणत्वेन गृहीतम् । बिन्दुमूले तु ' इदानीं इन्द्रपीतस्य इत्यत्र प्रथमपक्षोऽभिधीयते ' इत्युपक्रम्य ' एवं स्थिते पुनः कृत्वाचिन्ता ' इत्युक्तं न तु अधिकरणान्तरं स्वीकृतम् । ४४ सूत्रं च विंशाधिकरणत्वेन बिन्दुसंशोधकैः स्वीकृतम् । बिन्दुमूले तु ' स्थितादुत्तरं ' इत्युक्तम् । एवं बिन्दुकारश्रीवैद्यनाथमतेन अत्र पादे अष्टादशैवाधिकरणानि । बिन्दुसंशोधकेन तु बिन्दुमूलमलक्षयित्वैव भाष्यमूलं, निर्णयसागरीयां शास्त्रदीपिकामपि चादृष्ट्वा अधिकरणद्वयमकारणमेव वर्धितम् । तदिदं भाट्टसंशोधकस्यान्धानुकरणं बिन्दुसंशोधकैः संपादितम् । सर्वथाऽपि भाट्ट—बिन्दुगतौ अधिकरणसंख्याविभागौ उपेक्षणीयौ । भाट्टदीपिकाकाराणां तु १८ एवाधिकरणानि संमतानि । ३९, ४४ सूत्रे च एकादशाधिकरणगुणसूत्रे एव तैः स्वीकृते । संशोधको मूलग्रन्थमदृष्ट्वैव अधिकरणद्वयं अकाण्डे वर्धयतीत्याश्चर्यम् ।

सू० ४४ ( १ ) षां त्वैक इति भाट्ट—शा—य—कु—बिन्दु । षां त्वेकमन्त्रत्वमै इति श्रृ—कुटि । ( २ ) भक्तपा इति शा । भक्तिपावनत्वात् इति वि । भक्तिपानत्वात् इत्यन्तमेव सूत्रं वृ ।

अधि० १ उच्चैष्ट्वादीना वेदधर्मता इति बिन्दु—ल । उच्चैस्त्वादीनां वेदधर्मता इति म—सा—वि—भाट्ट—शा—वृ—कु—सु—कौ । अत्र षत्वं प्लुत्वं च न कृतमिति विशेषः । उपक्रमः इति कु—कौ । अतिशिथिलमिदम् । प्रत्यधिकरणं कस्य चिद्विषयस्योपक्रमोस्त्येव । वेदोपक्रमः इति भा ।

सू० ३ ( १ ) लिङ्गदर्शनाच्च इति सूत्रमिदं उपक्रमपराक्रमे । भाष्यं तु ' लिङ्गमपि अस्मिन्नर्थे भवति ' इति ।

सू० ४ ( १ ) नहि इति पदं नास्ति क । ' धर्मोपदेशाच्च उच्चैस्त्वरूपधर्मविधानादपि द्रव्येण ऋङ्मन्त्रादिना स्वरस्य संबन्धः ' इति कस्तूरिरङ्गाचार्यव्याख्यानम् । ' ऋचामुच्चैस्त्वविधानेनैव साम्नामपि तत्प्राप्तेः पृथक् साम्नः स्वरविधानं स्यात् , तस्मान्न जाताधिकारः ' इति च । अथ भाष्ये तु ' नास्य ( उच्चैस्त्वस्य ) सामद्रव्येण सह संबन्धो वेदितव्यः ' ( किंतु वेदेन ) इति ।

सू० ५ ( १ ) त्रैविद्या इति उपक्रमपराक्रमः । उपक्रमपराक्रमे एव क्वचित् ' तद्विद्रा ' इति क्वचिच्च ' तद्वत् ' इति ' तद्विदि ' इत्यस्य स्थाने पाठः, परंतु हस्तदोषः सः । " त्रैविद्योऽयं ब्राह्मणः इति वेदत्रयाभिज्ञनिर्देशे वेदत्रयपरतया लोकानां प्रयोगेण " इति तत्रैव प्रागेव व्याख्यानात् ।

सू० ६ ( १ ) चेदन्तमुत्तरेणैकं क—य—कु । अर्थात् उत्तरसूत्रमारभ्य सूत्राङ्कः एकेन न्यूनः स्यात् ।

७ न सर्वस्मिन्निवेशात् । ६ भाट्ट–क–य कु–कौ.

८ वेदसंयोगान्न प्रकरणेन बाध्येत । ७भाट्ट –क–य–कु–कौ.

अधि० २.

९ गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः । ८ य–कु, २ बिन्दुः.

अधि० ३.

१० भूयस्त्वेनोभयश्रुति । ९ य–कु, ३बिन्दुः.

अधि० ४.

११ असंयुक्तं प्रकरणादितिकर्तव्यतोऽर्थित्वात् । १० य–कु, ४ बिन्दुः.

अधि० ५.

१२ क्रमश्च देशसामान्यात् । ११ य–कु, ५ बिन्दुः.

अधि० ६.

---

सू० ७ ( १ ) स्मिन्नविशेषात् इति कौटि। भाष्यवार्तिकाभ्यां तु पाठनिर्णयो न भवति । सुधायां तु ' यजुर्वेदविहिते च उपांशुत्वनिवेशात् ' इत्युक्तत्वात् निर्णयो भवति पाठस्य । अर्थतस्तु कौटिपाठोऽपि संगच्छते । सुधा तु न संमानयेत् तं पाठमित्यन्यदेतत् ।

सू० ८ ( १ ) वेदशब्दो नास्ति, संयोगात् इत्येव सूत्रारम्भः भाट्ट–वृ–कुटि । 'वेदसंयोगात् प्रकरणं बाध्येत ' इति कु। 'वेदसंयोगान्न प्रकरणेन बाध्येत इति वार्तिके पठितं ' इति गुणमुख्यव्यतिक्रमसूत्रे उत्तरस्मिन् कुतूहलम् । ( २ ) ' बाधेत इति वा पाठः ' इति वार्तिकम् । बाध्यते इति भाट्ट –क–वृ–कौ । अत्र चतुर्थसूत्रमारभ्य अष्टमसूत्रान्तसूत्रपञ्चकस्य भाष्यीयक्रमः, धर्मोप ४, त्रयी ५, व्यतिक्रमे ६, न सर्व ७, वेदसंयो ८ इति । अथ भाट्ट –क–वा–सुपाठे तु धर्मोप इति सूत्रं अष्टमत्वेन स्वीकृतं इति । तथा च त्रयी ४, व्यतिक्रमे ५, न सर्व ६, वेदसंयोगे ७, धर्मोप ८ इति क्रमः। अत्र सुधा 'धर्मोपदेशसूत्रं असंबद्धपदव्यवायापत्तेः स्वस्थानादुत्कृष्य ' इत्यादिः ।

अधि० २ आधाने गानस्योपांशुता इति भा–भाट्ट–कौभिन्नाः । गुणमुख्यव्यतिक्रमः इति भा–भाट्ट–कौ । इदं सूत्रादिमपदेन संपादितं नामधेयम् ।

अधि० ३ ज्योतिष्टोमस्य याजुर्वेदिकता इति म–वि–भाट्ट–वृ–ल–कु–सु । ज्योतिष्टोमस्य याजुर्वैदिकता इति सा–शा । अत्र उभयपदवृद्धिर्विशेषः। वेदभेदेन श्रूयमाणेषु कर्मोत्पत्तिनिर्णयः इति भा–कौ । वेदभेदेन श्रूयमाणेषु कर्मसु उत्पत्तिनिर्णयः इति तु युक्तम् ।

सू० १० ( १ ) श्रुतिः इति बिन्दु–चौपाठस्तु न युक्तः । ' अयं सूत्रार्थो यदुभयवेदश्रुति कर्म ' इति वार्तिकात् । उभयोः श्रुतिः यस्य तत् कर्म इति समासः ।

अधि० ४ प्रकरणं इति कौ । प्रकरणविनियोगः इति भा । परंतु प्रकरणस्य वा विनियोगः, प्रकरणेन वा अङ्गस्य विनियोगः इति संशयनिरासाभावात् प्रकरणकृतविनियोगः इति युक्तम् । प्रकरणस्य विनियोजकता इति भा–कौभिन्नाः ।

सू० ११ ( १ ) ताऽर्थत्वात् इति भाट्ट–क–वृ–कुटि । परंतु ' प्रधानस्य इतिकर्तव्यताकाङ्क्षासत्त्वात् ' इति व्याख्यातं सुबोधिनीवृत्तौ । ' आकाङ्क्षितेतिकर्तव्यताकत्वात् ' इति च व्याख्यातं कस्तूरिवृत्तौ । तेन मन्यामहे तत्रापि इतिकर्तव्यतार्थित्वात् इत्येव पाठो युक्त इति ।

अधि० ५ क्रमः इति कौ । क्रमविनियोगः इति भा । क्रमकृतविनियोग इति तु युक्तम् । क्रमस्य विनियोजकत्वं इति भा–वृ–कौभिन्नाः । स्थानस्य विनियोजकत्वं इति वृ ।

सू० १२ ( १ ) साम्यात् इति वृ–कुटि । उभयपाठे यद्यप्यर्थसाम्यं तथापि सामान्यात् इत्येव भाष्यादौ सर्वत्र च मीमांसावाङ्मये ।

अधि० ६ समाख्या इति कौ । समाख्याया विनियोजकता ति भा–कौभिन्नाः । समाख्याविनियोगः इति भा । समाख्याकृतविनियोग इति तु युक्तम् ।

सू० ७

**१३ आख्या चैवं तदर्थत्वात् ।** १२ य-कु, ६ बिन्दुः.

अधि० ७, ७ तः १२ वि-ल-कु-मण्डनः. *

**१४ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ।** १३ य-कु, ७ बिन्दुः.

अधि० ८, १३ वि-ल-कु-मण्डनः.

**१५ अहीनो वा प्रकरणाद् गौणः ।** १४ य-कु, ८ बिन्दुः.

**१६ असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ।** १५ य-कु.

अधि० ९, १४ वि-ल-कु-मण्डनः.

**१७ द्वित्वबहुत्वयुक्तं चाचोदनात् तस्य ।** १६ य-कु, ९ बिन्दुः.

---

**सू० १३** ( १ ) समाख्या इति बिन्दु-त्र-कुटि। भाष्ये ' समाख्या चैवं स्यात् ' इत्युक्तत्वात् ' यौगिकी या समाख्या सा ' इति वार्तिकात् उत्तरसूत्रे च समाख्याशब्दस्यैव पाठाच्च सूत्रेऽपि समाख्या इत्येव पठितुं युक्तम् । तथापि क्रमश्च देशसामान्यात् इत्यत्र क्रमशब्दे विद्यमानेऽपि उत्तरसूत्रे स्थानशब्दप्रयोगं दृष्ट्वा समाख्या चैवं इति पाठविपरिवर्तनात् विरता अभूम । तथापि समाख्याशब्दपाठ एव रोचतेऽस्मभ्यम् ।

**अधि०** ७ बलाबलं इति-भा-कौ । श्रुतिप्राबल्यं इति कु । श्रुतिलिङ्ग इति च कु । इदं द्वयं बलाबलाधिकरणान्तर्गतस्य प्रथमाधिकरणस्य नामधेयम् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याना पूर्वपूर्वबलीयस्त्वं इति ल। श्रुतिलिङ्गादीनां प्राबल्यदौर्बल्यं इति कौ । श्रुत्यादीनां पूर्वपूर्वप्राबल्यं इति बिन्दुः । श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वं इति म-सा -वि-भाट्ट-शा-वृ-सु ।

* अत्र वि-ल-कु-मण्डनेषु सप्तमं श्रुतिलिङ्गाधिकरणं, अष्टमं लिङ्गवाक्याधिकरणं, नवमं वाक्यप्रकरणाधिकरणं, दशमं प्रकरणस्थानाधिकरणं, एकादशं स्थानसमाख्याऽधिकरणं द्वादशं च बाधयोग्यताधिकरणं इति षट् अधिकरणानि पृथक् पृथक् कृतानि । भाष्यादावपि तानि सर्वाणि विद्यन्त एव । परंतु पृथगधिकरणत्वेन न गृहीतानि इत्येव ।

**अधि०** ( ८ वि )लिङ्गवाक्यं इति कु । वाक्यापेक्षया लिङ्गस्य प्राबल्यं इति वि-कु ।

**अधि०** (९ वि) वाक्यप्रकरणं इति कु । वाक्यस्य प्रकरणाद्यपेक्षया प्राबल्यं इति वि-कु ।

**अधि०** ( १० वि ) प्रकरणक्रम इति कु । क्रमस्य समाख्यापेक्षया प्राबल्यं इति वि-कु ।

**अधि०** (११ वि) क्रमसमाख्या इति कु । क्रमस्य समाख्यापेक्षया प्राबल्यं इति वि-कु ।

**अधि०** ( १२ वि ) बाधयोग्यता इति वि-कु ।

**अधि०** ८ अहीन इति भा-वि । द्वादशोपसत्ताया अहीनाङ्गता इति भा-विभिन्नाः ।

**सू० १६** ( १ )कृष्यते इति भा । इतरत्र तु सर्वत्र कृष्येत इत्येव । भाष्यमूलं ' अपकृष्येत द्वादशोपसत्ता ' इत्येव । वार्तिकश्लोके तु ' न सा प्रकरणात्तस्य तेनास्मादपकृष्यते ' इत्युक्तं तथापि छन्दोभङ्गनिरासार्थं तत् इति शक्यं वक्तुम् । वस्तुतस्तु लट्प्रयोग एव लिङ्प्रयोगात् सूत्रेषु आवश्यकः । परंतु भूयसा लिङ्प्रयोगा एवान्यत्र स्वीकृताः सर्वैः तदत्रैव कस्मात् लटः स्वीकारः सर्वत्रैव वा लिङ्प्रयोगेषु लटः प्रयोगाः स्वीकर्तव्याः । यदि तथा कर्तुं न पार्यते तदत्रापि लिङ् स्वीकर्तव्यो भाष्यमूलात् ।

**अधि०** ९ कुलायादौ प्रतिपदोत्कर्षः इति भा -भिन्नाः । नैमित्तिकप्रतिपदोत्कर्षः इति भा ।

**सू० १७** ( १ )द्विब इति शा । (२) क्तं वा चो इति भाट्टि-म-सा-वि-ल-चौ-बिन्दु-वा-सु । क्तं चो इति भा । क्तं वाऽचो इति भाट्ट-क-त्र । क्तं चाचो इति सुधामूल-शाटि-य-कु । अत्र सुधा ' तस्माज्ज्योतिष्टोमादपकृष्येत इति पूर्वाधिकरणसिद्धान्तसूत्रार्थानुकर्षणार्थत्वेन चकारव्याख्यार्थं द्वित्वेति भाष्यं व्याचष्टे ' इति ' तस्य ज्योतिष्टोमस्य यजमानद्वित्वबहुत्वाचोदनात् इत्येवं अचोदनातस्य इति सूत्रावयवव्याख्यार्थं नहीति भाष्यं

१८ पक्षेणार्थकृतस्येति चेत् । १७ य-कु.
१९ न प्रकृतेरेकसंयोगात् । १७ य-कु.
अधि० १०, १५ वि-ल-कु-मण्डनः.
२० जाघनी चैकदेशत्वात् । १८ य-कु, १० बिन्दुः.
२१ चोदना वाऽपूर्वत्वात् । १९ य-कु.
२२ एकदेश इति चेत् । २० य-कु.
२३ न प्रकृतौ शास्त्रनिष्पत्तेः । २० य-कु.
अधि० ११, १६ वि-ल-कु-मण्डनः.
२४ संतर्दनं प्रकृतौ कयणवदनर्थलोपात् स्यात् । २१ य-कु, ११ बिन्दुः.
२५ उत्कर्षो वा ग्रहणाद् विशेषस्य । २२य-कु.
२६ कर्तृतो वा विशेषस्य तन्निमित्तत्वात् । २३ य-कु.
२७ क्रतुतो वाऽर्थवादानुपपत्तेः स्यात् । २४ य-कु.
२८ संस्थासु च कर्तृवद् धारणाऽविशेषात् । २५ य-कु.

---

व्याचष्टे ' इति च । एतेन द्वित्वबहुत्वयुक्तं चाचोदनात्तस्य इत्येव सूत्रस्वरूपं सिध्यति । अत्रैव पाठे च य-कुपाठसंमतिः ।

सू० १८ ( १ ) चेदन्तमुत्तरेणैकं क-य-कु । तेनोत्तरसूत्रमारभ्य मूलसूत्राङ्कात् य-कुसूत्राङ्कः द्वाभ्यां न्यूनः स्यात् ।

अधि० १० जाघनी इति भा-कु । जाघन्या अनुत्कर्षः इति म-सा-वि-भाट्ट-शा-ल-कु-सु । जाघन्याः प्रकरणादनुत्कर्षः इति वृ । जाघन्याः प्रकरणादुत्कर्षः इति बिन्दुः विरुद्ध एव । अनुत्कर्ष एव सिद्धान्तः । बिन्दुमूले तु उत्कर्षानुत्कर्षयोर्नामापि नास्ति परंतु अर्थतः अनुत्कर्षसिद्धान्त एव स्थापितः ।

सू० २२ ( १ ) चेदन्तमुत्तरेणैकं क-य-कु । उत्तरसूत्रमारभ्य मूलसूत्राङ्कात् य-कुसूत्राङ्कः त्रिभिर्न्यूनः स्यात् ।

सू० २३ ( १ ) न प्रकृतेरशास्त्रनिष्पत्तेः इत्येव य-भिन्नसर्वपुस्तकेषु पाठः । भाष्ये तु ' न प्रकृतौ दर्शपूर्णमासयोः जाघनी शास्त्रेणोच्यते, एवं पशोर्निष्पन्नया जाघन्या पत्नीसंयाजा यष्टव्या इति ' इति । वार्तिकं सुधामूलं च न विरुद्धम् । भाष्यमूलानुसारेण च य-पाठमेव युक्तं मन्यामहे । इदं सूत्रं सुधायां १३०१ पृष्ठे कृशाक्षरैरवतरणे ।

अधि० ११ संतर्दनं इति भा-भाट्ट-कु । संतर्दनस्य संस्थानिवेशः इति म-सा-वि-भाट्ट-शा-वृ-ल-कु-सु । नीरसं शीर्षकमिदम् । संतर्दनस्य संस्थाविशेषे निवेशः इति बिन्दुः । केवलसंस्थाशब्दात् संस्थाविशेषशब्दः कंचिद् विशेषं कथयति । परंतु न तेन निर्वाहः ।

सू० २६ ( १ ) इदं सूत्रं सुधायां १३०४ पृष्ठे कृशाक्षरेषु । ( २ ) स्य सन्नि इति य-कु । विद्यमाननिमित्तकत्वात् इति कुतूहलम् । सुधाया तन्निमित्तत्वादित्येव । कस्तूरिवृत्तौ च सुधावत् । भाष्यवार्तिकयोस्तु अव्यक्तं तत् ।

सू० २८ ( १ ) संस्थाश्च कर्तृवद्धारणार्थाविशेषात् इति भा-म-सा-वि-भाट्ट-क-शा-ल-चौ-सु। संस्थाश्च कर्तृवद्धारणाविशेषात् इति वृ-सूत्रे,संस्थाश्च० णार्थावि इति वृ-मूले । संस्थासु०णार्थावि इति वा । अत्र भाष्यमूलं ' उच्यते । न संस्थासु दीर्घकालत्वेपि सोमे अर्थवाद उपपद्यते । तावानेव हि तत्र सोमः दश मुष्टीर्मिमीते इति वचनात् । तत्र धारणे न विशेषः कश्चित्'इति । तेन य-वत् पाठः सिद्ध्यति। अथ वार्तिकं ' संस्थास्वपि तु तावत्त्वात् सोमस्याभिषवः समः । कर्तृपक्षवदेवातो धृत्या इति वृथा स्तुतिः ॥ ' इति । तेनापि य-वत् पाठः सिद्ध्यति । सुधा तु ' अभिषूयमाणसोमधारणे संतर्दनप्रयोजने अर्थवादोक्ते कर्तृदैर्घ्यं इव संस्थास्वपि अविशेषेण अर्थवादायोगसाम्यात् दीर्घः कर्ता न संतर्दननिमित्तं तथा संस्था अपि इत्येवं सूत्रव्याख्यार्थं उच्यते इत्यादि भाष्यम् ' इति । तेन ' संस्थाश्च ' ' धारणाविशेषात् ' इत्यादिपाठः सिद्ध्यति । इदानीं उद्धृतपङ्क्तेः पुरस्तात् परस्ताच्च अनेकदा संस्थासु इति सप्तम्यन्तं पदमावर्तितं सुधायाम् । सर्व-

२९ उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात् । २६ य.

३० अविशेषात् स्तुतिर्व्यर्थेति चेत् । २७ य.

३१ स्यादनित्यत्वात् । २९ वा–सु, २७ य, २६ कु.

अधि० १२, १७ वि–ल–कु–मण्डनः.

३२ संख्यायुक्तं क्रतोः प्रकरणात् स्यात् । ३० वा, २८ य, २७ कु, १२ बिन्दुः.

३३ नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् । २९ य, २८ कु.

अधि० १३, १८ वि–ल–कु–मण्डनः.

३४ पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ । ३० य, २९ कु, १३बिन्दुः.

अधि० १४, १९ वि–ल–कु–मण्डनः.

३५ तत् सर्वार्थमविशेषात् । ३१ य, ३० कु, १४ बिन्दुः.

३६ चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् । ३२ य, ३१ कु.

३७ चरावपीति चेत् । ३३ य, ३२ कु.

३८ न पक्तिनामत्वात् । ३३ य, ३२ कु.

अधि० १५, २० वि–ल–कु–मण्डनः.

३९ एकस्मिन्नेकसंयोगात् । ३४ य, ३३ कु, १५ बिन्दुः.

४० धर्मविप्रतिषेधाच्च । ३५ य, ३४ कु.

---

थापि य–पाठ एव भाष्यवार्तिकाभ्या सिद्धो भवति । सुधा तु एकांशे विरुद्ध्येत । धारणाविशेषात् इत्यंशे तु अनुकूलैव । संस्थासु च कर्तृवद्धारणार्थाविशेषात् इति कु । संस्थासु कर्तृवद्धारणाविशेषात् इति कुटि ।

सू० २९ ( १ ) इदं उत्तरं चेति द्वे सूत्रे न स्तः कु । परंतु स्यादनित्यत्वात् इति सूत्रे " उक्थ्यादिषु वाऽर्थस्य विद्यमानत्वात्, अविशेषात् स्तुतिर्व्यर्थेतिचेत् स्यादनित्यत्वं इत्येवं सूत्रानुपूर्वी भाष्यपुस्तकेषु इदानींतनेषु दृश्यते " इति कुतूहलम् । इदमुत्तरं चेति द्वे सूत्रे सुधायां १३०६ पृष्ठे मुद्रिते कृशाक्षरैर्निरङ्के ।

सू० ३० ( १ ) चेदन्तमुत्तरेणैकं क–य । कुतूहलं तूक्तमेव एतत्सूत्रविषये ।

अधि० १२ प्रवर्ग्य इति भा–भाट्ट । प्रवर्ग्यनिषेधः इति वि–शा–ल–कु । अत्र शास्त्रदीपिकायां " तत्र संशयः किं ज्योतिष्टोमाङ्गं अयं प्रतिषेधः अथ प्रथमप्रयोगाङ्गं इति " इत्युपक्रान्तम् । तत्रोभयोरपि पक्षयोः प्रतिषेधः स्वीकृत एव । तथा च निरर्थकमिदं शीर्षकम् । प्रवर्ग्यनिषेधस्य प्रथमप्रयोगविषयता इति म–सा–भाट्ट–बिन्दु–वृ–सु ।

सू० ३३ ( १ ) लिङ्गं त इति चौ । अर्थस्तु संगच्छते परंतु लिङ्गस्य इति षष्ठी साधीयसी तन्निमित्तत्वात् इत्यत्रान्वेतुम् ।

अधि० १३ पेषणं इति भा । पौष्णपेषणस्य विकृतौ निवेशः इति बिन्दुः । पौष्णपेषणस्य विकृतौ विनियोगः इति भाबिन्दुभिन्नाः । विनियोगशब्दापेक्षया निवेशशब्दो वरम् । उत्कर्षशब्दस्तु साधीयान् ।

अधि० १४ पौष्णपेषणस्य चरावेव कर्तव्यता इति बिन्दुः । पौष्णपेषणस्य चरावेव निवेशः इति भाबिन्दुभिन्नाः । पेषणस्य चरुविनियोगः इति भा । चरौ विनियोगः इति तु युक्तम् । तत्रापि विनियोगशब्दात् निवेश शब्दो वरमित्युक्तमेव ।

सू० ३६ ( १ ) शौ स्यात् इति वि–शा । ' पशौ च न स्यात् ' इत्येव तु भाष्यम् । तेन वि–शापाठो न साधुरिव । किंवा ' पशौ प्रधानवैगुण्यं स्यात् ' इति वार्तिकपङ्क्त्यनुसारेण कथं चिद् व्याख्येयः । भाष्यपाठ एव तु युक्तः ।

सू० ३७ ( १ ) चेदन्तमुत्तरेणैकं क–य–कु । तेन उत्तरसूत्रमारभ्य सूत्राङ्कः पूर्वस्मादपि एकेन न्यूनः स्यात् ।

अधि १५ पेषणस्य पूषमात्रदेवत्यचरौ विनियोगः इति भा । पौष्णपेषणस्यैकदेवत्ये एव निवेशः इति बिन्दुः । पौष्णपेषणस्यैकदेवत्ये निवेशः इति भाबिन्दुभिन्नाः ।

सू० ४० (१) धर्मावि इति ल–पाठः अशुद्धः । ' द्विदेवत्ये विप्रतिषिध्येत धर्मः ' इति भाष्यात् ।

४१ अपिवा सद्वितीये स्याद् देवतानिमित्तत्वात् । ३६ य, ३५ कु.

४२ लिङ्गदर्शनाच्च । ३७ य, ३६ कु.

४३ वचनात् सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति । ३८ य, ३७ कु.

४४ एकस्मिन् वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् । ३९ य, ३८ कु.

४५ हेतुमात्रमदन्तत्वम् । ४० य, ३९ कु.

४६ वचनं परम् । ४१ य, ४० कु.

पादेऽस्मिन्विंशतिर्न्याया भाष्यकारेण वर्णिताः ॥*

॥ श्रुतेः क्रमश्च संतर्दनं तत्सर्ववचनमेकचत्वारिंशत् ॥

॥ इति तृतीयाध्यायस्य तृतीयः पादः समाप्तः॥

---

अथ तृतीयाध्यायस्य चतुर्थः पादः ।

अधि० १.

१ निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ।

२ अपदेशो वाऽर्थस्य विद्यमानत्वात् ।

३ विधिस्त्वपूर्ववत्त्वात् स्यात् ।

४ स प्रायात् कर्मधर्मः स्यात् ।

५ वाक्यशेषत्वात् ।

६ तत् प्रकरणे यत् तत्संयुक्तमविप्रतिषेधात् ।

७ तत्प्रधाने वा तुल्यवत् प्रसंख्यानादितरस्य तदर्थत्वात् ।

८ अर्थवादो वा प्रकरणात् ।

---

सू० ४३ ( १ ) वाद् द्विच इति म-सा-वि-शा-वृ-ल । भावात् इत्यत्र ४३ सूत्रं समाप्तं, द्विचरावपेषणं इत्यारभ्य उत्तरसूत्रान्तं ४४ सूत्रं इति चौ । तत्तु नैव स्वीकार्यम् । वृ-सूत्रे यद्यपि द्विचरौ इति मुद्रितं तथापि वृ-मूले चरौ इत्येव व्याख्यातं, द्विशब्दस्तु वृ-मूले न व्याख्यातो नैव च पठित इत्यन्यदेतत् । परंतु द्विचरौ इति नास्त्येव । वि-शा-ल-पाठस्तु तत्र व्याख्याऽभावात् परमुखनिरीक्षक एव । म-सा-पाठस्तु न विचार्य. । द्वयोः चरुः इति विग्रहं स्वीकृत्य द्विचरौ इत्ययमपि पाठो योजयितुं शक्य एव । तथापि द्विशब्दघटितः पाठः स्वारसिकः ।

* भा-म-सा इति त्रीणि भाष्यपुस्तकानि भिन्नसंशोधकैर्मुद्रितानि त्रिष्वपि च बलाबलाधिकरणे एकस्यैवाधिकरणस्य स्वीकारात् तृतीयस्य तृतीयेऽस्मिन् पादे १५ एव अधिकरणानि संपद्यन्ते । मण्डनाचार्यास्तु भाष्यकारेण विंशतिर्न्याया वर्णिता इति प्रतिपादयन्ति । तथाच मण्डनमते बलाबलाधिकरणे षडेवाधिकरणानि स्वीकार्याणि इति सुस्पष्टम् । मण्डनाचार्यमतं तु नितरां प्रमाणम् ।

अधि० १ निवीतं इति भा-भाट्ट-कु । निवीतस्यार्थवादत्वं इति भा-भाट्ट-कुभिन्नाः ।

सू० १ ( १ ) तत्प्रमाणत्वात् इति य-पाठः भाष्यान्तरगतः स्यात् । शाबरे तु तत्प्रधानत्वात् इत्येव पाठः ।

सू० ३ (१) विधिस्तु पूर्ववत्त्वात् इति मटि-पाठो न ग्राह्यः । विधिस्त्वपूर्वत्वात् इति म-सा-वि-भाट्ट-क-शा-वृ-ल-कुटिपाठः अर्थतो युज्यते भाष्यारूढोऽपि कर्तुं शक्यः ' विधिरेव भवेत् , पूर्ववाननुवादो भवति अयं तु अपूर्वः यत् नियमेन निव्यातव्यमिति ' इति हि भाष्यम् । य-कु-पाठस्तु भा-वदेव ।

सू०४ ( १ ) मै ध इति सा । छित्त्वा मुद्रणमिदमशुद्धम् ।

सू० ५ ( १ ) वाक्यस्य शेषत्वात् इति भाट्ट-क-वृ-वा-सु । वाक्यशेषवत्त्वात् इति कु । 'निवीतं मनुष्याणामित्यस्य वाक्यशेषः समाख्या आध्वर्यवमिति ' इति भाष्यात्तु वाक्यशेषत्वात् इत्येव पाठः शुद्धः ।

सू० ६ ( १ ) तत् इति पृथक् पदं, तत्रेत्यर्थः । ( २ ) क्तं वि इति य ।

सू० ८ ( १ ) वाऽप्र इति भाट्ट-क-वृ-कु-पाठान्तरम् ।

९ विधिना चैकवाक्यत्वात् ।

[अधि० २ वि–भाट्ट–क–शा–ल–कु–बिन्दुः.

* उपवीतं लिङ्गदर्शनात् सर्वधर्मः स्यात् । वा, १० वि–भाट्ट–क–शा–ल –चौ–कु–सु, २ बिन्दुः.

+ न वा प्रकरणात् तस्य दर्शनम् । वा, ११ वि–भाट्ट–क–शा–ल–चौ कु–सु.

अधि० ३ वि–भाट्ट–क–शा–ल–कु–बिन्दुः.

विधिर्वा स्यादपूर्वत्वात् । वा, १२ वि –भाट्ट–क–शा–ल–चौ–कु–सु,३बिन्दुः.

अधि० ४वि–भाट्ट–क–शा–ल–कु–बिन्दुः.

× उदक्त्वं चापूर्वत्वात् । वा, १३ वि –भाट्ट–क–शा–ल–चौ–कु–सु,४बिन्दुः.

सतो वा लिङ्गदर्शनम् । वा, १४ वि –भाट्ट–क–शा–ल–चौ –कु–सु.

अधि० ५ वि–भाट्ट–क–शा–ल–कु–बिन्दुः.

विधिस्तु धारणेऽपूर्वत्वात् । वा, १५वि –भाट्ट–क–शा–ल–चौ–कु–सु,५बिन्दुः.]

अधि० २ भा–म–सा–वृ–सु–मण्डनः, ६वि –भाट्ट–क–शा–ल–कु–बिन्दुः.

१० दिग्विभागश्च तद्वत् संबन्धस्यार्थहेतुत्वात् । १६वि–भाट्ट–क–शा–ल–चौ–कु–सु,६ बिन्दुः.

---

* १ अत्र वार्तिके 'अतः षट् सूत्राणि भाष्यकारेण न लिखितानि । केचिदाहुर्विस्मृतानि । लिखितो ग्रन्थः प्रलीन इत्यपरे । फल्गुत्वादुपेक्षितानि इत्यन्ये । अनार्षेयत्वादित्यपरे । वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्यातानि' इति । इमानि षट् सूत्राणि य–पुस्तके न सन्ति ।

+ वाऽप्र इति कु–पाठान्तरम् ।

अधि० (२ वि) उपवीतस्य दर्शपूर्णमासयोर्निवेशः इति बिन्दुः । उपवीतस्य दर्शपूर्णमासाङ्गता इति वार्तिक–वि–शा–ल । उपव्ययत इति वाक्यविहितोपवीतस्य दर्शपूर्णमासमात्राङ्गता इति भाट्ट–कु ।

अधि०(३ वि) उपवीतस्य विधित्वं इति वार्तिक–वि–शा–बिन्दु–ल । अयि भोः संपादक । विधित्वं उपवीतस्य कथं सेत्स्यति । लिङ्लोडादेर्हि विधित्वम् । इष्टसाधनत्वं विधिः, नियोगो विधिः । तथैव किं उपवीतं विधिरिति तत्रभवतां नूतन एव पक्षः ? उपव्ययते इत्यस्य विधित्वं इति भाट्ट–कु ।

अधि०(४ वि) उपवीतोदगग्रत्वयोरनुवादता इति वार्तिक–वि–शा–ल । पुरोदञ्चः इत्यस्यानुवादता इति बिन्दुः । ये पुरोदञ्चो दर्भा इत्यस्यानुवादता इति भाट्ट–कु ।

× इदमन्तरागर्भिणी अधिकरणं शा–भाट्ट ।

अधि० (५ वि) उपरि हि देवेभ्यो धारयतीत्यस्य विधित्वं इति भाट्ट–कु । यज्ञोपवीती हि इत्यस्यानुवादता इति बिन्दुः । संपादकस्य उत्स्वप्नायितमिदम् । 'उपरि हि देवेभ्यो धारयति' इत्यस्य वाक्यस्य विचारोऽस्मिन्नधिकरणे । समिद्धारणस्य विधिता इति वार्तिक–वि–शा–ल । अयुक्तमिदं शीर्षकम् । धारणस्य विधेयत्वेऽपि विधित्वाभावात् । ननु विधिर्विधाने दैवेपि इत्यमरात् विधिशब्दस्य विधानार्थकत्वे शीर्षकस्य नायुक्तता इति चेत् अमरकोषस्य साधीयसी उपस्थितिस्तत्रभवतः ।

अत्र भाष्ये षट्सूत्र्या अपठितत्वात् तद्घटितानि चत्वार्यधिकरणानि भाष्ये न सन्ति । विस्तरादौ सन्तीति अधिकरणाङ्कवृद्धिर्विस्तरादिमतेन ।

अधि० २ दिग्विभागः इति भा । दिग्विभागस्यानुवादता इति म–सा–भाट्ट–वृ–कु–सु । दिग्विभागस्यार्थवादता इति वि–शा–बिन्दु–ल ।

सू० १० (१) तद्वत् इत्यन्तमेव सूत्रं, संबन्धस्य इत्याद्यंशो नास्ति बिन्दु–कु–सु । भा–वत् पाठस्तु कु–पाठान्तरम् ।

अधि० ३ भा-म-सा-वृ-मण्डनः, ७ वि-भाट्ट-क-शा-ल-कु-बिन्दुः.

११ परुषिदितपूर्णघृतविदग्धं च तद्वत् । १७ वि-भाट्ट-क-शा-ल-चौ-कु-सु, ७ बिन्दुः.

अधि० ४ भा-म-सा-वृ-मण्डनः, ८ वि-भाट्ट-क-शा-ल-कु-बिन्दुः, ३ सु.

१२ अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् । १८वि-भाट्ट-क-शा-ल-चौ-कु-सु, ८ बिन्दुः.

१३ विधिर्वा संयोगान्तरात् । १९ वि-भाट्ट-क-शा-ल-चौ-कु-सु.

अधि० ५ भा-म-सा-वृ-मण्डनः, ९ वि-भाट्ट-क-शा-ल-कु-बिन्दुः,४ सु.

१४ अहीनवत् पुरुषस्तदर्थत्वात् । २० वि-भाट्ट-क-शा-ल-चौ कु-वा-सु,९बिन्दुः.

१५ प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् । २१ वि-भाट्ट-क-शा-ल-चौ-कु-वा-सु.

१६ व्यपदेशादपकृष्येत । २२ वि-भाट्ट-क-शा-ल-चौ-कु-वा-सु.

अधि० ६ भा-म-सा-वृ-मण्डनः, १० वि-भाट्ट-क-शा-ल-कु-बिन्दुः, ५ सु.

१७ शंयौ च सर्वपरिदानात् । २३ वि-भाट्ट-क-शा-ल-चौ-कु-वा-सु, १० बिन्दुः.

अधि० ७ भा-म-सा-वृ-मण्डनः, ११ वि-भाट्ट-क-शा-ल-कु-बिन्दुः.

---

अधि० ३ परुषिदितं इति भा । परुषिदितादीनामनुवादता इति भा-भिन्नाः ।

सू० ११ (१) दिनपू इति य-कु । सुधायां तु १३८३ पृष्ठे परुषिदितपूर्णघृतं च तद्वत् इति विदग्धपदरहितमेव सूत्रं कृशाक्षरैर्मुद्रितं, परंतु पुरस्तात् परस्ताच्च विदग्धशब्दोऽपि व्याख्यात एव ।

अधि० ४ अनृतवदननिषेधस्य क्रतुधर्मता इति भा-बिन्दुभिन्नाः । कर्त्रधिकरणं इति भा-कु । नानृतमित्यस्य क्रतुधर्मता इति बिन्दुः । नानृतं वदेत् इति श्रुतिवाक्यमिदं, तन्न क्रतुधर्मः , किंतु तेन वाक्येन कृतो योऽनृतवदननिषेधः स क्रतुधर्मः । ननु अनृतवदननिषेधस्य क्रतुधर्मत्वात् तद्बोधकवाक्यमपि क्रतुधर्म एवेति । सत्यं महापण्डित एव तत्रभवान् । परुषिदिताधिकरणं तृतीयं सत् सुधायां अधिकरणत्वेन नैव निर्दिष्टम् । सूत्रं तु केवलमुपन्यस्तं, परंतु अधिकरणाङ्को न निवेशितः । तृतीयोङ्कस्तु अकर्म इति चतुर्थे एवाधिकरणे निवेशितः । तथा च इत आरभ्य सुधायां अधिकरणाङ्कः एकेन न्यून एव ।

अधि० ५ जञ्जभ्यमान इति भा-कु । जञ्जभ्यमानधर्माणां प्रकरणे निवेशः इति भा-भिन्नाः सर्वे ।

सू० १४ (१) वत् पुरुषधर्मस्त इति भाट्ट-क-शा-बिन्दु-वृ-य-कु । वत् पुरु इति भा-सूत्रे । भा-मूले तु अहीनवत् पुरुषस्तदर्थत्वात् इत्येव । यद्यपि दीर्घादिरपि शब्दो नाशुद्धः तथापि भाष्यमूले इतरेषु च सर्वग्रन्थेषु पुरुषः इति ह्रस्वादेरेव स्वीकृतत्वात् भा-सूत्रेऽपि तादृश एव स्वीकर्तुं युक्तः ।

सू० १५ (१) रणावि इति वृ । (२) स्कारा द्र इति य । परंतु लिखिते अनभ्यस्ते सति हस्तदोषस्यापि संभवात् बहुवचनानपेक्षत्वाच्च य-पाठोऽत्र न ग्राह्य इति भाति ।

सू० १६ (३) कृष्यते इति वृ-चौ ।

अधि०६ अपगोरणादीनां पुमर्थत्वं इति वृ-सु । अवगोरणस्य पुमर्थता इति बिन्दुः । अवगोरणादीनां पुमर्थता इति म-सा-वि-भाट्ट-शा-ल । शंयुः इति भाट्ट । सर्वपरिदानं इति भा ।

सू० १७ (१) यौ स इति य-कु ।

अधि० ७ मलवद्वासःसंवादनिषेधः इति वि-शा-ल । मलवद्वासःसंवादनिषेधस्य पुरुषधर्मता इति म-सा-भाट्ट-कु । मलवद्वाससा न संवदेदित्यस्य पुमर्थता इति बिन्दुः । मलवद्वाससा इत्यादिः श्रुतिरियं सा कथं पुमर्था वा क्रत्वर्था वा स्यात् । तत्प्रति-

१८ प्रागपरोधान्मलवद्वाससः । २४ वि-भाट्ट-क-शा-ल-चौ-कु-वा-सु, ११ बिन्दुः.

१९ अन्नप्रतिषेधाच्च । २५ वि-भाट्ट-क-शा-ल-चौ-कु-वा, २४ सु.

अधि० ८ भा-म-सा-वृ-मण्डनः, १२ वि-भाट्ट-क-शा-ल-कु-बिन्दुः, ६सु.

२० अप्रकरणे तु तद्धर्मस्ततो विशेषात् । २६वि-भाट्ट-क-शा-ल-चौ-कु-वा, २५ सु, १२ बिन्दुः.

२१ अद्रव्यत्वात्तु शेषः स्यात् । २७ वि-भाट्ट-क-शा-ल-चौ-कु-वा, २६ सु.

२२ वेदसंयोगात् । २८ वि-भाट्ट-क-शा-ल-चौ-कु-वा,२७ सु.

२३ द्रव्यसंयोगाच्च । २९ वि-भाट्ट-क-शा-ल-चौ-कु-वा, २८ सु.

---

पादितः संवादनिषेधस्तु पुमर्थः स्यात् । मलवद्वाससा संवादनिषेधस्य पुमर्थत्वं इति वृ । संवादः इति भा । पारिभाषिकमिदं नामधेयम् ।

सू० १८ ( १ ) गवरो इति शा-वृ । प्रागुप इति चौ ।

सू० १९ ( १ ) धात् इत्येव, चशब्दो नास्ति वृ । सुधायां पूर्वसूत्रे २४ अङ्कं निवेश्य पुनरत्र सूत्रेऽपि २४ इत्येवाङ्कं निवेश्य अग्रेऽपि एकैकवृध्यैव अङ्का निवेशिताः । वा-सुपुस्तकयोः किल परस्परं च भाष्येण च सार्कं भूयस्येव अङ्कविप्रतिपत्तिर्विनैव कारणम् ।

अधि० ८ सुवर्णधारणस्य पुमर्थता इति बिन्दुः । सुवर्णधारणादीनां पुमर्थत्वं इति वृ-सु । सुवर्णधारणादीनां पुरुषधर्मता इति म-सा-वि-भाट्ट-शा-ल-कु । हिरण्यधारणं इति भा ।

सू० २० ( १ ) तोऽवि इति कु-पाठान्तरम् ।

सू० २१ ( १ ) अद्रव्यदेवतत्वात् इति य । अत्र भाष्यमूलं 'अग्निहोत्रादीनां शेषः स्यात् । कस्मात् । अद्रव्यत्वात् । नात्र द्रव्यदेवतं श्रूयते' इति । विचारणीयमेतत् स्थानम् । अत्र वार्तिकं 'यत्त्वत्र भाष्यकारेण देवताग्रहणं कृतम् । तदुत्सूत्रमयुक्तं च प्रधानं हि जपाद्यपि ॥ ' इति । अत्र कुतूहलं 'क्वचित्तु भाष्यपुस्तकेषु अद्रव्यदेवतत्वात् इति सूत्रपाठोऽपि दृश्यते ' इति । यथा अद्रव्यदेवतत्वात् इति भाष्यपाठः तथा सूत्रपाठोपि इति कुतूहलार्थः । अत्रैवं प्रश्नः समुद्भवति यत् ' कस्मात् । अद्रव्यदेवतत्वात् । नात्र द्रव्यदेवतं श्रूयते ' इत्येव भाष्यपाठः । अथवा, कस्मात् । अद्रव्यत्वात् । नात्र द्रव्यदेवतं श्रूयते' इत्येव भा-पुस्तके यथामुद्रणं भाष्यपाठः इति । तत्र भा-पुस्तके यथामुद्रणं भाष्यपाठः स्यात् इति तावत् भाति । अद्रव्यत्वात् इति सौत्रपदस्य ' अद्रव्यदेवतत्वात् ' इति यद् व्याख्यानभाष्यं तत्र वार्तिककारो ब्रूते यत्त्वत्र भाष्यकारेण इत्यादि । देवताग्रहणं कथमुत्सूत्रं इत्याकाङ्क्षायां ' नहि अद्रव्यत्वादित्यस्य द्रव्यदेवतासंबन्धाभावात् इत्यर्थपर्यवसानं कथंचिदक्षरपदवीमारोहति ' इति कुतूहलमाह । परंतु यथामुद्रणं भाष्यपाठ इत्यस्मिन् पक्षे ' सूत्रपाठोऽपि दृश्यते ' इति कुतूहलोक्तिः य-पुस्तकपाठश्च न संगच्छेते । वयं तु ' कस्मात् । अद्रव्यदेवतत्वात् नात्र द्रव्यदेवतं श्रूयते ' इत्येव भाष्यपाठः स्वीकार्य इति मन्यामहे । भाष्यस्वारस्यं हि अत्रैवानुकूलं न द्वितीयपाठे । य-पुस्तकपाठश्च ' सूत्रपाठोऽपि दृश्यते' इति कुतूहलं चात्रैवानुकूलम् । वार्तिकमपि भाष्यस्थविवरणमात्रपरत्वापेक्षया सौत्रहेतुप्रतिपादकभाष्यस्थसंग्रहवाक्यपरत्वेन योजितं सत् संगच्छतेतराम् । परंतु ' तर्हि कथं देवतापदस्य उत्सूत्रत्वोक्तिसंगतिः ' इति शङ्का नापगच्छति । तत्र वार्तिककारमतेन ' अद्रव्यत्वात्तु० ' इत्येव सूत्रपाठो न ' अद्रव्यदेवतत्वात्तु ' इति स्वीकारेण साऽपि शङ्का निरस्ता भविष्यतीति मन्यामहे । तथा च वार्तिकमतेन अद्रव्यत्वात् इति सूत्रपाठः, भाष्यमतेन अद्रव्यदेवतत्वात् इति सूत्रपाठः । स च य-पुस्तकसंमतः । कुतूहले पाठभेदोक्तिश्चानुकूलैव ।

सू० २३ ( १ ) द्रव्यपरत्वाच्च इति वृ-य-कु-वा-सु ।

२४ स्याद् वा[1]ऽस्य संयोगवत् फलेन संबन्धस्तस्मात् कर्मै[2]तिशायनः । ३० वि–भाट्ट–क–शा–ल–चौ–कु–वा, २९ सु.

अधि० ९ भा–म–सा–वृ–मण्डनः, १३ वि–भाट्ट–क–शा–ल–कु–बिन्दुः, ७ सु.

२५ शेषोऽ[1]प्रकरणेऽविशेषात सर्वकर्मणाम् । ३१ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३० सु, १३ बिन्दुः.

२६ होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात्। ३२ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३१ सु.

२७ शेष[1]श्च समाख्यानात् । ३३ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३२ सु.

अधि० १० भा–म–सा–वृ–मण्डनः, १४ वि–भाट्ट–क–शा–ल–कु–बिन्दुः, ८ सु.

२८ दोषात् त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके[1] न दोषः स्यात् । ३४ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३३ सु, १४ बिन्दुः.

२९ अर्थवादो वाऽनुप[1]पातात् तस्मा[2]द्यज्ञे[3] प्रतीयेत । ३५ वि–भाट्ट–क–शा–ल–चौ–कु–वा.

---

सू० २४ ( १ ) वा सं इति भाट्ट–क–वृ–य–कु–सु । तत्र क–वृ–सु एतेषु व्याख्यानेषु अस्येति पदं न व्याख्यातम् । तत्सूत्रपाठेऽपि अस्येति पदं नास्त्येव । भाष्यमूले ' स्याद्वा फलेन एवंजातीयकानां संबन्धः ' इति पङ्क्तौ एवंजातयिकानां इति पदेन सौत्रं अस्य इति पदं व्याख्यातं इति चेन्न । सुधायां तथायोजनाया अभावात् । तस्मात् सूत्रे अस्य इति पदं नास्तीति सिध्यति । ( २ ) कर्मेति इति म–सा–पाठस्तु न शुद्धः ।

अधि० ९ जयादीना वैदिककर्माङ्गत्वं इति भाट्ट–बिन्दु–कुभिन्नाः । जयादीनां वैदिकहोमाङ्गता इति भाट्ट–कु ।जयाहोमादीनां वैदिककर्माङ्गता इति बिन्दुः । जया इति स्त्रीलिङ्गं शब्दं मन्यन्ते बिन्दु–संपादकाः । परंतु ' जयान् जुहोति ' इति भाष्यायुदाहृतश्रुत्यनुसारेण पुंलिङ्गोऽयं शब्द इति ज्ञेयम् ।

सू० २५ ( १ ) शेषः प्र इति वा–सुपाठः सुधामूलविरोधादुपेक्ष्यः । ' योप्रकरणाधीतः ' इति हि सुधामूलम् । शेषाः प्र इति वि–ल–चौ । 'किं तावत् प्राप्तम् । सर्वकर्मणां शेषाः विशेषानभिधानात् ' इति भाष्यमूलम् । वार्तिकं तु ' सर्वकर्मणां शेषो जयादिः ' इति । शेषश्च समाख्यानात् इति एकव्यवहितोत्तरसूत्रेऽपि एकवचनमेव शेषशब्दस्य । भाष्ये बहुवचनात् बहुवचनान्तपाठोऽपि प्रामाणिक इति मन्तुं युक्तं, वार्तिकसुधाभ्यां उत्तरसूत्राच्च एकवचनपाठस्तु स्वीकारार्ह एवेति पाठभेद एवात्र ।

सू० २७ ( १ ) समाख्यानाच्च इत्याकारकमेव सूत्रं क। अयमेव पाठो युक्तो भाति । एतदधिकरणीयप्रथमसूत्रे शेषशब्दस्य पाठात् पुनर्गुणसूत्रे तस्यैव पाठस्यायुक्तत्वात् । ' इतश्च पश्यामो वैदिकानां शेषभूता इति ' इति प्रकृतसूत्रीयोपक्रमभाष्यं तु चशब्दव्याख्यानपरत्वात् अस्मिन्सूत्रे पुनः शेषशब्दपाठे प्रमाणं भवितुं नार्हत्येव । एतेन वार्तिकमपि व्याख्यातम् ।

अधि० १० अश्वप्रतिग्रहेष्टिः इति भाट्ट–कु । वारुणेष्टेर्वैदिकाश्वदाननिमित्तता इति भा । वैदिकाश्वप्रतिग्रहे इष्टिकर्तव्यता इति म–सा–वि–भाट्ट–शा–वृ–ल । वैदिकाश्वप्रतिग्रहे इष्टेः कर्तव्यता इति बिन्दु–सु ।

सू० २८ ( १ ) केदो इति य–पुस्तके पाठो वर्तते । तत्र केऽदो इति अवग्रहो वा स्वीकार्यः, लेखकप्रमादात् नशब्दो भ्रष्ट इति वा स्वीकार्यं स्यात् गत्यभावात् ।

सू० २९ ( १ ) पघातात् इति मटि । भाष्ये तु ' तस्मान्नाश्वप्रतिग्रहात् जलोदरोपपातः ' इत्येव । (२) स्माद्यागे प्र इति य । स्माद्याज्ञे इति कु । ( ३ ) ज्ञे स्यात् इति क । ( ४ ) प्रतीयते इति उपक्रमपराक्रमः ।

S 1203

अधि० ११ भा–म–सा–वृ–मण्डनः, १५ वि–भाट्ट–क–शा–ल–कु–बिन्दुः. ९ सु.

३० अचोदितं च कर्म भेदात् । ३६ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३४ सु, १५ बिन्दुः.

३१ सा लिङ्गादार्त्विजे स्यात् । ३७ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३५ सु.

अधि० १२ भा–म–सा–वृ–मण्डनः, १६ वि–भाट्ट–क–शा–ल–कु–बिन्दुः.

३२ पानव्यापच्च तद्वत् । ३८ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३६ सु, १६ बिन्दुः.

३३ दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न स्यात् । ३९ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ३७ सु.

---

अधि० ११ अश्वदातुर्वारुणीष्टिः इति ल । अश्वप्रतिग्रहेष्टिः इति भा–कु । कुतूहले पूर्वे अस्मिंश्चाधिकरणे अश्वप्रतिग्रहेष्टिः इति एकमेव नामधेयं योजितं तन्न युक्तम् । दातुर्वारुणीष्टिः इति म–सा–वि–भाट्ट–शा । दातुर्वारुणेष्टिः इति बिन्दु–वृ–कु–सु । अन्तिमयोरुभयोः शीर्षकयोः केवलं ‘दातुः’ इत्येवोक्तं तन्न युक्तं गवादिदातुरपि वारुणेष्टिकर्तव्यताभ्रमप्रसङ्गात् ।

सू० ३० ( १ ) तं तु क इति वा । वार्तिकमूलं तु ‘तुशब्दस्य स्थाने चशब्दः’ इति । तेन सूत्रे चशब्द एव वार्तिकमतेन । तं क इति वि–क । ( २ ) भाष्यादिसर्वग्रन्थेषु कर्मभेदात् इत्येकपद्येनैव सूत्रे मुद्रितं भाष्यमूले च । परं तु भेदेनैवात्र मुद्रणं कर्तव्यम् । अत्र वार्तिकम् ‘तेन दानप्रतिग्रहकर्मणोः भेदात् प्रतिग्रहसंबन्धित्वेन श्रुतमेतत् कर्म दातुरचोदितं इति मन्यामहे’ इति, ‘तत्कर्म च इष्टेर्निमित्तेनाचोदितमिति सूत्रार्थः’ इति च । अनेन कर्म इति पदं पृथगेव सिध्यति । अत्र सुधा ‘प्रतिग्रहनिमित्तकत्वेन श्रुतमिष्ट्याख्यं कर्म दातुरचोदितं’ इति । तेनापि कर्मपदस्य पार्थक्यमेव सिध्यति । अत्र कस्तूरिवृत्तिः ‘कर्मणोः ददातिप्रतिगृह्णात्यर्थयोः भेदात् प्रकृते प्रतिगृह्णीयादिति श्रवणेन दाने निमित्ते अचोदितं अविहितमिदं कर्म अतः प्रतिग्रहीतुरिष्टिः’ इति । अत्र वार्तिकवदुभयथाभानेऽपि पदभेदपक्षः स्पष्ट एव । सुबोधिनी तु शब्दशः एव कस्तूरिवत् । अत्र कुतूहलं ‘कर्मभेदादिति ल्यब्लोपे पञ्चमी । लौकिकं वैदिकमिति विशेषमुपादाय इदमिष्टिकर्म अचोदितं न विहितम्, किंतु अविशेषेणाश्वदानमात्रे विहितम्’ इति । अत्र उत्तरार्धेन कर्म इति पदभेदः सिध्यति इति स्पष्टम् । तेन ‘कर्मभेदात्’ इत्युपक्रमस्थं पदमशुद्धमिति ‘भेदात् इति ल्यब्लोपे’ इत्येवावश्यकम् । ‘विशेषमुपादाय’ इति ल्यब्लोपे पञ्चमी व्याख्याता । न च तत्र कर्मशब्दोनूदितः । बिन्दौ तु सूत्रे कर्मशब्दो भित्त्वैव मुद्रितः । टिप्पणी च ‘अविहितमिदं इष्टिरूपं कर्म प्रतिग्रहीतुरेव’ इति । सर्वेभ्य एव तु मूलेभ्यः कर्मपदं पृथगेवेति सिद्धं इति निश्चयोऽस्माकम् । ऐकपद्येन मुद्रणं तु सर्वत्रैवाशुद्धम् ।

अधि० १२ वमनं इति भा । वैदिकपानव्यापत् इति वि–शा । वैदिकपानव्यापदि सौमेन्द्रचरुविधानं इति म–सा–भाट्ट–क–वृ–सु । वैदिकपानव्यापदि सौमेन्द्रचरुविधिः इति बिन्दुः । वैदिकसोमपानव्यापत् इति ल ।

सू० ३३ ( १ ) न दोषः स्यात् इति य–कु–भिन्नाः सर्वे । यदि प्रथमस्य स्याच्छब्दस्य कर्ता सोमेन्द्रचरुः, ततो द्वितीयस्य स्याच्छब्दस्यापि स एव कर्ता भवितुमर्हति । वैदिके चरुः स्यात्, लौकिके दोषो न स्यात् इति तु नितान्तं वैपरीत्यमापद्यते । दोषात् वैदिके स्यात् । किं स्यात् ? अर्थात् लौकिके न स्यात् । किं न स्यात् ? उभयत्रापि ‘सोमेन्द्रचरुः’ इत्येकमेवोत्तरम् । प्रथमान्तदोषपदाभावपाठे स्वाकृतेऽपि न भाष्यवार्तिकादिविरोधः कश्चित् ।

अधि० १३ भा-म-सा-वृ-मण्डनः, १७ वि-भाट्ट-क-शा-ल-कु-बिन्दुः, १०सु.

३४ तत् सर्वत्राविशेषात् । ४० वि-भाट्ट-क-शा-ल-चौ-कु-वा, ३८ सु, १७ बिन्दुः.

३५ स्वामिनो वा तदर्थत्वात् । ४१ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ३९ सु.

३६ लिङ्गदर्शनाच्च । ४२ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ४० सु.

अधि० १४ भा-म-सा-वृ-मन्डनः, १८ वि-भाट्ट-क-शा-ल-कु-बिन्दुः ११ सु.

३७ सर्वप्रदानं हविषस्तदर्थत्वात् । ४३ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ४१ सु, १८ बिन्दुः.

३८ निरवदानात्तु शेषः स्यात् । ४४ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ४२ सु.

३९ उपायो वा तदर्थत्वात् । ४५ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ४३ सु.

४० कृतत्वात्तु कर्मणः सकृत् स्याद् द्रव्यस्य गुणभूतत्वात् । ४६ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ४४ सु.

४१ शेषदर्शनाच्च । ४७ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ४५ सु.

अधि० १५ भा-म-सा-मण्डनः, १९ वि-भाट्ट-क-शा-ल-कु-बिन्दुः, १२ सु.

४२ अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात् । ४८ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ४६ सु, १९ बिन्दुः.

---

**अधि० १३** अत्र सुधासंशोधकैः अधिकरणाङ्कः १० इत्येव मुद्रितः स तु पूर्वरीत्या युक्त एव । परंतु भाष्यीयाधिकरणाङ्कविरोधः पूर्ववत् । यजमानसोमवमने इष्टिविधानं इति भा । सौमेन्द्रचरोर्यजमानपानविषयता इति बिन्दुः । सौमेन्द्रचरोर्यजमानपानव्यापद्विषयता इति भा-बिन्दु-भिन्नाः ।

**अधि० १४** आग्नेयाष्टाकपालचरोर्व्यवदामात्रस्य होतव्यता इति भा-बिन्दु-कुभिन्नाः सर्वे । अत्राष्टाभिर्विभिन्नैः संशोधकैर्विद्वद्भिः पण्डितैरपि अष्टाकपालचरोः इत्युक्तम् । तत् किमुत्स्वप्रायित वा विचित्तताकाष्ठा वा अन्यद्वा किं स्यादिति न विद्मः । अष्टाकपालः सन् चरुः कथं स्यात्, चरुर्वा सन् कथमष्टाकपालः स्यात् । अष्टाकपालत्वं च चरुत्वं च तमःप्रकाशवत् व्यधिकरणमेव स्वभावतः । अष्टसु कपालेषु संस्कृतः पुरोडाशो हि अष्टाकपालो नाम । संस्कृतं भक्षे, न तु भोज्ये चरौ । चरुस्तु स्थाल्यां पच्यते ओदनो नाम । दर्शपूर्णमासयोश्च आग्नेयश्चरुः क्वोपलब्धः संशोधकमहाभागैरमीभिः । सर्वथापि अप्रतिसमाधेयो महान् प्रमादः । किमत्र निदानमिति निदानविद एव विदांकुर्वन्तु । आग्नेयाष्टाकपालादीनां व्यवदानमात्रहोमः इति बिन्दुः । सर्वप्रदानं इति भा-कु । इदं भा-शीर्षकं सूत्रगतपदात्मकं सत् पूर्वपक्षबोधनद्वारा विषयसूचकम् । ' सर्वप्रदानाधिकरणन्यायेन ' इत्यादिरूपेणेदं अधिकरणनामधेयं समायाति निबन्धेषु । इतरत्तु नायाति क्वापि ।

सू० ३७ ( १ ) नं तद इति क-मूलात् सिध्यति । कस्तूरिरङ्गाचार्यैः किल सूत्रस्थं पदमुच्चार्य व्याख्यायते । अत्र तु हविष इति पदं नोच्चारितम् । ' सर्वस्य पुरोडाशस्य प्रदानं निखिलस्य तदर्थत्वात् ' इति तदुक्तिः । 'किं कृत्स्नं हविरग्नये प्रदातव्यमुत शेषयितव्यं किंचित् ' इति ' कृत्स्नं हविः प्रदीयेत ' इति च भाष्यम् ।

**अधि० १५** सर्वशेषैः स्विष्टकृदनुष्ठानं इति वि-भाट्ट-शा-ल । सर्वहविःशेषेण स्विष्टकृदनुष्ठानं इति बिन्दुः । सर्वशेषेण स्विष्टकृदनुष्ठानं इति वृ-सु । सर्वेभ्यः शेषकार्यानुष्ठानं इति भा ।

सू० ४२ ( १ ) स्मात् शे इति क । भाष्ये तु अप्रयोजकत्वादेकस्मात् क्रियेरन् इति स्पष्टम् ।

**४३ संस्कृतत्वाच्च** । ४९ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ४७ सु.

**४४ सर्वेभ्यो वा कारणाविशेषात् संस्कारस्य तदर्थत्वात्** । ५० वि–भाट्ट–क–शा–ल–चौ–कु–वा, ४८ सु.

**४५ लिङ्गदर्शनाच्च** । ५१ वि–भाट्ट–क-शा–ल–चौ–कु–वा, ४९ सु.

अधि० १६ भा–म–सा–वृ–मण्डनः,२० वि–भाट्ट–क–शा–ल–कु–बिन्दुः, १३ सु.

**४६ एकस्माच्चेद् याथाकाम्ये विशेषात्** । ५२ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ५० सु, २० बिन्दुः.

**४७ मुख्याद्वा पूर्वकालत्वात्** । ५३ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ५१ सु.

अधि० १७ भा–म–सा–वृ मण्डनः, २१ वि–भाट्ट–क–शा–ल–कु–बिन्दुः, १४ सु.

**४८ भक्षाश्रवणाद् दानशब्दः परिक्रये** । ५४ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ५२ सु, २१ बिन्दुः.

**४९ तत्संस्तवाच्च** । ५५ वि–भाट्ट–क–शा–शा–ल–चौ–कु वा, ५३ सु.

**५० भक्षार्थो वा द्रव्ये समत्वात्** । ५६ वि–भाट्ट–क–शा–ल–चौ–कु–वा, ५४ सु.

---

सू० ४३ ( १ ) संस्तुतत्वाच्च इति य । कुतूहले तु संस्कृतत्वात् इत्येव । 'स्विष्टकृदादिभिर्हि हविःशेषेषु अदृष्ट एव संस्कार उपजन्यते' इति कुतूहलमूलाच्च । 'सकृच्चैवंजातीयकेन शेषकार्येण संस्कृतं प्रधानं' इति भाष्यं तु स्पष्टमेव । य–पाठस्तु भाष्यान्तरगतः स्यात् ।

अधि०१६ प्रथमोपस्थितेन शेषकर्मानुष्ठानं इति भा । प्राथमिकशेषात् स्विष्टकृदनुष्ठानं इति वि–शा–ल–सु । प्राथमिकशेषात् स्विष्टकृदादिप्रयोगः इति बिन्दुः । प्रयोग इति यथाकथंचिदेव । अनुष्ठानमित्येव तु युक्तम् । यद्यपि प्रयोगोऽपि अनुष्ठानमेवेति वक्तुं शक्यं तथापि प्रयोगशब्दप्रयोगो न हृदयं प्रविशति । प्राथमिकशेषात् स्विष्टकृदाद्यनुष्ठानं इति म–सा–भाट्ट–वृ–कु । कृत्वाचिन्तेयम् । वस्तुतस्तु सर्वेभ्य एव शेषकार्यानुष्ठानम् । परं तु सोऽपि एकः प्राचीनः पक्षो भवतीति न विस्मर्तव्यम् ।

सू० ४६ ( १ ) चेद् यथा इति म–सा–चौ । ( २ ) म्यमवि इति वि–भाट्ट–क–बिन्दु–ल–चौ–य–कु । काम्यावि इति शा । अत्र वार्तिकं, "याथाकाम्यं इत्यस्यैव बुद्धिसामानाधिकरण्येन स्त्रीविवक्षायां (स्त्रीत्वविवक्षायामित्यर्थः) 'षिद्गौरादिभ्यश्च' इति ङीषि कृते 'हलस्तद्धितस्य' इति य्यड्यकारे लुप्ते याथाकामी भवति," इति । तेन वार्तिकमते याथाकामी+अविशेषात् = याथाकाम्यविशेषात् इत्येव पाठः । वस्तुतस्तु कर्तुर्विशेषणं यथाकामी इति पुंलिङ्गः शब्दो युक्तः । यथाकामिनो भावः याथाकाम्यं इति नपुंसकलिङ्ग एव वा शब्दो युक्तः । बुद्धिर्याथाकामी इति तु नात्र प्रतिभाति । वार्तिककारस्तु तथा ब्रूते इति किं कुर्यान्मादृशो वराकः । किं च यथाकाम्यविशेषात् इति वा, याथाकाम्यमविशेषात् इति वा पाठो वार्तिककारैर्नैवोपलब्धः स्यात् । तेन गत्यन्तराभावात् आहार्यां बुद्धिं स्वीकृत्य तैस्तथा व्याख्यातम् । तथैव तु पाठः, अन्यस्तु न सूत्रकारीयः, तथैव च व्याख्यानं करिष्यते वार्तिककारोक्तत्वात् इत्याग्रहो मीमांसकानां भवति नवेति मीमांसका एव जानीयुः । आग्रहे तु न कारणमिति सरलः पन्थाः ।

अधि० १७ चतुर्धाकरणस्य भक्षार्थता इति भा । पुरोडाशविभागस्य भक्षार्थता इति भा–भिन्नाः । पुरोडाशविभागश्चतुर्धाकरणमेवेति यद्यपि सत्यं तथापि मीमांसकानां याज्ञिकानां वा चतुर्धाकरणशब्द एव मनोग्राही ।

सू० ५० ( १ ) समर्थत्वात् इति य । भाष्ये 'कः पुनरुपकार इति चेत् तृप्तानां कर्मशेषपरिसमापने सामर्थ्यं भवति इति ' इति वचनात् य-पाठोऽपि कथंचित् संगच्छेत ।

५१ व्यादेशाद् दानसंस्तुतिः। ५७ वि-भाट्ट-क-शा-ल-चौ-कु-वा, ५५ सु.

न्यायास्तु पादे दश सप्त चात्र ॥

निवीतं पत्न्युषिदिनाद्रव्य सालिङ्गाच्छेष

व्यादेशादेकपञ्चाशत् ॥

॥ इति तृतीयाध्यायस्य चतुर्थः पादः समाप्तः॥

॥ अथ तृतीयाध्यायस्य पञ्चमः पादः ॥

अधि० १.

१ आज्याच्च सर्वसंयोगात्।

२ कारणाच्च।

३ एकस्मिन् समवत्तशब्दात्।

४ आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य।

५ अशेषत्वात्तु नैवं स्यात्, सर्वादानादशेषता।

६ साधारण्यान्न ध्रुवायां स्यात्।

७ अवत्तत्वाच्च जुह्वां, तस्य च होमसंयोगात्।

८ चमसवदिति चेत्।

९ न चोदनाविरोधाद्, हविष्प्रकल्पनत्वाच्च। ८ य.

१० उत्पन्नाधिकारात् सति सर्ववचनम्। ९य.

११ जातिविशेषात् परम्। १० य.

१२ अन्त्यमरेकार्थे। ११ य.

अधि० २

१३ साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत्। १२ य, २ बिन्दुः.

अधि० ३.

---

सू० ५१ (१) व्यपदेशात् स्तुतिः इति सूत्रं क।

अधि० १ उपांशुयाजाद्यर्थहविर्भ्यः शेषकार्याननुष्ठानं इति भा। ध्रुवाज्यादिभिः शेषकार्याननुष्ठानं इति बिन्दु-वृ। ध्रुवाज्यादिभिः स्विष्टकृदादिशेषाननुष्ठानं इति म-सा-वि-भाट्ट-शा-ल।

सू० २ (१) करणात् इत्येव सूत्रं य।

सू० ७ (१) अक्तत्वा इति वि-भाट्ट-शा-ल-चौपाठः अशुद्ध एव। अत्र ' अवत्त अक्त ' इति लेखयोरत्यन्तसादृश्यात् संपादकाः प्रलब्धा इति भाति। यज्जुह्वामवत्तं इति भाष्यम्। (२) त्वात्तु जु इति य।

सू० ८ (१) चेदन्तमुत्तरेणैकं, तेन इत आरभ्य यलिखिते एकेनाङ्केन न्यूनता स्यात् भाष्याङ्कात्।

सू० ९ (१) विः प्र इति छित्त्वा सविसर्गं मुद्रितं वृ-भिन्ने। परंतु अशुद्धं तत्। ऐकपद्यमेवात्रावश्यकम्। विष्प्र इति वृ। नित्यं समासेऽनुत्तरपदस्थस्येति नित्यं षत्वप्राप्तेः अयमेव शुद्धः पाठः। (२) ल्पनाच्च इति भाट्ट-शा-चौ।

सू० १० (१) रात् सर्व इति य।

सू० १२ (१) अन्यदरेकात् इति सूत्रं य। भाष्यात् अयमपि पाठो प्राप्तो भवेत्। वार्तिके तु 'अन्त्यं यत्तु कारणं स्विष्टकृदर्थोऽर्थवाद इत्युक्तं तदस्मत्पक्षेपि उपपद्यत एव अरेकार्थत्वात्' इति। (२) कार्थम् इति भाट्ट।

अधि० २ साकंप्रस्थायीये शेषकर्माननुष्ठानं इति शा। साकंप्रस्थायीये शेषकार्याननुष्ठानं इति भा। साकंप्रस्थायीये स्विष्टकृदननुष्ठानं इति बिन्दु-वृ। अत्र सूत्रे एव स्विष्टकृदिडं इति पदं, तेन न केवलं स्विष्टकृत एवाभावः प्रतिपादनीयः किं तु सर्वस्यैव शेषकार्यस्येति बिन्दुशीर्षकं न युक्तम्। साकंप्रस्थाय्ये शेषकर्माननुष्ठानं इति म-सा-वि-भाट्ट-ल। अत्र सूत्रे एव साकंप्रस्थायीयशब्दपाठात् साकंप्रस्थाय्ये इत्युक्तमयुक्तम्।

सू० १३ (१) अत्र भा-सूत्रे साकं इति पदं छित्त्वा मुद्रितं तन्न युक्तं, साकंप्रस्थायीयं इति हि एकं समस्तं कर्मनामधेयम्। (२) स्थाय्ये स्वि इति म-वि-भाट्ट-शाटि-ल-चौ। एतदयुक्तं 'साकंप्रस्थायीयेन यजेत' इति हि विधिवाक्यं सर्वत्रैव।

अधि० ३ सौत्रामण्यां शेषकर्माननुष्ठानं इति म-सा-वि-शा-ल। सौत्रामण्यां शेषकार्याननुष्ठानं इति भा। सौत्रामण्यां शेषाननुष्ठानं इति भाट्ट-बिन्दु-वृ।

१४ सौत्रामण्यां च ग्रहेषु । १३ य, ३ बिन्दुः.

१५ तद्वच्च शेषवचनम् । १४ य.

अधि० ४.

१६ द्रव्यैकत्वे कर्मभेदात् प्रतिकर्म क्रियेरन् । १५ य, ४ बिन्दुः.

१७ अविभागाच्च शेषस्य सर्वान् प्रत्यविशिष्टत्वात् । १६ य.

अधि० ५ भाट्टभिन्न.

१८ ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षः स्यात् । १७ य, ५ बिन्दुः.

अधि० ६, ५भाट्ट.

१९ सोमेऽवचनाद् भक्षो न विद्यते । १८ य, ६ बिन्दुः.

२० स्याद्वाऽन्यार्थदर्शनात् । १९ य.

२१ वचनानि त्वपूर्वत्वात्, तस्माद् यथोपदेशं[1] स्युः । २० य.

अधि ० ७ भाट्टभिन्न.

२२ चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वात् । २१ य.

---

अधि० ४ सर्वपृष्ठायां शेषकार्यतन्त्रता इति भा । सर्वपृष्ठेष्टौ स्विष्टकृदादीनां सकृत्प्रयोगः इति बिन्दुः । तन्त्रं अनुष्ठानं इति वा वक्तव्ये प्रयोगशब्दस्य प्रयोगेण किं साधितं बिन्दुसंपादकैः ? सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृदनुष्ठानं इति म-सा-वि-भाट्ट-शा-वृ- ल ।

सू० १७ ( १ ) गात्तु शे इति वृ-य । ( २ ) त्यवशि इति भाट्ट-ल-पाठो न युक्तः । ' न गम्यते विशेषः ' इति हि भाष्यं, ' ततश्च शक्यमगृह्यमाणविशेषत्वं वक्तुं ' इति च वार्तिकम् ।

अधि० ५ ऐन्द्रवायवग्रहे द्विःशेषभक्षः इति बिन्दुः । ऐन्द्रवायवग्रहे द्विःशेषभक्षणं इति म-सा-वि-शा-वृ-ल । ऐन्द्रवायवस्य भक्षतन्त्रत्वाभावः इति भा । भा-शीर्षकं शुद्धमपि न साधीयः । 'प्रतिकर्म भक्षः ' इति हि सूत्रं, ' किं सकृद् भक्षणं उत द्विः ' इति, ' द्विर्भक्षयितव्यं ' इति च भाष्यं, ' द्विर्भक्षो न प्रधानभेदनिमित्तः ' इति वार्तिकम् । परिष्कृतशब्दप्रयोगात्तु शास्त्रपाण्डित्यं प्रदर्शितं भवति ।

सू० १८ (१) इदमष्टादशं सूत्रं भाष्ये पृथगधिकरणत्वेन व्याख्यातम् । वार्तिककृता तु पूर्वस्मिन् चतुर्थे एवाधिकरणेऽन्तर्भावितमिदं सूत्रं, तदनुसारेण च भाट्टदीपिकायामपि तथैव निवेशितम् । मण्डनाचार्येण तु पृथगेवाधिकरणं कृतं न्यायबिन्दुकारेण च ।

अधि०६ सोमे शेषभक्षणं इति म-सा-वि-भाट्ट-शा-ल । सोमे भक्षप्रतिपादनं इति भा । सोमे शेषभक्षास्तित्वं इति वृ । होमे शेषभक्षः इति बिन्दुः । सोमे इत्यस्य सोमयागे इति वाऽर्थः अन्य एव वा कश्चित् । सोमयागे इत्यस्यापि सोममात्रयागे इत्यर्थः इष्टिपशुसोमयागेषु इति वाऽर्थः ? अधिकरणं तु सोमशेषस्य भक्षणं विद्यते न वेति विचारार्थमेव । अर्थस्तु सर्वथापि नोपपद्यते । मण्डनेन तु सोमे इत्यस्य ज्योतिष्टोमे इत्येवार्थः कृतः । बिन्दौ तु सोमे इत्यस्य स्थाने होमे इति पठितम् । तत्तु विचित्रमेव । होमे सति यः शेषः तस्य भक्षः इति चेदर्थः, क्लिष्ट एवासौ । सूत्रे सोमे इत्यस्य सप्तम्यन्तपदस्य पाठात् तदनुकरणं कृतमिति संभाव्यते । वस्तुतस्तु सोमशेषभक्षास्तित्वं इत्येव शीर्षकं युक्तम् । सोमस्य यः शेषः तस्य भक्षः कर्तव्यो भवति इति हि अधिकरणे प्रतिपादितम् ।

सू० २१ ( १ ) देशाः स्युः इति य ।

अधि ० ७ चमसिनां शेषभक्षः इति म-सा-वि-ल । चमसिनां शेषभक्षणं इति वृ । चमसिनां सोमभक्षप्रतिपादनं इति भा । सोमभक्षप्रतिपादनाधिकरणं इति तु वस्तुतो भाष्यपुस्तके मुद्रितम् । तत्र कथं समास इत्यादि चिन्त्यमेव सर्वम् । इतः परं ' तस्माच्चाब्राह्मणस्य सोमं प्रतिषेधति ' इत्याधिकं सूत्रं वृ । भाष्ये इयं पङ्क्तिः

अधि० ८, ७ शा-बिन्दुः, ६ भाट्ट.

२३ उद्गातृचमसमेकः श्रुतिसंयोगात् । २४ वृ, २२ य, ७ बिन्दुः.

२४ सर्वे वा सर्वसंयोगात् । २५ वृ,२३ य.

२५ स्तोत्रकारिणां वा तत्संयोगाद् बहुश्रुतेः । २६ वृ, २४ य.

२६ सर्वे तु वेदसंयोगात्, कारणादेकदेशे स्यात् । २७ वृ, २५ य.

अधि० ९, ८शा-बिन्दुः, ७ भाट्ट.

२७ ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् । २८ वृ, २६ य, ८ बिन्दुः.

२८ हारियोजने वा सर्वसंयोगात् । २९ वृ, २७ य.

२९ चमसिनां वा संनिधानात् । ३०वृ,२८य.

३० सर्वेषां तु विधित्वात् तदर्था चमसिश्रुतिः । ३१ वृ, २९ य.

---

तद्व्याख्या च वर्तते । परंतु संशोधकैः सूत्रत्वेन न गृहीता । भाष्यं तु इत्थम् । "तस्माच्चाब्राह्मणस्य सोमं प्रतिषेधति । यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमं इति भक्षनिवृत्तिं दर्शयति । सैषा भक्षाशा एवं सति उपपद्यते यदि चमसिनोऽस्ति भक्षः । तस्मादस्तीति मन्यामहे ॥" इति । पूर्वसूत्रव्याख्यान्ते एव तु पङ्क्तिरियं सर्वा, तेन भाष्यमतेनापि सूत्रमिदमिति संभावयितुं शक्यम् । वार्तिकं चेत्थं "तस्माच्चाब्राह्मणस्य सोमभक्षणं प्रतिषेधति । यदि च 'प्र यजमानस्य' इति समाख्यया न सोमभक्षः प्राप्यते ततः फलचमसविधौ 'स यदि सोमं बिभक्षयिषेत्' इति 'न सोमं' इति च प्रतिषेधनसंकीर्तनं नावकल्पेत । तस्मादस्ति चमसिनां सोमभक्ष इति" इति । एतेनापि इदं सूत्रं स्वतन्त्रं स्यादिति भाति । सुधा तु पञ्चमषष्ठपादयोरनुपलब्धत्वान्नैव मुद्रिता । इतरग्रन्थेषु नेदमुपलभ्यते ।

इदं सूत्रं वार्तिककारैः सोमेऽवचनात् इत्यधिकरणगुणसूत्रत्वेनैव व्याख्यातं न स्वतन्त्राधिकरणत्वेन । भाट्टदीपिकायामपीत्थम् । तेन भाष्यीयाधिकरणाङ्कात् भाट्टाधिकरणाङ्कः इत उत्तरं द्वाभ्यां न्यूनः स्यात् । शास्त्रदीपिकासूत्रपाठे न्यायबिन्दौ च चमसेषु समाख्यानात् इति सूत्रं षष्ठाधिकरणगुणसूत्रत्वेनैव स्वीकृतं नाधिकरणान्तरत्वेन । तेन तयोः इत आरभ्य तदधिकरणाङ्कः एकेन न्यूनः स्यात् भाष्याङ्कात् इति ज्ञेयम् ।

अधि० ८ उद्गातृचमसे ससुब्रह्मण्यानां भक्षप्रतिपादनं इति भा । उद्गातॄणां सह सुब्रह्मण्येन भक्षः इति म-सा-वि-भाट्ट-शा-ल । उद्गातॄणां सुब्रह्मण्येन सह भक्षणं इति वृ । चमसिना शेषभक्षः इति बिन्दुः । भ्रान्तोऽत्र बिन्दुसंपादकः । चमसेषु समाख्यानात् इति सूत्रस्याधिकरणान्तरपरत्वे एव तस्य नामधेयमिदं, तत्तु न्यायबिन्दुकारैनैव पृथग्गृहीतम् । उद्गातृचमसमेकः इत्यधिकरणे तु न्यायबिन्दुकारैः अपसुब्रह्मण्यानामेव त्रयाणामुद्गातॄणां भक्ष इति सिद्धान्तितम् । तेन अपसुब्रह्मण्यानामुद्गातृचमसभक्षणं इति शीर्षकं बिन्दौ आवश्यकम् ।

सू० २३ (१) मेकस्य श्रु इति शा-य । भाष्ये तु 'उद्गाता एकः श्रुत्या संयुज्यते' इत्येव ।

सू० २५ (१) रिणो वा इति मटि-वृ-य । भाष्ये तु 'तस्मात् स्तोत्रकारिणां चमस इति' इति बहुवचनमेव । (२) हुत्वश्रु इति वृ-य । अत्र 'बहुत्वमिति पा०' इति भा-टिप्पणी । तेन 'बहुत्वंश्रुतेः' इति सूत्रे पाठः सिध्यति । वयं तु तत्र मन्यामहे 'बहुत्वश्रुतेः' इति सूत्रे पाठः स्यात् इति । तथा च वृत्तिपाठोऽपि संगच्छते ।

सू० २६ (१) क शेषः स्यात् इति य ।

अधि० ९ ग्रावस्तुतः सोमभक्षः इति भाट्ट । ग्रावस्तुतोऽपि सोमभक्षः इति बिन्दुः । अपिशब्दनिवेशः साधीयान् । ग्रावस्तुतोऽपि सोमभक्षणं इति म-सा-वि-शा-वृ-ल । हारियोजने ग्रावस्तुतोऽपि भक्षप्रतिपादनं इति भा । इदमेव तु सर्वतो युक्तम् ।

सू० ३० (१) मसश्रु इति वृ-य ।

अधि ० १०,९ शा-बिन्दुः, ८ भाट्ट.

३१ **वषट्काराच्च भक्षयेत्** । ३२ वृ, ३० य, ९ बिन्दुः.

अधि ० ११, १० शा-बिन्दुः, ९ भाट्ट.

३२ **होमाभिषवाभ्यां च** । ३३ वृ, ३१ य,१० बिन्दुः.

अधि ० १२, ११ शा-बिन्दु, १० भाट्ट.

३३ **प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे** । ३४ वृ, ३२ य, ११ बिन्दुः.

३४ **स्याद्वा कारणाभावादनिर्देशश्चमसानां, कर्तुस्तद्वचनत्वात्** । ३५ वृ, ३३ य.

३५ **चमसे चान्यदर्शनात्** । ३६ वृ, ३४ य.

अधि ० १३, १२ शा-बिन्दुः, ११ भाट्ट.

३६ **एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत्** । ३७ वृ, ३५ य, १२ बिन्दुः.

३७ **होता वा मन्त्रवर्णात्** । ३८ वृ, ३६ य.

३८ **वचनाच्च** । ३९ वृ, ३७ य.

३९ **कारणानुपूर्व्याच्च** । ४० वृ, ३८ य.

अधि० १४, १३ शा-बिन्दुः, १२ भाट्ट.

४० **वचनादनुज्ञातभक्षणम्** । ४१ वृ, ३९ य, १३ बिन्दुः.

अधि० १५, १४ शा-बिन्दुः.

४१ **तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्** । ४२ वृ, ४० य, १४ बिन्दुः.

अधि० १६, १५ शा-बिन्दुः.

---

**अधि० १०** वषट्करणस्य भक्षनिमित्तता इति म-वि-भाट्ट-ल । वषट्कारनिमित्तकभक्षान्तरप्रतिपादनं इति भा । वषट्कारस्य भक्षनिमित्तता इति सा-शा-बिन्दु-वृ ।

**अधि० ११** होमाभिषवनिमित्तकभक्षप्रतिपादनं इति भा । होमाभिषवयोरपि तन्निमित्तत्वं इति वृ । अत्र तच्छब्दप्रयोगो न युक्तः, भक्षशब्द एवात्र प्रयोक्तव्यः । होमाभिषवयोरपि भक्षनिनित्तता इति म-सा-वि-शा-बिन्दुः । होमाभिषवयोर्भक्षनिमित्तता इति भाट्ट-ल ।

**अधि० १२** एकपात्रे भक्षसमुच्चयः इति भा । वषट्कर्त्रादीनां चमसे सोमभक्षः इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल । भा-शीर्षकमयुक्तं भाति। न ह्यत्रसूत्रे भाष्ये वा एकपात्रशब्दस्योल्लेखः । उत्तरसूत्रे तु एकपात्रशब्दो वर्तते । निमित्तसंनिपाते भक्षसमुच्चयोऽत्र साध्यते। परंतु स एकपात्रे वा भिन्नपात्रे वेति नास्त्यत्र विचारः । अर्थात्तु स्यात्तथा परंतु न शब्दतः ।

**सू० ३३** ( १ ) मसिना इति य।

**सू० ३४** ( १ ) मसिनां इति य । ( २ ) चनात् इति य । भाष्ये तु 'प्राप्यते हि तेषां तत्र कारणं··· ··· अनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ' इत्येव ।

**सू० ३५** ( १ ) सेषु चा इति य। ( २ ) इदं सूत्रं नास्त्येव इति मटि ।

**अधि० १३** एकपात्रे होतुः प्रथमभक्षः इति वृ । वषट्कर्तुः प्रथमं भक्षप्रतिपादनं इति भा । अत्र प्रथमं इत्यस्य भक्षे वा अन्वयः प्रतिपादने वा अधिकरणे वा । एकदेशान्वयस्वीकारापेक्षया च भक्षप्राथम्यस्य प्रतिपादनं इत्येव कुतो नोक्तम् । होतुः प्रथमभक्षः इति म-सा-वि-भाट्ट-शा-बिन्दु-ल।

**सू० ३८** ( १ ) च-शब्दो नास्ति य।

**सू० ३९** ( १ ) र्व्या च इति य।

**अधि० १४** अनुज्ञापूर्वकं भक्षणं इति भा। भक्षस्यानुज्ञापूर्वकता इति भा-भिन्नाः सर्वे ।

**अधि० १५** वैदिकमन्त्रेणानुज्ञापनं इति भा। वैदिकवचनेनानुज्ञापनं इति भा-भिन्नाः सर्वे। वचनं, मन्त्रः इति भिन्नोऽर्थः । अनुज्ञायाः याचना दानं च मन्त्रेणैव वैदिकेन कर्तव्यं इति सिद्धान्तः । तथा च वचनशब्दो न युक्तः ।

**सू० ४१** ( १ ) त्यनु इति वृ । 'अनेन' इति शब्दाभावेऽपि न न्यूनता । तथापि वार्तिके ' अत आह उपहूत उपह्वयस्वेत्यनेनेति ' इति स पठितः।

**अधि० १६** अर्थक्रमतः प्रतिवचनं इति बिन्दुः। वैदिकमन्त्रेणानुज्ञादानं इति भा । वैदिकवचनेनार्थक्रमानुसारेण प्रतिवचनं इति वृ । वैदिकवाक्येन

४२ तत्रार्थात् प्रतिवचनम् । ४३ वृ, ४१ य, १५ बिन्दुः.

अधि ० १७, १६ शा-बिन्दु, १३ भाट्ट.

४३ तदेकपात्राणां समवायात् । ४४ वृ, ४२ य, १६ बिन्दुः.

अधि० १८ १७ शा-बिन्दु, १४ भाट्ट.

४४ याज्यापनये नापनीतो भक्षः प्रवरवत् । ४५ वृ, ४३ य, १७ बिन्दुः.

४५ यष्टुर्वा कारणाऽऽगमात् । ४६ वृ, ४४य.

४६ प्रवृत्तत्वात् प्रवरस्यानपायः । ४७ वृ, ४५ य.

अधि ० १९, १८ शा-बिन्दु, १५ भाट्ट.

४७ फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् । ४८ वृ, ४६ य, १८ बिन्दुः.

४८ इज्याविकारो वा संस्कारस्य तदर्थत्वात् । ४९ वृ, ४७ य.

४९ होमात् । ५० वृ, ४८ य.

५० चमसैश्च तुल्यकालत्वात् । ५१ वृ, ४९य.

५१ लिङ्गदर्शनाच्च । ५२ वृ, ५० य,

अधि० २०, १९ शा-बिन्दु, १६ भाट्ट.

५२ अनुप्रसर्पिषु सामान्यात् । ५३ वृ, ५१ य, १९ बिन्दुः.

---

प्रतिवचनं इति म-सा-वि-शा-ल । भाष्ये यथा प्रतिपादितं तदनुसारेण वृ-शीर्षकमेव युक्तं नेतरत् । सूत्राक्षरस्वरसात् अनुज्ञायाचने को मन्त्रः, अनुज्ञादाने च को मन्त्रः इत्येव निर्णेयमत्रेति सिध्यति । भाष्ये तु प्रतिवचनं लौकिकं वैदिकं वेति प्राधान्येन विचार्य अर्थानुसारेण प्रश्नप्रतिवचनयोर्मन्त्रविनियोगो न तु पाठक्रमेणेति पश्चादुक्तम् । एवं सति सूत्रानुसारेण बिन्दुशीर्षकं, भाष्यस्थौ द्वावप्यंशौ मनसि निधाय वृ-शीर्षकं, भाष्यस्थं प्रथममंशमादायैव तु भा-म-सादिशीर्षकम् । वयं तु बिन्दुशीर्षकमेव साधीयो मन्यामहे । भाष्यमूलानुसरणे तु वृ-शीर्षकं साधीयो, न भा-म-सादिशीर्षकं अपर्याप्तत्वात् । किंचान्यत् मन्त्रेण वचनेन वाक्येन इति शब्दत्रये मन्त्रशब्द एव ग्राह्यो नेतरौ ।

सू० ४२ ( १ ) वदनं इति वार्तिके पाठान्तरम् ।

अधि० १७ एकपात्राणामनुज्ञापनं इति भा-वृ-भिन्नाः । एकपात्राणामनुज्ञाप्य भक्षणं इति भा । एकपात्राणामेवानुज्ञापनं इति वृ । एकपात्राणामेवानुज्ञाप्य भक्षणं इति तु युक्तं वक्तुम् । पृथक्पात्रत्वे तु नानुज्ञापनादिव्यापारापेक्षा इत्यपि वक्तव्यमत्र । तच्चावधारणं विना न सिद्ध्यति ।

अधि० १८ यजमानस्य वषट्कारभक्षप्रतिपादनं इति भा । याज्यापनये भक्षस्याप्यपनयः इति वृ । स्वयं यष्टुर्भक्षः इति बिन्दुः । स्वयं यष्टुर्भक्षास्तित्वं इति भा-बिन्दु-वृ-भिन्नाः । यजमानस्य स्वयं यष्टृत्वे भक्षास्तित्वं इति तु शीर्षकमावश्यकं मन्यामहे ।

सू० ४४ ( १ ) नयनेना इति बिन्दुः । येन ना इति सोम । येना इति म-सा-वि-भाट्ट-शा-ल-चौ । अत्र वार्तिकं, 'यथा याज्याया अपनये सति होतुर्वरणं नापनीयते तथा भक्षोऽपीति' इति । सोमनाथेन तु तृतीयान्तः पाठः स्पष्टं व्याख्यातः इति नास्ति गतिः । परंतु याज्यापनयेन नापनीतः इति सोमनाथीपाठः इति न दोषः । तथा च म-सादिग्रन्थेष्वपि याज्यापनये नापनीतः इति च्छेद आवश्यकः । शास्त्रदीपिकायां तु सोमनाथीवत् पाठः स्वीकार्यः । य-पुस्तकं तु प्राचीनपद्धत्या लिखितत्वात् न निर्णायकं इति लिखितवाचकानां न निवेदनीयम् ।

सू० ४५ ( १ ) णावग इति य । भाष्ये तु 'स च ( वषटकारः ) याज्यायामागच्छन्त्यामागच्छति' इत्युक्तम् ।

अधि० १९ फलचमस इति भा । सौत्रेण पदेन अधिकरणविषयसूचकमिदं शीर्षकम् । फलचमसस्येज्याविकारता इति भा-भिन्नाः सर्वे । सिद्धान्तबोधकमिदं शीर्षकम् ।

अधि० २० ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणं इति म-सा-वि-भाट्ट-शा-ल । ब्राह्मणानामेव

२० ध्रुवस्त्वेकेषां तत्र पुनःश्रुतिर्गुणार्था। १८ य.
२१ तेनोत्कृष्टस्य कालविधिरिति चेत्। १९य.
२२ नैकदेशत्वात्। १९ य.
२३ अर्थेनेति चेत्। २० य
२४ न श्रुत्यविप्रतिषेधात्। २० य.
२५ स्थानात्तु पूर्वस्य, संस्कारस्य तदर्थत्वात्। २१ य.
२६ लिङ्गदर्शनाच्च। २२ य.
२७ अचोदना गुणार्थेन। २३ य.

अधि० ८.

२८ दोहयोः कालभेदादसंयुक्तं शृतं स्यात्। २४ य, ८ बिन्दुः.
२९ प्रकरणाविभागाद्वा तत्संयुक्तस्य कालेशास्त्रम्। २५ य.

अधि० ९.

३० तद्वत् सवनान्तरे ग्रहाम्नानम् २६ य, ९ बिन्दुः.

---

सू० २० ( १ ) अत्र भादिसर्वग्रन्थेषु प्राक्श्रुतिः इत्येव मुद्रितं, तथापि 'तदपेक्ष्य इयमेषां गुणार्था पुनःश्रुतिः' इति भा-मूलात्, 'गुणार्थौपवसथ्येऽह्नि सवनीयपुनःश्रुतिः' 'तस्माद् गुणार्थेयं पुन.श्रुतिः' इति च वार्तिकात् भा-सूत्रपाठो विपरिवर्तितोऽस्माभिः। प्राक्-शब्दस्तु भाष्यवार्तिकयोरस्मिन्नधिकरणे क्वापि नास्ति। वृत्तिचौखम्बावार्तिकयोः 'प्राक् श्रुतिः' इति छित्त्वा मुद्रितं तदप्ययुक्तम्।

सू० २१ ( १ ) चेदन्तमुत्तरेणैकं य।

सू० २३ ( १ ) चेदन्तमुत्तरेणैकं य।

सू० २४ ( १ ) नाश्रु इति वृ। न श्रुत्यवि इति य। अत्र भाष्यं 'नैतदेवं, श्रुतिविप्रतिषेधे भवेदेवम्। न च श्रुतिविप्रतिषेधः' इति। तेन भाष्यमतेन नाश्रुतिविप्रतिषेधात् इति वृत्तिवत्, न श्रुत्यविप्रतिषेधात् इति य-वद् वा पाठ आवश्यक इति भाष्यसूत्रे पाठोऽस्माभिर्विपरिवर्तितः। न श्रुतिविप्रतिषेधात् इति सर्वत्र मुद्रणमशुद्धम्।

सू० २७ ( १ ) ना वा गु इति वि-शा।

अधि० ८ शाखाऽऽहरणादीनामुभयदोहधर्मत्वं इति भा-बिन्दु-भिन्नाः। शाखाऽऽहरणादीनामुभयदोहार्थता इति भा। शाखाऽऽहरणादेरुभयदोहधर्मता इति बिन्दुः।

सू० २८ ( १ ) श्रुतं इति बिन्दुपाठो न शुद्धः। शृतं तप्तं पयः।

सू० २९ (१) प्रकरणाविशेषाच्चासंयुक्तस्य कालशास्त्रं इति य। ( २ ) तत् इति पदं नास्ति वृ। ( ३ ) कालमात्रं इति वृ-सूत्रे, वृ-मूले तु कालशास्त्रं इत्येव।

अधि० ९ ग्रहधर्माणां सवनत्रयसंबन्धिग्रहार्थता इति भा। संमार्गादीनां ग्रहधर्माणां सवनत्रयार्थत्वं इति वृ। सवनादीनां सवनत्रयधर्मता इति बिन्दुः। सादनादीनां सवनत्रयधर्मता इति म-सा-वि-भाट्ट-शा-ल। अत्रान्तिमानि त्रीण्यपि शीर्षकाणि न शुध्दानि। तत्रापि बिन्दुशीर्षकमशुध्दतरम्। सवनादयः सवनत्रयधर्मः इति कोऽर्थः? सवनमेव कथं सवनधर्मः स्याद् भोः। आदिशब्देन च किं गृह्यते? ततश्चेदं शीर्षकं 'मम जननी वन्ध्या' इति वाक्याभासमनुधावति। सवनत्रयार्थत्वं, सवनत्रयधर्मता इति च भाट्टादौ विद्यमानमप्ययुक्तम्। नहि सादनादिकं सवनत्रयस्य सवनद्वयस्य एकस्यापि वा सवनस्य धर्मः। तथाहि सति यत् किंचित् ऋत्विगादि कारकजातं तस्य सर्वस्यैव सादनादिकं कर्तव्यं स्यात्। संमार्गसादनादिकं धर्मजातं न केवलं प्रातःसवनगतग्रहाणामेव, किंतु सवनत्रयगता यावन्तो ग्रहास्तेषां सर्वेषामेव ग्रहाणां ते धर्माः कर्तव्याः इति हि सिद्धान्तः। किंचात्र, म-सा-वि-भाट्ट-शा-ल शीर्षकं अन्धपरंपरोदाहरणम्। यूरोपमुद्रितगतं शीर्षकं महेशचन्द्रैर्यथादृष्टमेव गृहीतं, महेशचन्द्रैर्गृहीतमिति विद्यासागरैः स्वीकृतं, तैः स्वीकृतमिति

अधि० १०.

३१ रशना च लिङ्गदर्शनात् । २७ य, १० बिन्दुः.

अधि० ११.

३२ आराच्छिष्टमसंयुक्तमितरैरसंनिधानात् । २८ य, ११ बिन्दुः.

३३ संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् । २९ य,

३४ निर्देशाद् व्यवतिष्ठेत ३० य.

अधि० १२.

३५ अग्न्यङ्गमप्रकरणे तद्वत् । ३१ य, १२ बिन्दुः.

अधि० १३.

विस्तरसंपादकैरङ्गीकृतं, तैरङ्गीकृतमिति शास्त्रदीपिकासंशोधकैरुररीकृतमित्यादि ।

अधि० १० रशनात्रिवृत्त्वादीनां सर्वपशुधर्मता इति भा-बिन्दुभिन्नाः । रशनात्रिवृत्त्वादेर्यावत्पशुधर्मता इति बिन्दुः । रशनाधर्मसाधारण्यं इति भा। अत्र त्रिवृत्त्वं दर्भमयत्वं इति रशनार्थं, रशना च परिव्याणार्था, परिव्याणं च यूपार्थं, यूपश्च पश्वर्थ इति परंपरा। एवं सति त्रिवृत्त्वादिकं नैकस्यापि पशोः साक्षाद्धर्मः, सर्वेषां पशूनामिति तु दूरनिरस्तम् ।

अधि० ११ अंरवदाभ्ययोरपि सादनधर्मता इति बिन्दुः । सादनधर्मता इत्युक्ते षष्ठीतत्पुरुषोपि संभाव्येत अर्थवैपरीत्येन च भूयेत । ततश्च बहुव्रीहिनिश्चयार्थं सादधनर्मकता इति वक्तव्यम् । अंरवदाभ्ययोरपि सादनादिधर्मवत्त्वं इति भा-बिन्दुभिन्नाः सर्वे । ग्रहधर्माणामनारभ्याधीतांरवदाभ्यग्रहार्थता इति भा । यदि ग्रहधर्मा अंरवदाभ्यार्थाः तर्हि किं ऐन्द्रवायवादिग्रहार्थता नास्त्येव वा धर्माणाम् ? यदि चानारभ्याधीतानां ग्रहधर्माः तत्किमारभ्याधीतानां न सन्त्येव धर्माः ? । भाष्यमूले तु 'तस्मात् अंरवदाभ्ययोरपि ग्रहधर्माः कर्तव्याः ' इति, ' तस्मादप्रकरणस्थस्यापि धर्माः' इति च । तथाच भाशीर्षके अपिशब्द आवश्यकः ।

सू० ३२ (१) रैः सं इति बिन्दु-त्रभिन्नाः सर्वे । परंतु भाष्यमूले ' किं प्राप्तम् । न कर्तव्याः । असंनिधानात् ' इति स्पष्टम् । एवं सत्यपि भा-सूत्रे कथमन्यथा मुद्रितमिति न ज्ञायते । अत्र य-लिखिते ' रैस्सं ' इति लिखितं, परंतु शरि परे विसर्गस्य स्थाने विसर्ग एव लेख्यो न शर् इति य-लिखितशैली सर्वत्र । तथा च अत्रापि ' रैरसं ' इत्येव य-संमतः पाठ इति तर्क्यतेऽस्माभिः ।

सू० ३४ (१) ष्ठेत् इति य । इदं तु न युक्तमिति लेखकप्रमाद एवाय मिति मन्यामहे । ' समवप्रविभ्यः स्थः ' इत्यात्मनेपदस्य नित्यत्वात् ।

अधि० १२ इष्टकाधर्माणामनारभ्योत्पन्नविनियुक्ताचित्रिण्यादीष्टकार्थताऽपि इति भा । भाष्यसंशोधकैः ' ( इति ग्रहधर्माणामनारभ्याधीतांरवदाभ्यग्रहार्थताधिकरणम् ॥ ११ ॥ १२ ॥ )' इति पूर्वाधिकरणान्ते मुद्रितम् । तेन अधिकरणद्वयस्य तच्छीर्षकं इति तदभिप्रायो ज्ञायते । परंतु द्वयोरधिकरणयोर्विषयभेदात् तन्न युक्तम् । अतोऽस्माभिस्तदीयं शीर्षकं एकादशाधिकरणे एव निवेश्य प्रकृते द्वादशेऽधिकरणे नूतनमेव निर्माय निवेशितमिति ज्ञेयम् । चित्रिण्यादीष्टकानां चयनधर्मता इति बिन्दुः। अयुक्तमिदं, ' इष्टकाधर्माः अखण्डामकृष्णामित्यादयः पूर्ववदनारभ्याधीतानामपीत्यतिदेशः ' इति न्यायबिन्दुः । चित्रिण्यादीनामग्न्यङ्गता इति भा-बिन्दुभिन्नाः ।

अधि० १३ अभिषवादीनां सोममात्रधर्मता इति वि-भाट्ट-शा-त्र-ल । क्रयाभिषवादीनां सोममात्रधर्मत्वं इति बिन्दुः । नित्यनैमित्तिकयोरसामानविध्यं इति भा । किमस्मिन्नधिकरणे नित्यसामान्यस्य नैमित्तिकसामान्यस्य च समानविधित्वं नास्तीति प्रतिपाद्यते ? केवलं तु सोमरूपस्य नित्यविशेषस्य फलचमसस्य च नैमित्तिकविशेषस्य न समानो विधिः इति प्रतिपादितमत्र । तेन सामान्यशब्दप्रयोगो भ्रमोत्पादकः । किं च असामानविध्यं इत्यस्य असमानविधित्वं, समानविध्यभावः इत्यर्थः । अत्र असामानविध्यं इति शब्दः साधुः साधीयान् साधिष्ठो वाऽपि स्यात् प्रयुक्तश्च भाष्यादौ, तथापि ननु

३६ नैमित्तिकमतुल्यत्वादसमानविधानं-
स्यात् । ३२ य, १३ बिन्दुः.

अधि० १४.

३७ प्रतिनिधिश्च तद्वत् । ३३ य, १४ बिन्दुः.

३८ न तद्वत्, प्रयोजनैकत्वात् । ३४ य.

३९ अशास्त्रलक्षणत्वाच्च । ३५ य.

अधि० १५.

४० नियमार्था गुणश्रुतिः । ३६ य, १५
बिन्दुः.

अधि० १६.

४१ संस्थास्तु समानविधानाः प्रकरणाविशे-
षात् । ३७ य, १६ बिन्दुः.

४२ व्यपदेशश्च तुल्यवत् । ३८ य.

४३ विकारास्तु कामसंयोगे से नित्यस्य
समत्वात् । ३९ य.

४४ अपिवा द्विरुक्तत्वात् प्रकृतेर्भविष्यन्ति ।

४५ वचनात्तु समुच्चयः । ४४ वृ, ४० य.

---

दुर्ज्ञेयार्थकः संजातः । मीमांसकानां न दुर्ज्ञेय इति चेत् शीर्षकदानप्रयासोपि तर्हि तत्रभवतां व्यर्थः । अधीतमीमांसाशास्त्रैः स्वयमेव ज्ञातुं शक्यत्वात् । अनधीतमीमांसानां कृते हि शीर्षकदानं, तेषां च असामानविध्यशब्दो दुर्ज्ञेय एव । असमानविधित्वं, समानविधित्वाभावः इति वोक्ते अधिकरणार्थो ज्ञातुं शक्यः । न च तत्रभवतां संशोधकानां काचित् पाण्डित्यहानिः । पण्डितानां च पाण्डित्यं अपण्डितानामेव कृते न पण्डितानामेव कृते । नहि प्रदीपः प्रदीपस्योपकरोति । अप्रकाशितप्रकाशनार्थं हि प्रदीपः । एवमन्यत्रापि । मानोपावहरणादीनां सोममात्रधर्मता इति म-सा । इदमेव तु शीर्षकं सर्वोत्कृष्टम् । फलचमसार्थफलानां ऐतरेयब्राह्मणे अभिषवस्य विधानात् । यद्यपि तत्र क्रयो नोक्तः तथापि नासौ विरुद्धः । पूजादिकमपि तेषामैतरेयके सोमवत् उक्तमेव । मानमुपावहरणं तु नैव फलेषु इति ।

अधि० १४ प्रतिनिधावपि मुख्यधर्मानुष्ठानं इति बिन्दुः । प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानं इति भा-बिन्दुभिन्नाः । मुख्यप्रतिनिध्योः सामानविध्यं इति भा । समानविधित्वं, समानधर्मकत्वं इत्यर्थः ।

सू० ३८ ( १ ) न इति पदं नास्त्येव म-सा-वि-भाट्ट-शा-ल । मुद्रितपुस्तकेषु प्रायः न-रहितः पाठः इति भाटि । परंतु नशब्द आवश्यक एव । पूर्वोक्तस्य तद्वद्भावस्य निषेधोऽत्र कर्तव्यः । स च नञं विना न सिध्यति । भाष्ये च स्पष्ट एव नञ् ।

सू० ३९ ( १ ) च-शब्दो नास्ति वृ ।

अधि० १५ मुख्यमन्दसदृशप्रतिनिध्योः सामानविध्यं इति भा । श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मता इति बिन्दुः । श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानं इति भाट्ट-बिन्दुभिन्नाः ।

सू० ४० ( १ ) र्था पुनःश्रुतिः इति शा-य । भा-मूले तु गुणश्रुतिरित्येव ।

अधि० १६ गुणकामानामाश्रयेण सह सामानविध्याभावः इति भा । समानविधित्वाभाव इत्यर्थः । दीक्षणीयादिधर्माणामग्निष्टोमाङ्गता इति भा-भिन्नाः सर्वे ।

सू० ४१ ( १ ) णाविभागात् इति वृ ।

सू० ४३ ( १ ) कारस्तु इति य । ( २ ) गे सति नि इति वृ-य । वार्तिके तु ( पृ० १०७१ पं २१ ) ‘ स नित्यस्य समत्वात् ’ इति प्रतीकं गृहीतम् । गे नि इति म-सा-वि-भाट्ट-शा-ल । ( ३ ) नित्यस्य समत्वात् इति वृ सूत्रे, वृ-मूले तु नित्यसमत्वात् इति ।

सू० ४४ ( १ ) इदं सूत्रं नास्ति वृ-य । (२) भविष्यन्तीति इति इतिशब्दः सर्वग्रन्थेषु मुद्रितः परंतु नासौ सूत्रस्थः स्यात् । किंतु ‘अग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य दीक्षणीयादयो धर्मा भविष्यन्तीति ’ इति या भाष्यपङ्क्तिः तद्गत एव स्यादिति निश्चयोऽस्माकम् ।

सू०४५ ( १ ) न वच इति य । अस्य सूत्रस्य पूर्वसूत्रोक्तयुक्तिनिरासपरत्वात् नशब्दोपि युज्यते ।

४६ प्रतिषेधाच्च पूर्वलिङ्गानाम् । ४५ वृ, ४१ य.

४७ गुणविशेषादेकस्य व्यपदेशः । ४६ वृ, ४२ य.

न्यायास्तु पादे परिकीर्तिताः स्युः
समीक्ष्य सम्यग् दश चैव षट् च ॥
सर्वं लिङ्ग स्थानात् अग्नि प्रति द्विचत्वारिंशत् ॥

॥ इति तृतीयाध्यायस्य षष्ठः पादः समाप्तः ॥

॥ अथ तृतीयाध्यायस्य सप्तमः पादः ॥

अधि० १.

१ प्रकरणविशेषादसंयुक्तं प्रधानस्य ।

२ सर्वेषां वा, शेषत्वस्यातत्प्रयुक्तत्वात् ।

३ आरादपीति चेत् ।

४ न तद्वाक्यं हि तदर्थत्वात् । ३ य.

५ लिङ्गदर्शनाच्च । ४ य.

अधि० २.

६ फलसंयोगात्तु स्वामियुक्तं प्रधानस्य । ५ य, २ बिन्दुः.

अधि० ३.

---

सू० ४६ (१) पूर्वेषाम् इति वृ-सूत्रे, वृ-मूले तु पूर्वलिङ्गानां इत्येव ।

अधि० १ बर्हिरादीनां दर्शपूर्णमासतदङ्गोभयाङ्गता इति म-वि-भाट्ट-बिन्दु-ल । बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गता इति सा-वि-शा-वृ । बर्हिरादीनामङ्गप्रधानसाधारण्यं इति भा ।

सू० २ (१) त्वं स्यात्तत् इति वृ । अयं पाठो भाष्यादपि सेद्धुमर्हति ।

सू० ३ (१) चेदन्तमुत्तरेणैकं य ।

सू० ४ (१) वृ-सूत्रं भा-वदेव, वृ-मूलात्तु 'वाक्यं तदर्थत्वात्' इत्येव सूत्रं सिध्यति तावत एव सूत्रांशस्य व्याख्यातत्वात् । वृ-मूलं चेत्थं "उक्तातिप्रसङ्गं परिहरति । वाक्यमिति । वाक्यं बर्हिर्वेद्यादिवाक्यं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यनेन एकवाक्यतामापन्नं' इति पूरणीयम् । तत्प्रकरणपाठेन तदर्थत्वात्" इति । एतत्सूत्रगतं तद्वाक्यं इत्यत्र तत् वाक्यं इति पदच्छेदो वा सामासिकं पदैक्यं वा, समासेपि च तत्पुरुषो वा कर्मधारयो वा इति विचारे पदच्छेदपक्षमेव स्वीकुर्मो वयम् । तथा च भाष्यं 'वाक्यं हि एकं दर्शपूर्णमासाभ्यां सह धर्माणां' इति । सुधा चात्र "तस्य असंयुक्तं प्रधानस्य (३।७।१) इति सूत्रनिर्दिष्टस्य असंयुक्तस्य धर्मजातस्य, यद् वाक्यं, तत्, प्रधानस्यैव वाक्यं तद्वाक्यैकवाक्यभूतं हि, इत्येवं 'तद्वाक्यं हि' इति सूत्रावयवव्याख्यार्थं 'वाक्यं हि' इति भाष्यं" इति । म-सा-पुस्तकयोस्तु तत् वाक्यं इति छित्वैव मुद्रितम् ।

अधि० २ यजमानसंस्काराणां प्रधानमात्रार्थता इति भा । स्वामिसंस्काराणां प्रधानार्थता इति भाभिन्नाः सर्वे ।

सू० ६ (१) मिसंयु इति य ।

अधि० ३ सौमिकवेदेरङ्गप्रधानार्थता इति भा । सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गता इति म-सा-वि-भाट्ट-शा-ल । सौमिकवेद्यादीनामङ्गप्रधानोभयार्थता इति बिन्दुः । सौमिकवेद्यादीनामुभयाङ्गत्वं इति वृ । किं तदुभयं ? स्पष्टमेव कुतो नोक्तम् । सौमिकवेद्यादीनामुभयार्थत्वं इति सु । भा-भिन्नेषु शीर्षकेषु वेद्यादीनां इति आदिशब्दः अयुक्तः । अत्राधिकरणे वेदिमात्रविचारात् ।

अत्र तृतीयमधिकरणं सप्तमनवमसूत्राभ्यां, चतुर्थं चाधिकरणं अष्टमदशमसूत्राभ्यामिति ज्ञेयम् । पूर्वपक्षयुक्तेः सप्तमसूत्रस्थाया एवात्रातिदेश इति प्रतिपादनसौकर्यार्थं अन्तरागर्भिणी सूत्ररचना । अत एव विस्तरे तृतीयेऽधिकरणे 'चिकीर्षया०७, तद्युक्ते०९' इत्यनयोः सूत्रयोर्निवेशः, चतुर्थेऽधिकरणे च 'तथा० ८, गुणाभि० १०' इति च सूत्रनिवेशः कृतः । शास्त्रदीपिकायामपि सूत्रनिवेशो विस्तरवत् कृतः अङ्कनिवेशस्तु अन्यथैवेति तत्राशुद्धिर्महती संजाता ।

७ चिकीर्षया च संयोगात् । ६य, ३ बिन्दुः.

अधि ४.

८ तथाऽभिधानेन । ९ वि–शा, ७ य, ४ बिन्दुः.

९ तद्युक्ते तु फलश्रुतिस्तस्मात् सर्वचिकीर्षा स्यात् । ८ वि–शा–य.

१० गुणाभिधानात् सर्वार्थमभिधानम् । ९ य.

अधि० ५.

११ दीक्षादक्षिणं तु वचनात् प्रधानस्य । १० य, ५ बिन्दुः.

१२ निवृत्तिदर्शनाच्च । ११ य.

अधि० ६.

१३ तथा यूपस्य वेदिः । १२ य, ६ बिन्दुः.

१४ देशमात्रं वाऽशिष्येणैकवाक्यत्वात् १३य.

अधि० ७.

१५ सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात् सामिधेनीनाम् । १४ य, ७ बिन्दुः.

१६ देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य । १५ य.

१७ समाख्यानं च तद्वत् । १६ य.

अधि० ८

१८ शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात् । १७ य, ८ बिन्दुः.

---

अधि०४ अभिमर्शनस्याङ्गप्रधानोभयाङ्गता इति भा–बिन्दुभिन्नाः सर्वे । अभिमर्शनस्योभयाङ्गता इति बिन्दुः । उभयशब्देन अस्पष्टतैवात्रापि कृता । स्वाधीने शब्दप्रयोगे केयं दरिद्रतेति न जानीमः । अभिमर्शनादेरङ्गप्रधानसाधारणहविर्मात्रार्थता इति भा ।

सू० ८ ( १ ) तथा प्रधानेन इति सूत्रं शाटि । भाष्यवार्तिकयोरपि प्रधानशब्दस्यैव विशेषतः प्रयोगोऽत्र । अभिधानशब्दस्तु साक्षान्नास्त्येव । नामधेयशब्दस्तु वर्तते क्वचित् । सुधायां तु ' यथाविधेन प्रधानवाचिना अभिधानेन प्रधानार्थत्वं भवति तथाविधेन मन्त्रयोः संयोगात्' इत्याद्युक्तम् । किं च तथाऽभिधानेन इत्यत्र पदभेदो वा पदैक्यं वेत्यपि विचारणीयं, तत्र उक्तसुधाग्रन्थात् पदैक्यं सिध्यतीति प्रतीमो वयम् ।

अधि० ५ दीक्षादक्षिणयोः प्रधानमात्रार्थता इति भा । दीक्षादक्षिणयोः प्रधानार्थताइति भा-भिन्नाःसर्वे ।

अधि० ६ अन्तर्वेदिबहिर्वेदिपदलक्षितदेशविशेषस्य यूपमात्राङ्गता इति भा । अन्तर्वेदेर्यूपाङ्गता इति अनुक्रमण्यां शा । अन्तर्वेदेर्यूपामङ्गता इति अधिकरणादौ शा । आभ्यां शीर्षकाभ्यां संपादकाः किं प्रतिपादयन्तीति ते स्वयमपि जानन्ति नवेति संशय एवास्माकम् । निद्राप्रलपनमेवैतत् । अन्तर्वेदेर्यूपानङ्गता इति भा–शा–भिन्नाः सर्वे । इदमपि कण्टकतोदनमिव दुःखाकरोति शीर्षकम् ।

सू० १४ ( १ ) वा शि इति अवग्रहरहितः वि–शा–चौपाठः अयुक्तः । अशिष्येण अशासितव्येन इति भाष्यात् । वा शिष्टैनैक इति वृ–ल ।

अधि० ७ दक्षिणहविर्धानि (न) देशस्यानुवचनार्थता इति भा । कस्यानुवचनं इति न ज्ञायतेऽनेन । सौत्रः सामिधेनीशब्दोऽत्र कुतो न निवेशितः ? । हविर्धानस्य सामिधेन्यङ्गता इति शा । अनेन पूर्वपक्षो निवेशितः स्यान्न सिद्धान्तः । सिद्धान्तानुसारेण हि भतितव्यं शीर्षकेण । हविर्धानस्य सामिधेन्यनङ्गता इति भा–शा–भिन्नाः सर्वे । इदमपि न हृद्यं शीर्षकम् । यदि हविर्धानं सामिधेन्यङ्गं न भवति किमर्थं तर्हि तत् , किमर्थो वा हविर्धानशब्दः इति वक्तव्यम् । वस्तुतस्तु हविर्धानग्रहणस्य देशलक्षणार्थता इत्येव युक्तम् ।

सू० १७ ( १ ) नं तु त इति भाट्ट ।

अधि० ८ अङ्गानामन्यद्वारानुष्ठानं इति म–सा–वि–भाट्ट–शा–ल । तत् किं प्रधानस्य प्रधानयोः प्रधानानां वा स्वयमेवानुष्ठानं इति मन्यन्ते तत्रभवन्तः? । उत्सर्गातिरिक्तस्यान्यद्वारानुष्ठानं इति वृ–सु । त्यागातिरिक्तस्य ऋत्विक्कर्मत्वं इति बिन्दुः । यजमानभिन्नकर्त्रन्तरप्रतिपादनं इति भा ।

सू०१८ ( १ ) स्वयंप्र इति संयोज्य मुद्रितं वि–

१९ उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य, तस्मादन्यः स्वयं वा स्यात्। १८य.

२० अन्यो वा स्यात् परिक्रयाम्नानाद् विप्रतिषेधात् प्रत्यगात्मनि । १९ य.

अधि० ९.

२१ तत्रार्थात् कर्तृपरिमाणं स्यादनियमोऽविशेषात् । २० य, ९ बिन्दुः.

२२ अपिवा श्रुतिभेदात् प्रतिनामधेयं स्युः । २१ य.

२३ एकस्य कर्मभेदादिति चेत् । २२ य.

२४ नोत्पत्तौ हि पुरुषाणाम् । २२ य.

अधि० १०.

२५ चमसाध्वर्यवश्च तैर्व्यपदेशात् । २३ य, १० बिन्दुः.

अधि० ११.

२६ उत्पत्तौ तु बहुश्रुतेः । २४ य, ११ बिन्दुः.

अधि० १२.

२७ दशत्वं लिङ्गदर्शनात् । २५ य, १२ बिन्दुः.

अधि० १३.

२८ शमिता च शब्दभेदात् । २६ य, १३ बिन्दुः.

२९ प्रकरणाद् वोत्पत्त्यसंयोगात् । २७ य.

अधि० १४.

३० उपगाश्च लिङ्गदर्शनात् । २८ य, १४ बिन्दुः.

---

भाट्ट–शा–चौ । परंतु छित्त्वा मुद्रणमेव युक्तम् । प्रयोगे अनुष्ठाने, स्वयं यजमानः स्यात् इति हि तदर्थः ।

सू० १९ ( १ ) कारि प्र इति ह्रस्वपाठो य । दीर्घपाठ एव तु युक्तः ।

सू० २० ( १ ) नादिप्र इति वि–शा–पाठो न युक्तः, प्रत्यगात्मनि परिक्रयः विप्रतिषिद्धः इत्यस्यैवार्थस्य समीचीनत्वात् ।

अधि० ९ ऋत्विजां परिक्रीतानां संख्याविशेषनियमः इति भाट्ट । ऋत्विजां संख्यानियम इति भा । ऋत्विजां संख्याविशेषनियमः इति बिन्दुः । परिक्रीतानामृत्विजां संख्याविशेषनियमः इति भा–भाट्ट–बिन्दुभिन्नाः । परिक्रीतानामिति विशेषणं व्यर्थम् । नहि अपरिक्रीता ऋत्विजो भवन्ति ।

सू० २१ ( १ ) यमावि इति वृ–सूत्रे, वृ–मूले तु यमोऽवि इत्येव ।

सू० २३ ( १ ) भेदात् इत्यन्तमेव सूत्रं वृ । परंतु शङ्कते इत्यवतरणम् । ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० २४ ( १ ) नोत्पत्तौ इत्येव सूत्रं भा–चौ । पुरुषाणां इति पदं न क्वापि सूत्रपाठे । परंतु भाष्यमित्थं ' नैतदेवं, उत्पत्तौ पुरुषाणाम् । उत्पद्यमानेषु पुरुषेषु नामधेयानि भिद्यन्ते ' इति । अत्र व्याख्येयव्याख्यानग्रन्थयोः पुरुषशब्दस्य प्रयोगात् भाष्यसंमतमेव पुरुषपदं सूत्रे इति सिद्ध्यति । तेन ' नोत्पत्तौ पुरुषाणां ' इत्येव सूत्रं मन्यामहे ।

अधि० १० चमसाध्वर्यूणां पृथक्त्वं इति सर्वे ।

अधि० ११ चमसाध्वर्यूणां बहुत्वनियमः इति म–सा–वि–भाट्ट–शा–ल । चमसाध्वर्यूणां बहुत्वं इति भा–बिन्दु–वृ–सु ।

सू० २६ (१) तुशब्दो नास्ति वृ । अत्र सूत्रे बहुश्रुतेः इति पाठः वृ–य–पुस्तकयोरपि । '३।५।२६ वृ, २४ य, इत्यत्र तु बहुत्वश्रुतेः इति पाठः । उभयत्रापि समान एव पाठो युक्तः । स च बहुत्वश्रुतेः इति ।

अधि० १२ चमसाध्वर्यूणां दशत्वनियमः इति भा–ल । चमसाध्वर्यूणां दशत्वसंख्या इति बिन्दुः । चमसाध्वर्यूणां दशत्वसंख्यानियमः इति म–भाट्ट । चमसाध्वर्यूणां दशसंख्यानियमः इति सा–वि–शा–वृ–सु ।

अधि० १३ शमितुरपृथक्त्वं इति सर्वे ।

अधि० १४ उपगस्यापृथक्त्वं इति म–सा–वि भाट्ट–शा–ल । उपगस्येति एकवचनं न युक्तम् । उपगातॄणामृत्विग्भ्योऽनन्यत्वं इति भा । उपगानामपृथक्त्वं इति बिन्दु–वृ–सु ।

अधि० १५.

३१ विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ।
२९ य, १५ बिन्दुः.

अधि० १६.

३२ कर्मकार्यात् सर्वेषामृत्विक्त्वमविशेषात् ।
३० य, १६ बिन्दुः.

३३ न वा परिसंख्यानात् । ३१ य.

३४ पक्षेणेति चेत् । ३२ य.

३५ सर्वेषामनधिकारः । ३२ य.

अधि० १७.

३६ नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ।
३३ य, १७ बिन्दुः.

३७ उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् । ३४ य.

अधि० १८.

३८ स्वामिसप्तदशाः कर्मसामान्यात् । ३५ य, १८ बिन्दुः.

अधि० १९, १९ तः २० म-सा-वि-भाट्ट-शा.

---

अधि० १५ सोमविक्रेतुः पृथक्त्वं इति भा-म-भिन्नाः । सोमविक्रेतुर्ऋत्विग्भ्यः पृथक्त्वं इति भा-म ।

अधि० १६ ऋत्विक्पदस्य योगरूढ्या सप्तदशमात्रगामित्वं इति वृ-सु । ऋत्विगितिनाम्नोऽसर्वगामित्वं इति म-सा-वि-भाट्ट-शा-ल । सप्तदशानामेव ऋत्विक्त्वं इति बिन्दुः । सर्वेषामृत्विक्शब्दावाच्यता इति भा । भा-शीर्षकमतिशिथिलम् । सर्वेषां नाम किमवनितलवर्तिनाम् ? ननु प्रकरणात् चमसाध्वर्युशमित्रुपगातृसोमविक्रयिणः अध्वर्य्वादयश्च सर्वे इति चेत् कस्यचिदपि ऋत्विक्शब्दवाच्यत्वं नास्तीति भवदुक्तेः अध्वर्य्वादीनामपि न स्यात् ।

सू० ३४ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ३५ ( १ ) मधि इति वि-भाट्ट-शा-ल-चौपाठो विरुद्धः । ( २ ) कारात् इति वृ-य ।

अधि० १७ दक्षिणोक्त्या ब्रह्मादीनामेव ऋत्विक्त्वं इति बिन्दुः । दीक्षादक्षिणवाक्यानां ब्रह्मादीनामेव सप्तदशर्त्विक्त्वं इति सु । वाक्यान्येव वा ब्रह्मादयः ? देवताः सन्तु नाम शब्दमय्यः, प्रत्यक्षाः कर्मकर्तार ऋत्विजः कथं वाक्यमयाः स्युः । तथाच ' वाक्योक्तानां ' इति वक्तव्यम् । दीक्षादक्षिणवाक्योक्तब्रह्मादीनामेव सप्तदशर्त्विक्त्वं इति वि-शा-ल । दीक्षादक्षिणवाक्ये ( क्यो ) क्तानां ब्रह्मादीनामेव सप्तदशर्त्विक्त्वं इति वृ । दीक्षादक्षिणवाक्योक्तानामेव ब्रह्मादीनां सप्तदशर्त्विक्त्वं इति म-सा-भाट्ट । ब्रह्मादीनामृत्विक्त्वनियमः इति अनुक्रमणिकायां भा । ब्रह्मादीनामेव ऋत्विक्त्वनियमः इति अधिकरणान्ते भा । प्रायः सर्वत्र म-सा-वि-भाट्ट-शा-ल इत्येतेषामेकवाक्यता भवति शीर्षकविषये । अत्र तु भूयान् भेदः सर्वेषामव । विनैव च कारणं कियान् भेदो भवति शीर्षकाणामिति प्रदर्शनस्थलमेवैतत् ।

सू० ३७ ( १ ) उक्ता च इति चौपाठः अशुद्ध एव ।

अधि० १८ ऋत्विजां स्वामिसप्तदशत्वं इति भा-भिन्नाः सर्वे । स्वामिनः सप्तदशत्वं इति भा ।

अधि० १९ अत्र सा-पुस्तके ' ते सर्वार्थाः ' इतिसूत्रस्य शीर्षाणि ' आध्वर्यवादिषु अध्वर्य्वादीनां कर्तृत्वानियमाधिकरणम् । अग्नेः प्रकृतिविकृतिसर्वार्थताधिकरणं च ' इति मुद्रितं , अधिकरणाङ्कश्चान्ते १९ इति निवेशितः । तत्संयोगात् इत्युत्तरसूत्रे ' आध्वर्यवादिष्वेवाध्वर्य्वादीनां कर्तृतानियमस्य सिद्धान्तः ' इति शीर्षकमुपन्यस्तं अन्ते अधिकरणाङ्कश्च २० इति निवेशितः । उत्तराधिकरणे च पुनः अधिकरणाङ्कः २० एव निवेशितः । तदेतत् विचित्रमेव कृतं सर्वम् । विस्तरे तु ' एकोनविंशे आध्वर्यवादिष्वध्वर्य्वादीनां कर्तृत्वानियमाधिकरणे, विंशे अग्नेः प्रकृतिविकृतिसर्वार्थताधिकरणे च सूत्राणि ३९-४२ ' इति शीर्षाणि निवश्य अधस्तात् चत्वार्यपि सूत्राणि निवेशितानि । पुनश्च ' विंशे अग्नेः प्रकृतिविकृतिसवार्थताधिकरणे उक्तसूत्रैकदेशः ' इति लिखित्वा अधस्तात्

३९ ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् । ३९ तः ४० भाट्ट, ३६ य, १९ बिन्दुः.

४० तत्संयोगात् कर्मणो व्यवस्था स्यात् संयोगस्यार्थवत्त्वात् । ४१ भाट्ट, ४० तः ४१ वृ, ३७ य.

अधि० २०, २१ भाट्ट.

४१ तस्योपदेशसमाख्यानेन निर्देशः । ४२ भाट्ट–वृ, ३८ य, २० बिन्दुः.

४२ तद्वच्च लिङ्गदर्शनम् । ४३ भाट्ट–वृ, ३९य.

अधि० २१, २२ भाट्ट.

४३ प्रैषानुवचनं मैत्रावरुणस्योपदेशात् । ४४ भाट्ट–वृ, ४० य, २१ बिन्दुः.

---

'अग्नयश्च ( सर्वार्थाः ) स्वकालत्वात्' इति निवेशितम् । भाट्टदीपिकायां तु 'ते सर्वार्थाः प्रयुक्तत्वात्' एतावदेव पृथक् ३९ शं सूत्रं १९ अधिकरणत्वेन निवेश्य 'अग्नयश्च स्वकालत्वात् ४० ॥ तत्संयोगात् ० ४१' इति सूत्रद्वयं २० अधिकरणत्वेन निवेशितम् । तन्मूले तु 'ते सर्वार्थाः प्रयुक्तत्वात्' इति एकोनचत्वारिंशं, तत्संयोगात् इति एकचत्वारिंशं च सूत्रं १९ अधिकरणत्वेन व्याख्याय 'अग्नयश्च स्वकालत्वात्' इति चत्वारिंशं सूत्रं विंशाधिकरणत्वेन व्याख्यातं, तच्चाधिकरणं अन्तर्गर्भिणीरूपम् । वार्तिककारसंमतं चैतत् । परंतु भाष्यपुस्तके अधिकरणाधिक्यं न प्रदर्शितम् ।

अथ शीर्षकाणि । अध्वर्य्वादीनामाध्वर्यवादिषु कर्तृत्वनियमः इति भाट्ट । आध्वर्यवादिषु अध्वर्युप्रभृतीनां नियतत्वं इति बिन्दुः । आध्वर्यवादिषु अध्वर्य्वादीनां कर्तृतानियमः इति म–सा–वि–शा–वृ–ल–सु । समाख्याया अध्वर्य्वादीनां नियतपदार्थकर्तृता इति भा ।

सू० ३९ ( १ ) ते सर्वार्थाः प्रयुक्तत्वात् ॥ ३९ ॥ अग्नयश्च स्वकालत्वात् ॥ ४० ॥ इति पृथक् सूत्रद्वयं भाट्ट । सूत्रस्वारस्यमपि भाट्टवदेव ।

सु० ४० वृत्तौ, तत्संयोगात् कर्मणो व्यवस्था स्यात् ४०, संयोगस्यार्थवत्त्वात् ४१ इति पृथक् द्वे सूत्रे ।

अधि० २० अत्र विंशमधिकरणं व–भाट्ट–ल, तदेव एकोनविंशमधिकरणं म–सा । अस्य शीर्षकं समाख्याप्रातकर्तृत्वस्य कचिद्बाधः इति वृ–सु । समाख्याप्रातस्य कचिद्बाधः इति बिन्दुः । किं समाख्याप्राप्तस्य सर्वस्यापि बाधः कश्चित् ? । कर्तृत्वस्य इति तत्र पदमावश्यकम् । समाख्यायातकर्तृत्वस्यापि कचिद् बाधः इति म–सा भाट्ट । सामान्यसमाख्यातकर्तृविशेषसमाख्यादिना बाधः इति भा । एतत्सूत्रद्वयस्य विस्तरे शास्त्रदीपिकायां च पूर्वाधिकरणे एव समावेशः कृतः न तु अधिकरणान्तरम् ।

सू० ४१ अत्र भा–सूत्रे 'तस्योपदेशसमाख्यानेन निर्देशः' इति पाठः । अयमेव च सर्वेष्वपि पुस्तकेषु । परंतु भाष्यमित्थं "किमेष एवोत्सर्गः सर्वं समाख्यातं समाख्यातपुरुषैः कर्तव्यमिति । नेति ब्रूमः । तस्योपदेशाद् विशेषसमाख्यानाच्च निर्देशः । यथोपदेशः, 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह' इति । समाख्या, पोत्रीया नेष्ट्रीया इति । एष समाख्यायाश्चापवाद इति ।" इति । तेन प्रतिजानीमहे यत् भाष्यमूलपठित एव सूत्रपाठो भाष्यकारसंमत इति । सुधाऽपि अनुकूलैव । तस्योपदेशेन समाख्यानेन निर्देशः इति बिन्दुः ।

अधि० २१ भाट्टे तु इदं द्वाविंशम् । सुधायां तु अधिकरणारम्भे प्रदीयमानं शीर्षकं अस्थाने एव दत्तम् । तत्र विंशाधिकरणशीर्षकं तस्योपदेश०इति सूत्रारम्भे देयमपि तद्वच्च लिङ्गदर्शनं इत्यस्यारम्भे दत्तम् । उत्तराधिकरणशीर्षकं च प्रैषानुवचनं इत्यारम्भे दातव्यमपि पुरोनुवाक्या० इतिसूत्रारम्भे एव प्रदत्तं इति महान् प्रमादः कृतः ।

इदमधिकरणं पृथक् नास्ति वि–शा । अनयोः सूत्रयोः पूर्वाधिकरणे एवान्तर्भावः । भाष्यस्वरसोप्येवम् । नह्यत्र भाष्ये विषयसंशयादिप्रदर्शनेन

४४ पुरोनुवाक्याधिकारो वा प्रैषसंनिधानात्। ४५ भाट्ट-वृ, ४१ य.

४५ प्रातरनुवाके च होतृदर्शनात्। ४६ भाट्ट-वृ, ४२ य.

अधि० २२, २३ भाट्ट.

४६ चमसांश्चमसाध्वर्यवः समाख्यानात् । ४७ वृ, ४३ य, २२ बिन्दुः.

४७ अध्वर्युर्वा तन्न्यायत्वात्। ४८ वृ, ४४ य.

४८ चमसे चान्यदर्शनात् । ४९ वृ, ४५ य.

४९ अशक्तौ ते प्रतीयेरन्। ५० वृ, ४६ य.

अधि० २३, २४ भाट्ट.

५० वेदोपदेशात् पूर्ववद् वेदान्यत्वे यथोपदेशं स्युः । ५१ वृ, ४७ य, २३ बिन्दुः.

५१ तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तः शेषे । ५२ वृ, ४८ य.

त्रयोविंशतिनीतयः ॥

प्रकरण निवृत्ति अपिवा नवा पुरोऽष्टाचत्वारिंशत्॥

॥ इति तृतीयाध्यायस्य सप्तमः पादः समाप्तः ॥

॥ अथ तृतीयाध्यायस्याष्टमः पादः ॥

अधि० १.

---

अधिकरणमारचितं दृश्यते। तस्योपदेशसूत्रीयभाष्यारम्भेऽपि नाधिकरणान्तरारम्भीयभाष्यारम्भच्छायां भजते। वार्तिकमुखे अपि अधिकरणान्तरत्वाभावानुकूले एव। मण्डनोऽपि आचार्यः नेदं पृथगधिकरणं मेने।‘(१९) तेषां समाख्यया कर्म (२०) वचनाच्च क्वचिद् भवेत् । (२१) प्रशास्ता न वदेदकं’ इति हि मीमासानुक्रमणिका ।

प्रैषानुवचनयोः समुच्चितयोर्मैत्रावरुणकर्तृता इति बिन्दुः। प्रैषान्तानुवचनेष्वेव मैत्रावरुणस्य कर्तृतानियमः इति भा। समाख्याबाधनं इति वि-शा-ल। वार्तिकनिष्कर्षानुसारेणेद शीर्षकम्। परंतु वार्तिके ‘किमनेनोपदेशेन समस्तविषयः समाख्यायोर्बाधः उत क्वचिदेव’ इति संशयं प्रदर्श्य क्वचिद् बाधः इति सिद्धान्तितम् । ततश्च वि-शा-लशीर्षकं भ्रान्तिकारि । समुच्चितयोरनुवचनप्रैषयोर्मैत्रावरुणकर्तृकत्वं इति म-सा-भाट्ट-सु ।

सू० ४५ (१) के हो इति वृ। परंतु ‘साधकान्तरमाह’ इत्यवतरणात् सूत्रे चकारः सुबोधिनीमतेन स्यादिति भाति।

अधि० २२ इदं भाट्टमतेन त्रयोविंशं इतरमतेन द्वाविंशमेव। चमसहोमेऽध्वर्युचमसाध्वर्युकर्तृकता इति वि-भाट्ट-शा-ल। चमसहोमेऽध्वर्योः कर्तृता इति म-सा-बिन्दु-वृ-सु । वि-भाट्टादिशीर्षके चमसाध्वर्युशब्दनिवेशः अधिकरणप्रतिपाद्यविरुद्धः। चमसहोमेषु अध्वर्युकर्तृकत्वं इति भा।

सू० ४६ अत्र भाट्टपुस्तके पूर्वसूत्रे एतत्सूत्रे च ४६ एव अङ्कः द्विर्निवेशितः ।

सू० ४८ (१) सेषु चा इति य ।

सू० ४९ (१) शक्तौ हि ते इति य ।

अधि० २३ श्येनवाजपेययोरध्वर्य्वादिसर्वगणकर्तृकत्वं इति वृ। श्येनवाजपेययोरनेककर्तृकता इति म-सा-वि-भाट्ट-शा-ल। श्येनवाजपेययोर्नानाकर्तृकता इति बिन्दुः। श्येनादौ प्राकृताङ्गेषु नानाकर्तृकत्वं इति भा । म-सादिशीर्षकात् बिन्दु-शीर्षकाच्च सत्रवत् श्येनो वाजपेयश्च सप्तदशकर्तृकः इति ज्ञानमुत्पद्यते । ततश्चायुक्तं शीर्षकद्वयम्। भा-शीर्षकेपि स एव दोषः। प्राकृताङ्गेषु नानाकर्तृकत्वं वैकृताङ्गेषु तु एककर्तृकत्वमेवेति ज्ञानात् कदाचित् सत्रप्रत्यभिज्ञा न स्यात् इति संभाव्यते ।

सू०५१ (१) तद्गुणा इति वि-भाट्ट-शा-ल। भाष्यमूले तु ग्रहणशब्दः स्पष्ट एव । (२) सधर्मा इति वृ-सूत्रे, वृ-मूले तु स्वधर्मा वा सधर्मा वा कोपि नास्ति । (३) र्थ्यादव्य इति य-सु ।

अस्मिन् पादे भाट्ट-मतेन २४ अधिकरणानि, इतरमतेन तु २३ एव। अस्मिन् पादे सूत्राणि भा-मतेन ५१ वृ-मतेन ५२ य-मतेन तु ४८ एव ।

अधि० १ क्रयस्य स्वामिकर्मता इति भा-बिन्दु-वृभिन्नाः । दक्षिणादानस्य यजमानकर्तृकत्वं इति भा। परिक्रयस्य स्वामिकर्तृता इति

१ स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ।
( अधि० २ वि-ल-मण्डनः. )
२ वचनादितरेषां स्यात् ।
अधि० २, ३ बि-ल-मण्डनः.
३ संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यवतिष्ठेरन् । २ बिन्दुः.
४ याजमानास्तु तत्प्रधानत्वात् कर्मवत् ।
५ व्यपदेशाच्च ।
६ गुणत्वे तस्य निर्देशः ।
७ चोदनां प्रति भावाच्च ।
८ अतुल्यत्वादसमानविधानाः स्युः ।
अधि० ३, ४ वि-ल-मण्डनः.
९ तपश्च फलसिध्दित्वाल्लोकवत् । ३बिन्दुः.
१० वाक्यशेषश्च तद्वत् ।
११ वचनादितरेषां स्यात् ।
अधि० ४, ५ बि-ल-मण्डनः.
१२ गुणत्वाच्च वेदेन न व्यवस्था स्यात् ।
४ बिन्दुः.
अधि० ५, ६ वि-ल-मण्डनः.

---

बिन्दुः । परिक्रयस्य स्वामिकर्मत्वं इति वृ । अत्र स्वामिकर्मता, स्वामिकर्तृता इत्यनेन किं मनसि प्रादुर्भवेत् । परिक्रयस्य कर्ता स्वामी, कर्म स्वामी, इति उभयथा कथं युज्येत । तथा च भा-भिन्नानि शीर्षकाणि भ्रान्तिकराणि । स्वामिकर्तृकत्वं इत्येव तु युक्तम् ।

( अधि० २ वि-ल । वरदानस्याध्वर्युकर्तृकता इति अनुक्रमण्यां वि । वरदानस्याध्वर्युकर्मत्व इति वि-ल । भ्रान्तिकरमिदम् । अध्वर्युकर्तृकत्वं इत्येव तु युक्तम् । )

वचनादितरेषां स्यादिति द्वितीयं सूत्रं प्रथमाधिकरणगुणसूत्रं भाष्ये । वि-ल-मण्डनास्तु अधिकरणान्तरं मन्यन्ते ।

अधि० २ वपनादिसंस्काराणां याजमानत्वं इति भाट्ट-बिन्दुभिन्नाः । वपनादीनां याजमानता इति बिन्दुः । संस्कारशब्दलोपेन किं साधितं बिन्दु-संपादकैः, अस्थाने लाघवमिदम् । संस्काराणां वपनादीनां याजमानता इति भाट्ट ।

सू० ३ ( १ ) कर्मवत् इति पदं नास्ति य । वृ-सूत्रेऽपि नास्ति, वृ-मूले तु वर्तते ।

सू० ४ ( १ ) कर्मवत् इति पदं नास्ति य ।

सू० ६ ( १ ) त्वेन त इति भाटि-शा-ल-चौ-य ।

सू० ७ ( १ ) चोदनाप्रतिभावाच्च इति वृ ।

अधि० ३ तपसश्च याजमानता इति इति भाट्ट । चकारेणात्र किं विवक्षितं तत्रभवद्भिः । तपसो याजमानत्वं इति भाट्ट-भिन्नाः ।

सू० ९ ( १ ) सिद्धत्वात् इति वृ-सूत्रे । वृ-मूले तु सिद्धित्वात् इत्येव ।

अधि० ४ ऋत्विक्संस्काराणां सर्वर्त्विग्धर्मता इति भा । लोहितोष्णीषतादीना सर्वर्त्विग्धर्मता इति भा-बिन्दुभिन्नाः । हिरण्यमालित्वादीनां सर्वर्त्विग्धर्मता इति बिन्दुः । भा-मूले लोहितोष्णीषत्वस्य नामापि न श्रूयते । विस्तरे हिरण्यमालित्वं प्रथमं श्रूयते उदाहरणान्तरे तु लोहितोष्णीषत्वं इति भाट्टे मूलार्थेनालमकमेव शीर्षकं विस्तरे तु क्षम्यते कथं चित् । बिन्दौ तु मूले हिरण्यमालित्वस्यैव निवेशात् युक्तमेव शीर्षकम् ।

द्वादशं सूत्रं भाष्ये पूर्वाधिकरणगुणसूत्रत्वेन प्रथमतो व्याख्याय पुनरधिकरणान्तरपरत्वेनापि व्याख्यातम् । संपादकास्तु सर्वत्रैव तादृशीं रीतिं न स्वीकुर्वन्तीति चित्रम् ।

सू० १२ ( १ ) वेदे न व्य इति वृ । वेदेन व्य इति सु । अत्र सुधा 'संस्काराणां गुणत्वेन अतद्विषयत्वावगमात् नौद्गात्रादिवेदसमाख्यया व्यवस्था स्यात् इत्येवं सूत्रेण सिद्धान्तमाह' इति । तेन 'वेदेन न' इत्येव पाठः सुधायामावश्यकः । वृ-पुस्तकेऽपि 'वेदेनव्यवस्था' इत्येव पाठः परंतु वेदे इति सप्तम्यन्तं वा पदं वेदेन इति तृतीयान्तं वेति न ज्ञातुं शक्यम् ।

अधि० ५ इष्टिकाममायां याजमानता इति भाट्ट । वृष्टिशब्दस्य स्थाने इष्टिशब्दो निपतितोऽत्र । गुणजन्यकामानां याजमानत्वं इति भा । इष्टिकामनाया याजमानता इति भा-भाट्टभिन्नाः ।

१३ तथा कामोऽर्थसंयोगात् । ५ बिन्दुः.

१४ व्यपदेशादितरेषां स्यात् ।

अधि० ६, ७ वि-ल--मण्डनः.

१५ मन्त्राश्चाकर्मकरणास्तद्वत् । ६ बिन्दुः.

१६ विप्रयोगे च दर्शनात् ।

अधि० ७, ८ वि-ल-मण्डनः.

१७ व्याम्नातेषूभौ व्याम्नानस्यार्थवत्त्वात् । ७ बिन्दुः.

अधि० ८, ९ वि-ल-मण्डनः.

१८ ज्ञाते च वाचनं नह्यविद्वान् विहितोऽस्ति । ८ बिन्दुः.

अधि० ९, १० वि-ल-मण्डनः.

१९ याजमाने समाख्यानात् कर्माणि याजमानं स्युः । ९ बिन्दुः.

२० अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ।

२१ अपूर्वे त्वपकृष्येत ।

अधि० १०, ११ वि-ल-मण्डनः.

२२ विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् । २१ य-सु भिन्नाः, १० बिन्दुः.

अधि० ११, १२ वि-ल-मण्डनः.

---

अधि० ६ आयुर्दा इत्यादिमन्त्रपाठस्य याजमानता इति बिन्दु-वृ । आयुर्दा इत्यादिमन्त्राणां याजमानता इति सा-शा । आयुर्दादिमन्त्रपाठस्य याजमानत्वं इति सु । आयुर्दादिमन्त्राणां याजमानता इति म-वि-भाट्ट-ल । प्रोत्साहनमन्त्राणां याजमानत्वं इति भा ।

सू० १५ ( १ ) णास्तद्वत् इति चौ-पाठस्तु अशुद्ध एव ।

अधि० ७ व्याम्नातस्योभयकर्तृता इति बिन्दुः । तत् किं व्याम्नातं उभयोः कर्तृ ? । उभयकर्तृकता इति युक्तम् । व्याम्नातस्योभयप्रयोज्यता इति म-सा-वि-शा-वृ-ल-सु । व्याम्नातानामुभयप्रयोज्यत्वं, इति भा । व्याम्नातेषूभयप्रयोज्यता इति भाट्ट ।

अधि० ८ अभिज्ञस्यैव वाचयितव्यता इति म-सा-भाट्ट-शा । ज्ञातस्यैव वाचयितव्यत्वं इति वृ-सु । ज्ञातस्येत्यशुद्धं, ज्ञातुः इति तु युक्तं स्यात् । वाजपेयादौ अभिज्ञस्यैव वाचनं इति भा । वाजपेयग्रहणं सामान्यं, क्लृप्त्यादौ क्लृप्तिमन्त्रादौ इति वा युक्तम् ।

सू० १८ ( १ ) वाचनं इत्यत्र वचनं इति भाट्ट-चौ ।

अधि० ९ द्वादशद्वंद्वानामाध्वर्यवत्वं इति वृ-सु-भिन्नाः । द्वादशानां द्वंद्वानामाध्वर्यवत्वं इति वृ-सु ।

सू० १९ ( १ ) मानस इति वृ-सूत्रे, मूले च याजमानकाण्डे श्रुतत्वात् ' इति । ( २ ) मानानि स्युः इति शा ।

सू० २० ( १ ) दर्थे हि इति वृ ।

सू० २१ ( १ ) अत्र ' अपूर्वे त्वपकृष्येत ' इति सूत्रं भाष्यमूले वस्तुतोऽस्त्येव व्याख्यातमेव च भाष्यकृता । सुधाया, य-लिखिते चापीदं वर्तत एव । परंतु इतरत्र सूत्रपाठे न क्वाप्युपलभ्यते । भाष्यमूले विद्यमानमपि चेदं सूत्रं संपादकैः सूत्रत्वेन कुतो न मुद्रितमिति त एव जानन्ति । आवश्यकमेव तु मुद्रणम् । म-सा पुस्तकयोरपि सूत्रत्वेन न मुद्रितमिदं तदपि व्याख्यातमनेन । परंतु सुधायां 'अपूर्वत्वेऽपकृष्येत इति पाठः ' अपूर्वे त्वपकृष्येत ' इति य-पाठः ।

अधि० १० होतुः करणमन्त्रस्यानुष्ठातृत्वं इति भा । होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वं इति बिन्दु-वृ-सु । होतुराध्वर्यवकरणानुष्ठातृता इति म-सा-वि भाट्ट-शा । आध्वर्यवकरणं नाम ? अबोधकमिदं शीर्षकम् । होतुराध्वर्यवकर्मानुष्ठातृत्वं इति ल ।

सू० २२ ( १ ) रणं स इति वृ-शा-य । रणस इति बिन्दुः । ( २ ) वायावि इति य । ( ३ ) यतोऽवि इति भाट्ट ।

अधि० ११ प्रैषप्रैषार्थयोः पृथक्कर्तृत्वं इति म-सा-भाट्ट-वृ-सु । प्रैषप्रैषार्थयोर्भिन्नकर्तृत्वं इति भा । प्रैषप्रैषार्थयोर्भिन्नकर्तृता इति बिन्दुः । भिन्न-

२३ प्रैषेषु च पराधिकारात् । २२ य-सु भिन्नाः, ११ बिन्दुः.

अधि० १२, १३ वि-ल-मण्डनः.

२४ अध्वर्युस्तु दर्शनात् । २३ य-सु भिन्नाः, १२ बिन्दुः.

२५ गौणो वा कर्मसामान्यात् । २४ य-सु भिन्नाः.

अधि० १३, १४ वि-ल-मण्डनः.

२६ ऋत्विक् फलं करणेष्वर्थवत्त्वात् । २५ य-सु भिन्नाः, १३ बिन्दुः.

२७ स्वामिनो वा तदर्थत्वात् । २६ य-सुभिन्नाः.

२८ लिङ्गदर्शनाच्च । २७ य-सुभिन्नाः.

अधि० १४, १५ वि-ल-मण्डनः.

२९ कर्मार्थे तु फले तेषां स्वामिनं प्रत्यर्थवत्त्वात् । २८ य-सुभिन्नाः १४ बिन्दुः.

( अधि० १६ वि-ल-मण्डनः, १५ भाट्ट-शा-बिन्दुः. )

३० व्यपदेशाच्च । २९ बिन्दु-य-सुभिन्नाः.

अधि० १५ भा-म-सा-बिन्दु-वृ-सु, १७ वृ-ल-मण्डनः, १६ भाट्ट-शा.

---

कर्तृता इत्यत्र बहुव्रीहिसमासान्तस्य कप्प्रत्ययस्याभावात् तत्पुरुषविशेषः कर्मधारयः कर्तव्यः स्यात् । तत्र चोद्देश्यविधेयभाववैपरीत्यं प्रसज्येत । प्रोक्षण्यासादनादीमनाध्वर्यवता इति वि-शा-ल ।

सू० २३ षे च इति वृ ।

अधि० १२ प्रैषप्रैषार्थयोर्यथाक्रममाध्वर्यवाग्नीध्रता इति म-सा-भाट्ट-बिन्दु-वृ-सु । प्रैषमन्त्राणामाध्वर्यवत्वं इति वि-शा-ल । प्रैषस्याध्वर्यवत्वं इति भा ।

सू० २४ र्युस्तद्दर्श इति शाटि । र्युस्तथा लिङ्गद इति वृ ।

सू० २५ ( १ ) गौणा वा इति चौ ।

अधि० १३ करणमन्त्रप्रकाश्यफलस्य याजमानत्वं इति भा । करणमन्त्रेषु यजमानफलस्याशासितव्यता इति बिन्दुः । करणमन्त्रेषु स्वामिफलस्याशासितव्यता इति भा बिन्दु-भिन्नाः । वर्चोन्यायः इति म-वि-भाट्ट-ल ।

सूत्रार्थविषये किंचिद् विचार्यते । भाष्ये तावत् 'ऋत्विक्फलमाशासितव्यं' इति पूर्वपक्षसूत्रे, 'यजमानस्य वा वचनं' इति सिद्धान्तसूत्रोपक्रमे। ऋत्विक्फलं इत्यत्र षष्ठीतत्पुरुषः, वृत्तौ च षष्ठीतत्पुरुष एव प्रदर्शितः । उपसंहारे च भाष्ये 'यजमानफलमाशासितव्यं' इत्युक्तम् । एवं सति 'ऋत्विक्फलं, स्वामिनो वा' इति वाक्ययोरर्थसामीचीन्यं न भवति। किं च ऋत्विक्फलं आशासितव्यं, केन ? एवं यजमानफलमाशासितव्यं, इत्यत्रापि केन ? इत्येव प्रश्नः । वयं तु ब्रूमः, ऋत्विक् इति पृथक् पदम् । स्वस्य आशंसीत इति पदद्वयस्याध्याहारः । ऋत्विक् स्वस्य फलमाशंसीत इत्यन्वयः । सिद्धान्तसूत्रे च ऋत्विक् स्वामिनः फलमाशंसीत इति पूर्वानुषङ्गेणान्वयः । एवं अर्थसामीचीन्यं लभ्यते इति ।

अधि० १४ करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मता इति भा-भिन्नाः सर्वे । धर्मशब्दोऽत्र अरुंतुद एव । करणमन्त्रेषु कर्मोपयोगिनः प्रकाश्यमानफलस्य ऋत्विग्गामित्वं इति भा ।

सू० २९ ( १ ) वत्त्वं इति शाटि । वत्ता स्यात् इति बिन्दुः ।

( अधि० १६ वि-ल-मण्डनः । व्यपदेशाच्च इति सूत्रात्मकं पृथगेव अधिकरणं स्वीकृतं षोडशं वि-ल मण्डनैः, पञ्चदशं भाट्ट-शा-बिन्दुभिः परंतु बिन्दौ शीर्षकं पृथग्दत्तं, अधिकरणाङ्कः सूत्राङ्कश्च न कोपि दत्तः इति संपादकमहाशयास्तन्द्रालुतामिदानीमाप्नुवन्निति भाति । द्रव्यसंस्कारस्याङ्गप्रधानता इति बिन्दुः । दशदाडिमादिवाक्यस्य सहोदरमेतत् शीर्षकम् । 'किमत्र भद्रं तन्नौ सह' इति द्विवचननिर्देशात् भद्रात्मकं फलं अध्वर्युयजमानयोर्द्वयोः इति प्रतिपादनीयमत्र सूत्रे । भद्रमित्यस्योभयगामिता इति म-वि-भाट्ट-शा-ल )

अधि० १५ अपूर्वप्राकृतधर्माणां विकृतावसंबन्धः इति बिन्दुः । द्रव्यसंस्कारस्याङ्गप्रधानार्थता इति म-सा-वि-भाट्ट-शा-वृ-ल-सु । द्रव्यसंस्काराणामङ्गप्रधानार्थता इति भा । वि-भाट्ट-शा

३१ द्रव्यसंस्कारः प्रकरणाविशेषात् सर्वकर्मणाम्। ३० य-सुभिन्नाः, १५ बिन्दुः.
अधि० १६ भा-म-सा-वृ-सु, १८ मण्डनः.

३२ निर्देशात्तु विकृतावपूर्वस्यानधिकारः। ३१ बिन्दु-य-सुभिन्नाः.
अधि० १७ भा-म-सा-भाट्ट-शा-वृ-सु, १९ मण्डनः, १८ वि-ल, १६ बिन्दुः.

३३ विरोधे च श्रुतिविशेषादव्यक्तः शेषे। ३२ य-सुभिन्नाः, १६ बिन्दुः.
अधि० १८ भा-म-सा-भाट्ट-शा-वृ-सु, २० मण्डनः, १९ वि-ल, १७ बिन्दुः.

३४ अपनयस्त्वेकदेशस्य विद्यमानसंयोगात्। ३३ बिन्दु-य-सुभिन्नाः १७ बिंदुः.
अधि० १९ भा-म-सा-भाट्ट-शा-वृ-सु, २१ मण्डनः, २० वि-ल, १८ बिन्दुः.

३५ विकृतौ सर्वार्थः शेषः प्रकृतिवत्। ३४ य-सुभिन्नाः, १८ बिन्दुः.

३६ मुख्यार्थो वाऽङ्गस्याचोदितत्वात्। ३६ य-सुभिन्नाः.
अधि० २० भा-म-सा-भाट्ट-शा-वृ-सु, २२ मण्डनः, २१ वि-ल, १९ बिन्दुः.

---

लशीर्षकं मूलार्थेन असम्बकमेव। वि-भाट्ट-शा-मूले अस्यार्थस्य लेशोऽपि नास्ति। द्रव्यसंस्कारः इति सूत्रात्मकं पृथगेवाधिकरणं भा-म-सा-वृ-सुपुस्तकेषु समारचितं तस्येदं शीर्षकम्। वि-भाट्ट-शा-लपुस्तकेषु तु नेदं पृथगधिकरणं स्वीकृतं इति शीर्षकमिदं अन्यथैव संजातम्। आम्रान् पृष्टः कोविदारानाचष्टे इतिन्यायस्येदमुदाहरणं सम्यगस्माभिर्लब्धम्।

सू० ३१ ( १ ) स्काराः प्र इति शा-बिन्दुः।

अधि० १६ अपूर्वप्राकृतधर्माणां विकृतावसंबन्धः इति म-सा-वृ-सु। प्राकृतधर्माणां विकृतावपूर्वपदार्थाङ्गत्वं इति भा। वि-भाट्ट-शा-बिन्दु ल-मतेन ' निर्देशात्तु ' इति सूत्रं पूर्वाधिकरणगुणत्वात् नेदं पृथगधिकरणं इति नास्त्येव शीर्षकम्।

सू० ३२ ( १ ) तावपू इत्येव भा-भिन्नेषु सर्वेषु सूत्रपाठेषु अक्षरनिवेशः। केवलं भा-सूत्रे एव विकृतापू इति मुद्रितम्। परंतु शुद्धिपत्रे तत् पुनः शोधितमिति न दोषः। किं च भा-म-सा इति भाष्यमूलत्रयेपि यत्र सूत्रानुवादः सिद्धान्तारम्भे कृतः तत्र तुशब्दो नास्ति, तेन तुशब्दोऽपि भाष्यमतेन नास्तीति सिध्यति।

अधि० १७ पवित्रस्य परिभोजनीयाबर्हिषा कर्तव्यता इति वि-शा-ल। पवित्रादेः परिभोजनीयाबर्हिषा कर्तव्यता इति भाट्ट। प्रकृतावपि लवनादेरसर्वार्थता इति भा। विकृतिपवित्रयोः परिभोजनीयाबर्हिषा कर्तव्यता इति बिन्दुः। अत्र विधृतिशब्दस्थाने विकृतिशब्दः अनवधानात् पतित इति ज्ञेयम्। विधृतिपवित्रयोः परिभोजनीयाबर्हिषा कर्तव्यता इति म-सा-वृ-सु।

सू० ३३ ( १ ) श्रुतिर्वि इति ल। विरोधाद्व्यक्तः शेषः इति वृ।

अधि० १८ प्रकृतपुरोडाशादीनां निधानार्थता इति भा। प्राकृतपुरोडाशादीनां निधानं इति भा-बिन्दुर्भिन्नाः। प्राकृतपुरोडाशादीना निधानार्थता इति बिन्दुः। अत्राधिकरणे पुरोडाशशकलादीनां निधानं किमन्यत एव क्रियते उत प्रकृतेभ्यः इति संशयः, प्रकृतेभ्य एवेति सिद्धान्तः। तथा च प्राकृतत्वस्य विधेयत्वेन अन्वयभानं यथा स्यात् तथैव शीर्षकरचना युक्ता। तत्तु उक्तेषु त्रिष्वपि शीर्षकेषु न भाति इति अयुक्तान्येव तानि।

अधि० १९ उपांशुत्वस्य काम्येपि प्रधानमात्रार्थत्वं इति भा। काम्येष्टिषूपांशुत्वधर्मस्य प्रधानार्थता इति म-सा-वि-शा-वृ-ल-सु। काम्येष्टिषूपांशुत्वस्य प्रधानार्थता इति भाट्ट-बिन्दुः।

सू० ३५ ( १ ) तित्वात् इति सु।

अधि० २० हतिनवनीताज्यस्य श्येनप्रयोगान्तर्वर्त्याज्यकार्यार्थता इति भा। श्येनाङ्गानां नवनीताज्यता इति भा-भिन्नाः सर्वे।

३७ संनिधानविशेषादसंभवे तदङ्गानाम् । ३७ य–सु भिन्नाः, १९ बिन्दुः.
( अधि० २१ भाट्ट. )

३८ आधानेऽपि तथेति चेत् । ३७ बिन्दु–य–सुभिन्नाः.

३९ नाप्रकरणत्वादङ्गत्वस्य तन्निमित्तत्वात् । ३८ बिन्दु–य–सु–भिन्नाः, २० बिन्दुः.
अधि० २१ भा–म–सा–शा–वृ–सु, २३ मण्डनः, २२ वि–भाट्ट–ल, २० बिन्दुः.

४० तत्काले वा लिङ्गदर्शनात् । ३९ बिन्दु–य–सु–भिन्नाः.

४१ सर्वेषां वाऽविशेषात् । ४० बिन्दु–य–सु–भिन्नाः.

४२ न्यायोक्ते लिङ्गदर्शनम् । ४१ बिन्दु–य–सुभिन्नाः.
अधि० २२ भा–म–सा–शा–वृ–सु, २४ मण्डनः, २३ वि–भाट्ट–ल, २१ बिन्दुः.

४३ मांसं तु सवनीयानां चोदनाविशेषात् । ४२ बिन्दु–वृ–य–सुभिन्नाः. २१ बिन्दुः.

४४ भक्तिरसंनिधावन्याय्येति चेत् । ४३ वृ–य–सुभिन्नाः.

४५ स्यात् प्रकृतिलिङ्गत्वाद् वैराजवत् । ४४ य–सुभिन्नाः, ४३ य.

न्यायाश्चतुर्विंशतिरत्र पादे समीरिता भाष्यकृता विचार्य ॥

स्वामि वचनात् अपूर्वे द्रव्य न्यायोक्ते त्रिचत्वारिंशत् ॥

॥ इति तृतीयाध्यायस्याष्टमः पादोऽध्यायश्च समाप्तः ॥

---

सू० ३७ ( १ ) धानावि इति ल ।
( अधि० २१ भाट्ट । पवमानेष्ट्याधानादीनां श्येनाङ्गानामपि न नवनीताज्यता इति भाट्ट । )

सू० ३८ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ३९ ( १ ) रणेऽङ्गत्वस्यात इति य । ( २ ) ङ्गस्य त इति सु–भिन्नाः सर्वे भादयः । भा–सु–मूले अङ्गत्वशब्द एव स्पष्टमुपलभ्यते ।

अधि० २१ सर्वश्येनाङ्गानां नवनीताज्यता इति वि–भाट्ट–शा–ल । सर्वेषामेव श्येनाङ्गानां नवनीताज्यत्वं इति म–सा–बिन्दु–वृ–सु । सर्वेषामेव श्येनीयाज्यकार्याणां दृतिनवनीतं इति भा । अत्र कार्याणां इत्यस्य स्थाने कार्येषु इति युक्तम् । अत्र सुधासंपादकैः " सर्वेषामेव श्येनाङ्गानां नवनीताज्यत्वं । अधि २१ " इति शीर्षकं 'तत्काले वा०' इतिसूत्रीयसुधासमाप्त्यनन्तरं निवेशितं, तत्तु 'तत्काले वा० ' इति सूत्रात् प्रागेवावश्यकम् ।

सू० ४० ( १ ) ले लि इति वृ ।

सू० ४१ ( १ ) वा वि इति अवग्रहराहित्यं ल–सु ।

अधि० २२ सवनीयहविषां मांसमयत्वं इति भा । किं ज्योतिष्टोमेऽपि मांसमयत्वं सवनीयहविषां ? ततश्च 'शाक्त्यानामयने' इत्यादौ वक्तव्यम् । सवनीयानां मांसमयता इति भा–भिन्नाः सर्वे । तत् किं सवनीयाः ग्रहचमसादयोपि मांसमया एव वा ?

सू० ४४ इदमुत्तरं चेति द्वे सूत्रे न विद्येते वृ । ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ४५ ( १ ) स्यात् पदं नास्ति य । ( २ ) लिङ्गाद् इति वि–भाट्ट–शा–ल–चौ ।

इत आरभ्य द्वादशाध्यायस्य समाप्तिपर्यन्तं अधिकरणदर्शका ग्रन्थाः भा–म–सा–वि–भाट्ट–शा–बिन्दु–वृ–ल–मण्डनाः इति दश । संपूर्णसूत्रपाठवन्तो ग्रन्थाः भा–म–सा–वि–भाट्ट–शा–वृ–ल–चौ–य–इति दश । कियतां चित् सूत्राणां दर्शकौ वा–बिन्दुः इति द्वौ ।

# ॥ अथ चतुर्थोऽध्यायः ॥

॥ अथ चतुर्थाध्यायस्य प्रथमः पादः ॥

अधि० १.

१ अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ।

अधि० २, २-३-४ मण्डनः.

२ यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् ।

अधि० ३, ५ मण्डनः.

३ तदुत्सर्गे कर्माणि पुरुषार्थाय, शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसंबन्धात् क्रियायां पुरुषश्रुतिः ।

४ अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ।

५ अपिवा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात् ।

६ तथा च लोकभूतेषु ।

अधि० ४, ६ मण्डनः.

७ द्रव्याणि त्वविशेषेणानर्थक्यात् प्रदीयेरन् । ४ बिन्दुः.

८ स्वेन त्वर्थेन संबन्धो द्रव्याणां पृथगर्थत्वात् तस्माद् यथाश्रुति स्युः ।

९ चोद्यन्ते चार्थकर्मसु ।

१० लिङ्गदर्शनाच्च ।

अधि० ५, ७ मण्डनः, [ ५ बिन्दुः ।

११ तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ।

१२ एकश्रुतित्वाच्च ।

---

अधि० १ क्रत्वर्थपुरुषार्थजिज्ञासा इति बिन्दुः । क्रत्वर्थपुरुषार्थविचारप्रतिज्ञा इति वृ । क्रत्वर्थप्रतिज्ञा इति शा । अयुक्तमिदं, नहि केवलं क्रत्वर्थस्यैव प्रतिज्ञाऽत्र । प्रतिज्ञा इति भा-म-सा-वि-भाट्ट-ल । शास्त्रारम्भाधिकरणेऽपि इदमेव शीर्षकम् । अतीव च स्थूलमिदम् ।

अधि० २ अत्र भाष्ये वर्णकत्रयम् । तत्रादिमे वर्णके क्रत्वर्थपुरुषार्थलक्षणम् । द्वितीये वर्णके वेदिस्तरणादेः पुरुषार्थत्वमेव । तृतीये वर्णके द्रव्यार्जनं पुरुपार्थ इति । एवं म-सा । विस्तरे चत्वारि वर्णकानि, प्रथमे भा-वत् । द्वितीये फलस्याविधेयता इति । तृतीये गोदोहनस्य पुरुषार्थता इति । चतुर्थे भा-तृतीयवत् । भाट्टे वर्णकत्रयम् । तत्र प्रथमे भा-वत् । द्वितीये वि-वत् । तृतीये वि-वत् । शास्त्रदीपिकायां वर्णकचतुष्टयं वि-वत् । बिन्दौ वर्णकचतुष्टयं वि-वत् । वृत्तौ वर्णकत्रयमेव वास्तविकम् । तत्र प्रथमे भा-वत् । द्वितीये विस्तरतृतीयवत् । तृतीये विस्तरचतुर्थवत् । मण्डने तु अधिकरणान्येवेमानि स्वीकृतानि यानि भाष्ये वर्णकानि । तत्र आदितो द्वितीयमधिकरणं 'पुमर्थं पुरुषप्रियम्' । तृतीयं 'गोदोहनं क्रतोर्नाङ्गम्' । चतुर्थं तु 'नार्जने नियमः क्रतोः' इति ।

सू० २ ( १ ) णा वि इति अवग्रहराहित्यं वि-भाट्ट-शा-बिन्दुः । 'अविभक्तो हि पुरुषार्थः प्रीत्या' इति तु भाष्यम् ।

अधि० ३ प्रजापतिव्रतानां पुरुषार्थता इति सर्वे ।

सू० ३ ( १ ) कर्मणि इति शाटि-बिन्दु-वृ । ( २ ) र्थानि शा इति शा-य । ( ३ ) च तद् द्र इति शा ।

सू० ४ ( १ ) यथाश्रुतिफलानि इति संहत्य मुद्रितं म-सा-वि-शा । छेदस्तु युक्तः ।

अधि० ४ यज्ञायुधवाक्यानामनुवादता इति भा । याज्ञयुधानामनुवादत्वं इति भा-भिन्नाः सर्वे । शब्देन हि अनुवादः कर्तुं शक्यते नार्थेन । तस्मादयुक्तमिदं शीर्षकम् ।

सू० ७ ( १ ) प्रतीयेरन् इति चौ ।

सू० ९ ( १ ) कथासु इति वि-भाट्ट-शा-ल-चौ । भाष्ये वृत्तौ च अर्थकर्मसु इत्येव ।

अधि० ५ पश्वेकत्वं इति भा-म-सा-वि-भाट्ट-ल । पश्वेकत्वविवक्षा इति वृ-बिन्दुः । पश्वेकत्वादेर्विवक्षा इति म-सा-भाट्ट ।

सू० १२ अश्रुतित्वाच्च इति सूत्रं य ।

१३ प्रतीयत इति चेत्[1]।

१४ नाशब्दं तत्प्रमाणत्वात् पूर्ववत्। १३ य.

१५ शब्दवत्तूपलभ्यते, तदागमे हि तद् दृश्यते, तस्य ज्ञानं यथाऽन्येषाम्। १४ य, १२ टुप्.

१६ तद्वच्च लिङ्गदर्शनम्। १५ य.

अधि० ६, ८ मण्डनः.

१७ तथा च[1] लिङ्गम्। १६ य.

अधि० ७, ९ मण्डनः, ६ बिन्दुः.

१८ आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत[1]। १७ य, ६ बिन्दुः.

१९ चोदनायां त्वनारम्भो[1] विभक्तत्वान्न[2] ह्यन्येन विधीयते। १८ य.

२० स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च[1] गुणभूतताऽऽश्रयाद्धि[2] गुणीभावः[3]। १९ य.

अधि० ८, १० मण्डनः.

२१ अर्थे[1] समवैषम्यमतो[2] द्रव्यकर्मणाम्। २० य.

अधि० ९, ११ मण्डनः, ८ म-सा, ७ बिन्दुः.

२२ एकनिष्पत्तेः सर्वं समं स्यात्। २१ य, ७ बिन्दुः.

---

सू० १३ (१) चेदन्तमुत्तरेणैकं य।

सू० १५ (१) शब्दतस्तूप इति य। अत्र भाष्ये 'न यज्ञे संख्या शब्देन श्रूयते' इत्युक्तं, तेन भाष्यमतेनापि शब्दतः इत्येव पाठः स्यात्। शब्दवत् इत्यस्य शब्देन इति व्याख्या न संभवति। तृतीयायास्तु स्थाने तसिल् संभवति (२) हि द इति य-टुप्-टी-रत्नख-भूषणदर्पणं कारिका ८। (३) नं हि य इति वि-भाट्ट-शा-ल-चौ।

अधि० ६ 'तथा च लिङ्गं' इति सूत्रं पञ्चमाधिकरणगुणसूत्रत्वेन व्याख्याय 'अधिकरणान्तरं वा' इत्युक्त्वा अधिकरणान्तरत्वेनापि भाष्ये व्याख्यातं, संपादकैश्च अधिकरणाङ्कोऽधिको निवेशितः। न्यायबिन्दौ तु पञ्चमाधिकरणीयद्वितीयं वर्णकमित्येव गृहीतं अधिकरणाङ्कश्च न वर्धितः। शास्त्रदीपिकायामपि 'एवं वा' इत्युक्त्या वर्णकान्तरमेवेदं स्वीकृतं परंतु संपादकैः अधिकरणाङ्कोऽत्र वार्धितः। सर्वत्र तु एवंविधे स्थले अङ्को न वर्ध्यते अत्रैव तु कस्माद् वर्धितः इति न ज्ञायते।

पशुलिङ्गविवक्षा इति वि-भाट्ट-शा-बिन्दु-ल। पुंस्त्वादिलिङ्गस्य विवक्षा इति भा। लिङ्गस्य विवक्षा इति वृ। लिङ्गस्य विवक्षितत्वं इति म-सा।

सू० १७ (१) च शब्दो नास्ति शा।

अधि० ७ आश्रयिणामदृष्टार्थता इति सर्वे।

सू० १८ (१) प्रतीयते इति बिन्दुः। अत्र म-सा-मूले 'प्रतीयते' इति पाठः। भा-मूले तु 'प्रतीयेत' इति पाठः।

सू० १९ (१) म्भोऽवि इति वृ-ल-टुप्। (२) त्वनेन इति वि-भाट्ट-शा-लटि। भाष्ये वृत्तौ च मूले अन्येन इत्येव।

सू० २० (१) भावेऽर्थे गुण इति य। (२) तत्वाश्र इति वि-शा-ल-चौ। (३) याद् द्विगु इति लटि। याद् विगु इति वि-शा-चौ-य।

अधि० ८ प्रतिज्ञा इति भा-म-सा। शास्त्रारम्भे चतुर्थाध्यायारम्भे अत्र चेति स्थले 'प्रतिज्ञा' इत्येव शीर्षकं इत्ययुक्तमिदम्। प्रयुक्तिविचारप्रतिज्ञा इति वि-भाट्ट-शा-ल। प्रयोज्यप्रयोजकभावनिरूपणप्रतिज्ञा इति वृ।

सू० २१ (१) अर्थेन स इति वृ। (२) म्यतो इति म-सा-वि-भाट्ट-चौ-रत्नख।

अधि० ९ आमिक्षाप्रयुक्तता इति वि-शा-ल। आमिक्षायाः वा प्रयुक्तता आमिक्षया वा प्रयुक्तता, केन कस्य च प्रयुक्तता? सर्वथापि अर्थशून्यं शीर्षकमिदम्। आमिक्षाया दध्यानयनस्य प्रयोजकत्वं इति भा। तप्ते पयसि दध्यानयनस्यामिक्षाप्रयुक्तता इति म-सा-भाट्ट। दध्यानयनस्यामिक्षाप्रयोज्यत्वं इति बिन्दु-वृ। वाजिनन्यायः इति म-सा-वि-भाट्ट-ल।

पूर्वाधिकरणे ८ अङ्कं निवेश्य पुनरत्राप्यधिकरणे ८ अङ्कमेव निवेश्य यावत्पादसमाप्ति एकैकन्यूनाः अङ्काः निवेशिताः इति व्यर्थमेव अधिकरणसंख्या एकेन

२३ संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् । २२ य.

२४ मुख्यशब्दाभिसंस्तवाच्च । २३ य.

अधि० १०, १२ मण्डनः, ९ म-सा, ८ बिन्दुः.

२५ पदकर्माप्रयोजकं नयनस्य परार्थत्वात् । २४ य, ८ बिन्दुः.

अधि० ११, १३ मण्डनः, १० म-सा, ९ बिन्दुः.

२६ अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात् तदर्थो हि विधीयते । २५ य, ९ बिन्दुः.

अधि० १२, १४ मण्डनः, ११ म-सा-वृ, १० बिन्दुः.

२७ पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् । २६ य, १० बिन्दुः.

अधि० १३, १५ मण्डनः, १२ म-सा-वृ, ११ बिन्दुः.

---

न्यूना संपादिता महेशचन्द्रन्यायरत्नैः, तदेवाशुद्धं च अन्धपरंपरया जीवानन्दविद्यासागरा अप्यनुसस्रुः ।

सू० २४ ( १ ) शब्दसं इति वृ ।

अधि० १० एकहायनीनयनस्याक्षाभ्यञ्जनाद्यप्रयुक्तता इति भा । गवानयनस्य पदकर्माप्रयोज्यत्वं इति वृ । गवानयनस्य पदकर्मप्रयोज्यत्वाभावः इति बिन्दुः । गवानयनस्य पदकर्माप्रयुक्तता इति म-सा-वि-भाट्ट-शा-ल ।

अधि० ११ कपालानां तुषोपवापाप्रयुक्तता इति म-सा-वि-भाट्ट-शा-ल । कपालानां तुषोपवापाप्रयोज्यत्वं इति बिन्दु-वृ । शीर्षकद्वयेऽपि कपालानां इति बहुवचनमयुक्तं ' पुरोडाशकपालेन तुषानुपवपति ' इति श्रुतावेवैकवचनप्रयोगात् । तुषोपवापस्य पुरोडाशकपालाप्रयोज्यत्वं इति भा ।

सू० २६ ( १ ) दर्थे हि इति बिन्दुः ।

अधि० १२ शकृल्लोहितयोः पशावप्रयोक्तृता इति म-सा-वि-भाट्ट-शा-ल । शकृल्लोहितयोः पशावप्रयोजकता इति बिन्दु-वृ । शकृल्लोहितयोः पश्वप्रयोजकत्वं इति भा । अत्र म-सा-वि-संपादकैः प्रयुक्तेन प्रयोक्तृशब्देनातुष्यन्तो बिन्दु-वृ संपादकाः प्रयोजकशब्दं सममानयन् । तत्रापि पशौ इति पृथक्पदतां ता-प्रत्ययं च अरोचकं मत्वा समासं त्वप्रत्ययं च स्वीचक्रुर्भा-संपादकाः । एतावदत्र सूक्ष्मतरं विचारशूकं दर्शयन्तः संपादकमहाशयाः अन्यत्र दोषमुसलमपि न लक्षयन्तीत्याश्चर्यम् । अत्र मीमांसानुक्रमणिकासंपादकैः चतुर्दशमधिकरणाङ्कं निवेशार्हमपि अनिवेश्य त्रयोदशमेवाङ्कं अनवधानेन निवेशितवन्तः । सुबोधिनीवृत्तौ च पूर्वाधिकरणे एकादशमङ्कं योग्यं निवेश्य पुनरत्राप्यधिकरणे अयोग्यमेकादशमङ्कं च निवेश्य आपादसमाप्ति एतदनुसारेणैव एकेन न्यूनन्यूना एवाङ्का निवेशिताः संपादकमहाभागैरिति विना कारणेन एतत्पादीयाधिकरणाङ्काः एकेन न्यूना एव कृताः ।

अधि० १३ पुरोडाशस्य स्विष्टकृदप्रयुक्तता इति म-सा-वि-भाट्ट-शा-वृ-ल । पुरोडाशस्य स्विष्टकृदप्रयोज्यता इति बिन्दुः । स्विष्टकृतः पुरोडाशाप्रयोजकत्वं इति भा । अत्र भा-म-सामूले ' अप्रयोजकः पुरोडाशस्य स्विष्टकृद्यागः ' इत्युपसंहारः । विस्तरे तु ' तस्मात् तमेव ( पुरोडाशं ) उपजीव्य स्विष्टकृद्यागः प्रवर्तते नत्वन्यस्य प्रयोजकः ' इत्युपसंहारः । भाट्टे तु ' सः ( स्विष्टकृत्प्रक्षेपः ) नावयविनः ( पुरोडाशस्य ) नोत्तरार्धस्य वा प्रयोजकः' इत्युपसंहारः । शास्त्रदीपिकायां तु निष्कर्षरूपस्योपसंहारस्याभावेपि ' स्विष्टकृत् किं उत्तरार्धपुरोडाशयोरन्ययोः प्रयोजकः उत आग्नेयादिप्रयुक्तोपजीवी' इति संशयो निवेशितः । वृत्तौ तु ' पुरोडाशनिर्माणं उभयार्थं ( स्विष्टकृदर्थं प्रधानार्थं चेति ) उत प्रधानार्थमेव ' इति संशयो निवेशितः । एवं सति तत्तच्छीर्षकं स्वस्वमूलानुसारि न वेति विचारणीयं विद्वद्भिर्वाचकैः । दिक्प्रदर्शनार्थमेव चोदाहृतमस्माभिरत्र ।

२८ एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्। २७ य, ११ बिन्दुः.

२९ निर्देशात् तस्यान्यदर्थादिति चेत्। २८ य.

३० न शेषसंनिधानात्। २८ य.

३१ कर्मकार्यात्। २९ य.

३२ लिङ्गदर्शनाच्च। ३० य.

अधि० १४, १६ मण्डनः, १३ म-सा-वृ, १२ बिन्दुः.

३३ अभिघारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात्। ३१ य, १२ बिन्दुः.

३४ न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात्। ३२ य.

३५ हेतुत्वाच्च सहप्रयोगस्य। ३३ य.

३६ अभावदर्शनाच्च। ३४ य.

३७ सति सव्यवचनम्। ३५ य.

३८ न तस्येति चेत्। ३६ य.

३९ स्यात् तस्य मुख्यत्वात्। ३६ य.

अधि० १५, १७ मण्डनः, १४ म-सा-वृ, १३ बिन्दुः.

---

सू० २८ अत्र म-सा भाष्यपङ्क्तिः ‘एकदेशद्रव्यश्च एवंजातीयकोऽप्रयोजको भवेत्’। इति। आनन्दाश्रमीयभाष्यपङ्क्तिश्च ‘एकदेशद्रव्यं चैवंजातीयकोऽप्रयोजको भवेत्’ इति। ३।३।२२ सूत्रगतवार्तिके च “एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् अप्रयोजकः” इति। तत्रत्या सुधा (१३०१ पृ.) चेत्थं ‘यद्यपि एकदेशो द्रव्यं यस्य यागस्य इति चतुर्थाधिकरणसूत्रस्थैकदेशद्रव्यशब्दार्थः’ इति। तथा च भा-सूत्रस्थं भा-मूलस्थं च ‘एकदेशद्रव्यं’ इति पदं नैव युक्तं ‘एकदेशद्रव्यः’ इत्येव तु युक्तमिति प्रतिजानीमहे। भा-पुस्तके ९७४ पृष्ठे ‘एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्’ इति सूत्रं मुद्रितं, ११३५ पृष्ठे च ‘एकदेशद्रव्यं च’ इति सूत्रैकदेशो मुद्रितः, सुधा तु उभयत्राप्यत्र प्रकृतविषये नास्ति। (१) द्रव्यं चो इति भा-शा-सोम-य। द्रव्यस्योत्प इति चौ।

सू० २९ (१) चेदन्तमुत्तरेणैकं य।

सू० ३१ (१) र्याच्च इति य।

अधि० १४ अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानं इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल। प्रयाजशेषाभिघारणं इति भा। इदं भा-शीर्षकमयुक्तम्। भाष्ये हि ‘तत्र संदेहः किं प्राजापत्यानां वपा अभिघारयितुं प्रयाजशेषस्य धारणार्थं पात्रमपरमुत्पादयितव्यं उत न शेषो धारयितव्यः इति।’ इति अधिकरणादौ, अन्ते च ‘तस्मान्न प्रयाजशेषो धार्यते’ इत्युक्तं, तस्मात् म-सादिशीर्षकमेव वरम्।

सू० ३३ (१) दनूया इति बिन्दु-वृ-ल-चौ-य।

सू० ३४ (१) त्रतैक इति भाटि-य-टुप्-रत्नख।

सू० ३७ सति च शब्दवचनं इति य। प्राचीनलेखगतसव्यशब्दस्य वाचनं य-पुस्तकलेखकेन अन्यथाकृतमिति संभाव्यते न तु निश्चयः।

सू० ३८ (१) चेदन्तमुत्तरेणैकं य।

सू० ३९ (१) स्वात् इति वि-शा-पाठस्तु अनवधानात्। (२) मुख्यात् इति वि-शा।

अधि० १५ प्रयाजद्वयस्य समानयनादिप्रयोजकत्वं इति भा। ‘किं समानयनमाज्यस्य धर्माणां च प्रयोजकमुत अप्रयोजकं’ इति संशयमुपन्यस्य ‘तस्मात् प्रयोजकं समानयनं’ इति सिद्धान्तकरणात् आदिशब्दो व्यर्थः शीर्षके। किं च समानयनं प्रयोज्यं वा प्रयोजकं वा इति निर्णयोपि शीर्षकान्न भवति। समानयनस्याज्यधर्मप्रयोजकता इति म-सा-वि-भाट्ट-शा-वृ। समानयनस्याज्यप्रयोज्यता इति बिन्दुः। प्रयोजकताशब्दस्य स्थाने प्रयोज्यताशब्दः प्रयुक्त इति वैपरीत्यं संजातमत्र। समानयनस्याज्ये धर्मप्रयोजकता इदमपि अशुद्धमेव ल-शीर्षकम्।

४० समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात्। ३७ य, १३ बिन्दुः.

४१ वचने हि हेत्वसामर्थ्यम्। ३८ य.

अधि० १६, १८ मण्डनः, १५ म-सा-वृ, १४ बिन्दुः.

४२ तत्रोत्पत्तिरविभक्ता स्यात्। ३९ य, १४ बिन्दुः.

४३ तत्र जौहवमनुयाजप्रतिषेधार्थम्। ४० य.

४४ औपभृतं तथेति चेत्। ४१ य.

४५ स्याज्जुहूप्रतिषेधान्नित्यानुवादः। ४१ य.

अधि० १७, १९ मण्डनः, १६ म-सा-वृ, १५ बिन्दुः.

४६ तदष्टसंख्यं श्रवणात्। ४२ य, १५ बिन्दुः.

४७ अनुग्रहाच्च जौहवस्य। ४३ य.

४८ द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने। ४४ य.

न्यायास्त्वेकोनाविंशतिः ॥

अथ तत्र एक अभि औप चतुश्चत्वारिंशत् ॥

॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥

॥ अथ चतुर्थाध्यायस्य द्वितीयः पादः ॥

अधि० १.

१ स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात्।

२ जात्यन्तराच्च शङ्क्यते।

३ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात्।

४ शकलश्रुतेश्च।

५ प्रतियूपं च दर्शनात्।

६ आदाने करोतिशब्दः।

---

सू० ४१ (१) मर्थ्यं इति भा-म-सा-वि-भाट्ट-शा-चौ। मर्थ्यं इति वृ-ल-य। अत्र भाष्य-मूलं "वचने हि हेतुरसमर्थितः स्यात्। नहि अत्रानुयाजान् यक्ष्यन् भवति इति" इति। तेन प्रथमान्ततैव सिद्धा भवतीति मन्यामहे।

अधि० १६ औपभृतजौहवयोः क्रमेणोभयानुभयार्थता इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ-ल। औपभृताज्यस्य प्रयाजानुयाजार्थता इति भा।

सू० ४३ (१) मनूया इति वृ-ल-य।

सू० ४४ (१) चेदन्तमुत्तरेणैकं य।

अधि० १७ उपभृति चतुर्गृहीतद्वयविधानार्थता इति भा। किं तत् द्वयविधानार्थं ? 'उपभृति चतुर्गृहीतद्वयविधानं' इति युक्तम्। उपभृति द्विचतुर्गृहीतं इति बिन्दुः। उपभृति द्विचतुर्गृहीताचरणं इति म-सा-वि-भाट्ट-शा-ल। उपभृति द्विश्चतुर्गृहीताचरणं इति वृ। भा-भिन्नशीर्षकत्रयस्य कोर्थः कथं समासः कथमन्वयः इति संपादका अपि जानन्ति न वेति संदेह एवास्माकम्।

सू० ४८ (१) णं तु स इति य।

अधिकरणप्रदर्शकाः सूत्रपाठप्रदर्शकाश्च ग्रन्थाः चतुर्थाध्यायस्य प्रथमपादादौ निर्दिष्टा एव।

अधि० १ स्वरोश्छेदनाद्यप्रयोजकता इति सर्वे ग्रन्थाः।

सू० १ (१) निष्पन्नः स्व इति शाटि।

सू० २ (१) अत्र शङ्कते इति कर्तरिप्रयोगात् शङ्क्यते इति कर्मकर्तरिप्रयोगो युक्तो भाति। अत एव 'अन्यत्वक्षाशङ्का नोपपद्येत' इति भाष्यं युज्यते। शङ्कते इति तु य-भिन्नाः सर्वे।

अत्र सूत्रषट्कं भाष्ये द्विर्व्याख्यातं अर्थस्तु न भिन्नः। तत्रोक्तं भा-टिप्पण्यां 'आनुपूर्वीवैलक्षण्यमात्रेणैकार्थप्रतिपादनपरं भाष्यं कस्मिंश्चिल्लिखितपुस्तके उपलभ्यते नान्यस्मिन्' इति। म-सा पुस्तकयोश्च मुद्रितं तत्। तन्त्ररत्नमत्र 'व्याख्यानान्तरं तु विस्तरोक्तस्य संक्षेपमात्रार्थं कृतं भाष्यकारेणेति न व्याख्यायते' इति। इदं तन्त्ररत्नं म-पुस्तके टिप्पण्यामुदाहृतमेव।

सू० ४ (१) च-शब्दो नास्ति वृ-य।

सू० ६ (१) कर्मशब्दः इति वृ-टी-रत्न। ३।७।३३ सूत्रान्ते वार्तिकेपि "तस्माद् यथा 'यूपस्य स्वरुं करोति' इत्यत्र 'आदाने कर्मशब्दः' इति वक्ष्यति" इति पङ्क्तिः। तेन वृ-पाठ एव वार्तिकसंमत इति भाति। तत्रैव सुधायां "कर्मवाचिनः

अधि० २.

७ शाखायां तत्प्रधानत्वात् । २ बिन्दुः.

अधि० ३.

८ शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद् वैषम्यं तत् । ३ बिन्दुः.

९ श्रुत्यपायाच्च ।

अधि० ४.

१० हरणे तु जुहोतिर्योगसामान्याद् द्रव्याणां चार्थशेषत्वात् । ४ बिन्दुः.

११ प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ।

१२ अर्थेऽपीति चेत् ।

१३ न तस्यानधिकारादर्थस्य च कृतत्वात् । १२ य.

अधि० ५.

१४ उत्पत्त्यसंयोगात् प्रणीतानामाज्यवद् विभागः स्यात् । १३ य, ५ बिन्दुः.

१५ संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् । १४ य.

अधि० ६.

१६ प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् । १५ य, ६ बिन्दुः.

१७ अर्थकर्म वा कर्तृसंयोगात् स्रग्वत् । १६ य.

---

करोतिशब्दस्य उपादानार्थत्वं यथा चतुर्थाधिकरणसूत्रे वक्ष्यते तथा भाष्यकृतः ( वरणेन ऋत्विजः ) क्रियन्ते इत्यभिधानं उपादानार्थमित्याह । तस्मादिति । ” इत्युक्तम् । तेन वार्तिकसुधासंमतः पाठः ‘ कर्मशब्दः ’ इत्येवेति सिध्यतीति मन्यामहे । प्रकृतसूत्रगतभाष्यात्तु ‘ करोतिशब्दः ’ इत्येव पाठः सिध्यति । इति संकटे पतिता वयं यथास्थितमेव पाठं स्वीकुर्मः ।

अधि० २ शाखाया आहार्यता इति भा-भिन्नाः सर्वे । शाखावादः इति भा ।

सू० ७ ‘ शाखायां तत्प्रधानत्वात् ’ इति सप्तमं सूत्रं च अष्टमसूत्रैकदेशश्चेति द्विः पठितम् । तत् किं वस्तुत एव तथा द्विःपाठः, उत्तरसूत्रैकदेशमेव पृथक्कृत्य अधिकरणान्तरपरत्वेन व्याख्यानं वेति न निश्चयोऽस्माकम् ।

अधि० ३ छेदनस्य शाखाप्रयुक्तता इति भाभिन्नाः सर्वे । शाखायाश्छेदनादिप्रयोजकत्वं इति भा ।

सू० ८ (१) भागात् स्याद् इति भाट्ट । ( २ ) स्यादन्तमेव सूत्रं मटि । ( ३ ) षम्यात् इति शा-बिन्दु-वृ-ल-य-टुप्-टी ।

अधि० ४ शाखाप्रहरणस्य प्रतिपत्तिकर्मता इति सर्वे ।

सू० १० ( १ ) णे जु इति बिन्दु-वृ-ल । (२) तिर्योग इति भाट्ट-शा । ( ३ ) णां वार्थ इति शाटि । चार्थविशे इति भाट्ट ।

सू० १२ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० ५ निनयनस्य प्रतिपत्तिकर्मता इति भा-वृभिन्नाः । प्रणीतानां संयवनप्रयुक्तता इति भा । प्रणीतानिनयनस्य प्रतिपत्तिकर्मता इति वृ । इत आरभ्य पञ्चानामधिकरणानां प्रतिपत्तिविचारार्थत्वात् भा-भिन्न-शीर्षकमेव साधीयस्त्वं भजते ।

सू० १४ ( १ ) विकारः स्यात् इति टुप् । तन्त्ररत्ने तु विभाग इत्येव पाठः ।

सू० १५ ( १ ) नां या प्र इति वृ-ल । वृ-मूले तु याशब्दो नास्ति । ‘ सिद्धान्तमाह ’ इत्यवतरणाच्च वा-शब्द एव वृ-सूत्रेऽपि आवश्यकः सिध्यति ।

अधि० ६ दण्डदानस्यार्थकर्मता इति भा-भिन्नाः सर्वे । मैत्रावरुणाय दण्डदानस्यार्थकर्मत्वं इति भा ।

सू० १६ ( १ ) रुणस्य द इति वृ-ल । वृ-मूले तु मैत्रावरुणाय इति चतुर्थ्येव ।

सू० १७ ( १ ) स्रुग्वत् इति टुप्-टी । तन्त्ररत्ने तु एतद्विषये न किमपि । भाष्यमूले तु ‘स्रग्वच्च द्रष्टव्यं यथा स्रजमुद्गात्रे ददाति ’ इत्युक्तत्वात् स्रग्वत् इत्येव पाठः स्पष्टः ।

१८ कर्मयुक्ते च दर्शनात् । १७ य.

अधि० ७.

१९ उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् । १८ य, ७ बिन्दुः.

अधि० ८.

२० सौमिके च कृतार्थत्वात् । १९ य, ८ बिन्दुः.

२१ अर्थकर्म वाऽभिधानसंयोगात् । २० य.

२२ प्रतिपत्तिर्वा तन्न्यायत्वाद् देशार्थोऽवभृथश्रुतिः । २१ य.

अधि० ९.

२३ कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् । २२ य, ९ बिन्दुः.

२४ नियमार्था वा श्रुतिः । २३ य.

अधि० १०.

२५ तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् । २४ य, १० बिन्दुः.

अधि० ११.

२६ संस्कारे च तत्प्रधानत्वात् । २५ य, ११ बिन्दुः.

अधि० १२, १० भाट्ट.

२७ यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् । २६ य, १२ बिन्दुः.

---

अधि० ७ कृष्णविषाणाप्रासनस्य प्रतिपत्तिकर्मता इति भा । प्रासनस्य प्रतिपत्तिकर्मता इति भा-भिन्नाः ।

सू० १९ इदं सूत्रं भाष्ये पूर्वाधिकरणगुणसूत्रत्वेन व्याख्याय ' अथवा अधिकरणान्तरं ' इत्युपक्रम्यापि व्याख्यातम् । संपादकैश्च अधिकरणाङ्को वर्धितो निवेशितः । ( १ ) क्तं तत्तदर्थं श्रुति इति रत्नखमूले ४।२।१४ सूत्रे पाठः । अत्र तु ' क्तं तदर्थं तच्छ्रुति ' इति पाठः । उभयथा तु पाठो नैव संगच्छते । क्तं तदर्थं श्रु इति शा –य । मयूखमालिकायां ' यद्येन संयुक्तं तत्तदर्थमेव स्यात् ' इति पङ्क्तिः ( २ ) मनशे इति शा । नेऽशे इति बिन्दु–वृ ।

अधि० ८ अवभृथगमनस्य प्रतिपत्तिकर्मता इति सर्वे ।

अधि० ९ कर्तृदेशकालविधीनां नियमविधानार्थता इति भा । कर्तृदेशकालविधीनां नियमार्थता इति भा–भाट्टभिन्नाः । कर्तृदेशकालादिविधीनां नियमार्थता इति भाट्ट । अत्रादिपदेन द्रव्यगुणसंस्कारा गृहीता भाट्टमूले । परंतु ' तथा द्रव्येषु०, संस्कारे च० ' इति सूत्रद्वयं, यत् किल भाष्यादौ दशमैकादशाधिकरणत्वेन व्याख्यातं, तत् नवमाधिकरणे एवान्तर्भावितं भाट्टे । तेनात्रैव तावत् अधिकरणसंख्या द्वाभ्यां न्यूना स्यात् भाट्टे ।

सू० २४ ( १ ) वा पुनः श्रुतिः इति वृ–ल । ( २ ) श्रुतिरुच्यते इति य ।

अधि० १० द्रव्यगुणविधानस्य नियमार्थता इति म–सा–वि–शा–ल । द्रव्ये गुणविधानस्य नियमार्थता इति बिन्दु–वृ । द्रव्ये गुणश्रुतेर्नियमविधानार्थता इति भा ।

सू० २५ ( १ ) व्ये गु इति शा–य ।

अधि० ११ अवघातादिसंस्कारविधानस्य नियमार्थता इति म–सा–वि–शा–वृ–ल । अवघातादिसंस्कारविधेर्नियमविधित्वं इति भा । अवघातादिसंस्कारविधेर्नियमार्थता इति बिन्दुः ।

अधि० १२ यागपदार्थनिरूपणं इति वृ । यागलक्षणं इति भा । यागस्वरूपनिरुपणं इति म–सा–रत्नख । यागहोमस्वरूपनिरूपणं इति वि–भाट्ट–शा –ल । अत्र भाट्टे ' तदुक्ते श्रवणात्० ' इति सूत्रमपि अत्र दशमाधिकरणे एवान्तर्भावितं तत एव चात्र शीर्षके होमशब्दस्य प्रवेशः । एवं वि–शा –ल इत्यत्रापि । परंतु वि–शा–ल इत्यत्र एकादशाधिकरणे ' तदुक्ते श्रवणात्० ' इति सूत्रस्यान्तर्भाव इति विशेषः ।

सू० २७ ( १ ) येऽक्र इति टुप्–सूत्रे, टुप्–मूले तु ये क्र इत्येव । अत्र न्यायबिन्दौ ' याग–होमस्वरूपनिरूपणाधिकरणे इति द्विवचनान्तं पदं निवेश्य

अधि० १३.

२८ तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्। २७ य, १३ बिन्दुः.

अधि० १४ भा-म-सा-बिन्दु १५ वि-मण्डनः. १३ वि-शा-ल, ११ भाट्ट.

२९ विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात्। ३० वृ-ल, २८ य, १४ बिन्दुः.

३० अपि वोत्पत्तिसंयोगादर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात्। ३१ वृ-ल, २९ य.

न्यायास्तु पादे द्वय पञ्च चात्र ॥

स्वरूः प्रतिपत्तिः प्रतिपत्तिर्नवविंशतिः ॥

॥ इति चतुर्थाध्यायस्य द्वितीयः पादः समाप्तः ॥

॥ अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

अधि० १.

---

' यजति-चोदना०, तदुक्ते० ' इति सूत्रद्वयं निवेशितम्। अधिकरणाङ्कौ च ' ॥ १३ ॥ १४ ॥ ' इति निवेशितौ।

अधि० १३ होमपदार्थनिरूपणं इति वृ। होमलक्षणं इति भा। होमस्वरूपनिरूपणं इति म-सा रत्नख।

सू० २८ इदं सूत्रं पूर्वाधिकरणेऽन्तर्भावितं वि-भाट्ट-शा-ल। ( १ ) तदुक्तेः श्र इति शा।

( अधि० १४ वृ-मण्डनौ ) ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्धः। २९। इदमधिकं सूत्रं वृ। इयं भाष्यपङ्क्तिरेवोपलभ्यते। न तत् सूत्रम्। मण्डनमतेनापि चतुर्दशमिदं पृथगधिकरणं, तेनेदं सूत्रं तन्मतेनापि संग्राह्यं भवति। अत्र तन्त्ररत्नं ' एवं ददातेरपि आत्रेयाय ददाति इति चोदितस्य अनुष्ठानकथनमेव असौत्रमपि उपलक्षणार्थं सूत्रमितिकृत्वा भाष्ये क्रियते इति '। ' तेन ददातिरुत्सर्ग०' इति न सूत्रं इति तन्त्ररत्नमतम्। शीर्षकं तु, दानपदार्थनिरूपणं इति वृ।

अधि० १४ इदमधिकरणं भा-म-सा-बिन्दु-मतेन चतुर्दशम्। वृ-मण्डनमतेन पञ्चदशम्। वि-शा-ल-मतेन त्रयोदशम्। भाट्टमतेन तु एकादशम्। आतिथ्यादीनां बर्हिःसाधारण्यं इति भा। बर्हिष आतिथ्यादिसाधारण्यं इति भा-भिन्नाः सर्वे। अत्र शीर्षकद्वये उद्देश्यविधेयभाववैपरीत्यं दृश्यते। तत्र भा-शीर्षके आतिथ्या उद्देश्या बर्हिःसाधारण्यं विधेयं, भा-भिन्न-शीर्षके तु बर्हिरुद्देश्यं आतिथ्यादिसाधारण्यं विधेयं इति। तत्रोभयोः किं युक्तमिति विचारे भा-भिन्नमेव शीर्षकं युक्तमिति मन्यामहे मूलानुसारात्। तथाहि, भाष्यमूले तावत् ' यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य ' इति वाक्ये किं परद्रव्यस्योपदेशः उत एकत्रोपयुक्तस्य द्रव्यस्यान्यत्रोपदेशः अथवा धर्मविधिः अथवा बर्हिः साधारणं इति संशय उपन्यस्तः। ' बर्हिः साधारणं ' इत्यर्थस्य वाक्ये उपदेशः इति च सिद्धान्तः कथितः। तथा च आतिथ्याया एव बर्हिः, किंतु यथा तद् बर्हिः आतिथ्याया अस्ति, तथैव तत् उपसदामप्यस्ति अग्नीषोमीयस्य चाप्यस्ति त्रयाणां मिलित्वा तदेकं, बर्हिषस्तादृशी एवैका शक्तिः, या आतिथ्यानुष्ठानमात्रेण न नश्यति। आतिथ्योपसदग्नीषोमीयेषु त्रिष्वनुष्ठितेषु तु तद्बर्हिः निर्माल्यं स्यात्, तावत्तु तन्नवमेव, इति ' यदातिथ्यायां ' इत्यादिवचनात् सिध्यति। तथा च बर्हिः आतिथ्याबर्हिर्वा उद्दिश्य त्रितयसाधारण्यं विधेयं इति सिध्यति। तस्मात् भा-शीर्षकमयुक्तमिति मन्यामहे। ' आतिथ्यादीनां साधारणबर्हिष्ट्वं ' इति वा वक्तव्यम्।

सू० ३० ( १ ) अपि चोत्प इति रत्नख। ( २ ) न्धो वि इति वृ-ल-टुप् ( ३ ) कत्वे हे इति वृ।

अधि० १ द्रव्यसंस्कारकर्मणां क्रत्वर्थता इति भा-भिन्नाः सर्वे। द्रव्यसंस्कारकर्मणां फलप्रयुक्तत्वाभावः इति भा। अत्राधिकरणे ' फलविधयः अर्थवादा वा ' इति विचार्य अर्थवादत्वं सिद्धान्तितं, तेन शीर्षकद्वयमपीदं न युक्तं, किंतु ' द्रव्यसंस्कार-

१ द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ।

२ उत्पत्तेश्चातत्प्रधानत्वात् ।

३ फलं तु तत्प्रधानायाम् । ४ य.

अधि० २.

४ नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यैत् स्यात् । ५ य, ३ वृ, २ बिन्दुः.

अधि० ३.

५ एकस्य तूभयत्वे संयोगपृथक्त्वम् । ६ य, ४ वृ, ३ बिन्दुः.

६ शेष इति चेत् । ७ य, ५ वृ.

७ नार्थपृथक्त्वात् । ७ य, ६ वृ.

अधि० ४.

८ द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् । ७ वृ, ४ बिन्दुः.

९ पृथक्त्वाद् व्यवतिष्ठेत । ८ वृ.

अधि० ५.

१० चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत नह्यशब्दं प्रतीयते । ९ वृ, ५ बिन्दुः.

---

कर्मसु फलश्रुतेरर्थवादत्वं ' इति शीर्षकमेव युक्तं मन्यामहे ।

सू० १ ( १ ) स्यात्पदं नास्ति टुप् ।

सू० २ एतत्सूत्रोत्तरं ' आनर्थक्यमक्रियार्थत्वात् ' इति तृतीयसूत्रत्वेन य-पुस्तके लिखितम् । द्वितीयसूत्रस्य भाष्यान्ते तु इयं पङ्क्तिरुपलभ्यते । परंतु तत्र सूत्रत्वं न भाति । सा च पङ्क्तिरित्थं ' तस्मादेवंजातीयकेषु उच्चारितेषु न क्वचित् प्रवृत्तिर्न कुतश्चिन्निवृत्तिरिति आनर्थक्यमक्रियार्थत्वात् । अर्थवादे तु सति भवति प्रयोजनम् ' इति ।

सू० ३ नास्तीदं सूत्रं वृ ।

अधि० २ गोदोहनादीनामनित्यार्थत्वं इति वृ । नैमित्तिकादीनामनित्यार्थता इति भाट्ट । नैमित्तिकानामनित्यार्थत्वं इति वि-शा-ल । नैमित्तिकानां नित्यत्वप्रयुक्तत्वाभावः इति भा । नैमित्तिकानां बार्हद्गिरादीनामनित्यार्थत्वं इति म-सा-रत्नख । नैमित्तिकानां मृन्मयीत्वादीनामनित्यता इति बिन्दुः ।

अत्र शीर्षकाणां तुमुलं रणसंकुलम् । परंतु तत्र प्रायः ' अनित्यार्थत्वं ' इति समानम् । गोदोहनादीनां अनित्यार्थत्वं-गोदोहनादयः अनित्यार्थाः । अत्र अनित्याय इति अनित्यार्थाः इति अर्थेन नित्यसमासो वा अनित्योऽर्थो येषामिति वा समासोऽभिप्रेयेत । उभयथापि गोदोहनादीनां पशुरूपोऽर्थः अनित्यः इत्यर्थः स्यात् । अनित्यत्वं च द्वेधा विनाशित्वं च कादाचित्कत्वं चेति । सर्वथापि अयुक्तानि शीर्षकाणि । बिन्दु-शीर्षकं भा-शीर्षकं च युक्तम् ।

सू० ४ ( १ ) न्यत्तु स्यात् इति य । स्यात्पदं नास्ति शाटि ।

अधि० ३ दध्यादेरुभयार्थता इति भा । दध्यादेर्नित्यनैमित्तिकोभयार्थत्वं इति म-सा-भाट्ट-बिन्दु--वृ-ल-रत्नख । संयोगपृथक्त्वन्यायः इति म-सा-वि-भाट्ट-बिन्दु-ल । संयोगपृथक्त्वन्याये दध्यादेर्नित्यनैमित्तिकोभयार्थता इति वि-शा । न्याये इत्यस्य क्वान्वयः ? अयुक्तमिदं शीर्षकम् ।

सू० ६ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० ४ पयोव्रतादीनां क्रतुधर्मता इति भा-बिन्दुभिन्नाः । पयोव्रतादीनां क्रत्वर्थता इति भा-बिन्दुः ।

सू० ८ ( १ ) क्रतुधर्मत्वात् इति वृ-ल । क्रतधर्मः इति य ।

अधि० ५ विश्वजिदादीनां फलवत्त्वं इति भा-बिन्दुः । विश्वजिदादीनां सफलत्वं इति म-सा-वि-शा-वृ-ल-रत्नख । विश्वजिदादीनां सफलत्वादिकं इति भाट्ट । विश्वजिन्न्यायः ५-६-७ इति म-सा-वि-ल ।

सू० १० ( १ ) त्रं प्रतीयेत इति शा-य । त्रं विधीयते न इति वृ-टुप्-रत्नख । त्रं प्रतीयते न इति बिन्दुः । ( २ ) ब्दं विधीयते इति वृ । ब्दं प्रतीयेत इति बिन्दुः ।

११ अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धस्तस्माच्छ्रुत्येकदेशः सः । १० वृ.

१२ वाक्यार्थश्च गुणार्थवत् ।
अधि० ६ भाट्ट-बिन्दुभिन्नाः.

१३ तत् सर्वार्थमनादेशात् । ११ वृ.

१४ एकं वा चोदनैकत्वात् । १२ वृ.
अधि० ७ भाट्ट-बिन्दुभिन्नाः ।

१५ स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् । १३ वृ.

१६ प्रत्ययाच्च । १४ वृ.
अधि० ८, ६ भाट्ट-बिन्दुः.

१७ क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः । १५ वृ, ६ बिन्दुः.

१८ फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् । १६ वृ.

१९ अङ्गेषु स्तुतिः परार्थत्वात् । १७ वृ.
अधि० ९, ७ भाट्ट-बिन्दुः.

२० काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः । १८ वृ, ७ बिन्दुः.

२१ वीते च कारणे नियमात् । १९ वृ.

२२ कामो वा तत्संयोगेन चोद्यते । २० वृ.

२३ अङ्गे गुणत्वात् । २१ वृ.

२४ वीते च नियमस्तदर्थम् । २२ वृ.
अधि० १०, ८ भाट्ट-बिदुः.

२५ सार्वकाम्यमङ्गकामैः प्रकरणात् । २३ वृ, ८ बिन्दुः.

२६ फलोपदेशो वा प्रधानशब्दसंप्रयोगात् । २४ वृ.

---

सू० ११ (१) गम्यतेऽर्था इति वि-भाट्ट-शा । (२) र्थानामर्थ इति वृ-ल । (३) तोऽप्यस इति ल । तोऽस इति वृ । (४) र्येण सं इति वृ । (५) सः इति पदं नास्ति वि-भाट्ट-शा-रत्नख ।

सू० १२ नास्तीदं सूत्रं वृ ।

अधि० ६ चोदनायां इति दशमसूत्रमारभ्य प्रत्ययाच्च इति षोडशसूत्रान्तं पञ्चममेकमेवाधिकरणं, तेन भाट्टे बिन्दौ च इदमुत्तरं चेति द्वे अधिकरणे पृथङ् न स्तः ।

विश्वजिदादीनामेकफलवत्त्वं इति वृ । विश्वजिदादीनामेकफलता इति म-सा-वि-शा-ल-रत्नख । विश्वजिदादेरेकफलवत्त्वं इति भा ।

अधि० ७ विश्वजिदादीनां स्वर्गफलकत्वं इति वृ । विश्वजिदादीनां स्वर्गफलता इति म-सा-वि-शा-ल-रत्नख । विश्वजिदादेः स्वर्गफलकत्वं इति भा ।

सू० १५ (१) त्वविशि इति भाट्ट-पाठस्तु न शुद्धः ।

अधि० ८ रात्रिसत्रं इति म-सा-वि-भाट्ट । रात्रिसत्रस्य आर्थवादिकफलकत्वं इति बिन्दु-भिन्नाः सर्वे । रात्रिसत्रस्य आर्थवादिकफलता इति बिन्दुः ।

सू० १९ (१) अङ्गे स्तु इति य ।

अधि० ९ काम्याना यथोक्तकामफलकत्वं इति बिन्दुः । काम्यानां यथोक्तकाम्यफलकत्वं इति म-सा-वि-भाट्ट-वृ-ल-रत्नख । काम्यानां यथोक्तकाम्यफलता इति शा । प्रायः सर्वत्र शीर्षकविषये म-सा-वि-भाट्ट-शा-ल इत्येतेषामैकमत्यं भवति, अत्रैव कस्मात् शा-संपादकैर्भिन्नता स्वीकृता ? स्ववाक्यश्रुतफलकानां स्वर्गफलकत्वाभावः इति भा । भा-शीर्षकमेव स्वमूलानुसारि, इतरत्तु न तत्तन्मूलानुसारि अन्धपरंपरया तु म-शीर्षकानुसरणं सर्वत्र ।

सू० २१ (१) विहते च इति य ।

सू० २३ (१) गुणभूतत्वात् इति य ।

सू० २४ (१) चशब्दो नास्ति वृ । विहते नियमात्तदर्थं इति सूत्रं य ।

अधि० १० दर्शपूर्णमासन्यायः इति म-सा-वि भाट्ट-रत्नख । दर्शपूर्णमासादीनां सर्वकामार्थता इति वृ-भिन्नाः सर्वे । दर्शपूर्णमासादीनां सर्वार्थत्वं इति वृ ।

सू० २६ (१) संयो इति वि- भाट्ट-शा-वृ ल-चौ-थ-टुप्-टी । भा-मूलेऽपि संप्रयोगशब्दो नास्त्येव । भाष्यपङ्क्तिस्तावदित्थं ' फलविधिर्वा

अधि० ११ भा-म-सा शा-बृ-ल-मण्डन -रत्नख, ११-१२ वि, ९ भाट्ट-बिन्दुः.

२७ तत्र सर्वेऽविशेषात् । २५ बृ, ९ बिन्दुः.

(अधि० १२ शा-ल मण्डनः, १० बिन्दुः.)

२८ योगसिद्धिर्वाऽर्थस्योत्[1]पत्त्य[2]संयोगि[3]त्वात् ।

२६ बृ, १० बिन्दुः.

अधि० १२ भा-बृ, १३ म-सा-वि-शा-ल-मण्डन -रत्नख, ११ बिन्दुः, १० भाट्ट.

कुतः । प्रधानशब्देन फलसंयोगो भवति ' । इति । वस्तुतस्तु अनया भाष्यपङ्क्त्या ' फलविधिर्वा प्रधानशब्दसंयोगात् ' इत्येव सूत्रं सिध्यति । उपदेशशब्दस्य विधिपदेन, संप्रयोगशब्दस्य च संयोगशब्देन व्याख्यानं भाष्यकारैः कृतं इति कल्पनायां तु न किंचिन्मूलम् ।

अधि० ११ अत्र भा-पुस्तके ' तत्र सर्वे०योगसिद्धिर्वा० ' इति सूत्रद्वयात्मकमेकादशमधिकरणं, तेनैव सूत्रद्वयेन च वर्णकान्तरं न तु अधिकरणान्तरम् । म-सा-पुस्तकयोस्तु तस्मिन्नेव वर्णकान्तरे द्वादशाङ्को निवेशितः । तेन भा-पुस्तकात् म-सा पुस्तकयोरेकमधिकरणमधिकमेव संजातं, उत्तरत्रापि चैवंक्रमेण वृद्धिरेव । एवं विस्तरेपि । भाट्टे तु भा-वत् वर्णकद्वयं परंतु नवमाधिकरणे वर्णकद्वयमिति विशेषः । शास्त्रदीपिकायां तु तत्र सर्वे० इति सूत्रे एकादशमधिकरणं, योगसिद्धिसूत्रे तु द्वादशमधिकरणं इति व्यवस्था संपादकैः संपादिता । सोमनाथस्य तु भा-वदेव शास्त्रदीपिकायामपि वर्णकद्वयं, न तु एकैकसूत्रेण एकैकमधिकरणं इत्यभिप्रायः । उक्तं च सोमनाथेन " वर्णकान्तरोपक्रमे यथाभाष्यं ' एवं वा ' इत्येवमेव ग्रन्थकारेण सर्वत्र लिख्यते । इह तु वैचित्र्यात् योगसिद्धिर्वा इति सिद्धान्तसूत्रं लिखितं बोध्यं " इति । परंतु सोमनाथोक्तं दीपिकासंमतं नवेति संशय एव । बिन्दुमूले तु प्रतिसूत्रमधिकरणान्तरत्वमेव दृश्यते, ते चाधिकरणे नवमदशमे इति विशेषः ।

अथ शीर्षकाणि । दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानं इति म-सा-वि-भाट्ट-शा-बृ-ल-रत्नख । दर्शपूर्णमासादेः प्रतिफलं पृथगनुष्ठानं इति बिन्दुः । दर्शादीनां प्रतिफलं पृथगनुष्ठानं इति बृ । योगसिद्धिः इति भा-म-वि-भाट्ट-ल-रत्नख ।

अथ वर्णकान्तरे शीर्षकाणि । काम्यानामैहिकामुष्मिकफलवत्त्वं इति म-सा-वि-शा-ल । पुत्रवृष्ट्यादेः कर्मफलस्य ऐहिकामुष्मिकत्वप्रतिपादनं इति भा । फलानामैहिकामुष्मिकोभयार्थता इति बिन्दुः ।

अत्र भाष्यगतं द्वितीयं वर्णकमधिकरणान्तरं द्वादशं कृत्वा १२ अङ्को मुद्रितो म-पुस्तके, उत्तरोत्तरत्र च एकैकवृद्ध्यैव अधिकरणाङ्काः प्रदत्तास्तन्न युक्तम् । ननु वर्णकान्तरस्य अधिकरणान्तरत्वेन स्वीकारो न दोषाय, कुतो महेशचन्द्रायासूयते इति चेत्, तत्र पृच्छामः चतुर्थप्रथमपादीयद्वितीयसूत्रे सत्यपि भिन्नविषये वर्णकत्रये, हन्त तत्रभवद्भिः कुतो न स्वीकृतानि अधिकरणान्तराणि कस्माच्चैकमेव द्वितीयं नामाधिकरणमेव स्वीकृतम् ? एतेन चतुर्थद्वितीयपादीयानि आदिमानि षडपि सूत्राणि यद्यपि विषयान्तरप्रतिपादकवर्णकान्तरत्वेन व्याख्यातानि, तथापि यत् वर्णकद्वयं भिन्नविषयकमपि प्रथमाधिकरणं नामैकमेव स्वीकृतं महाशयैः तद् व्याख्यातम् ।

सू० २८ ( १ ) स्योपपत्त्यसं इति शाटि । ( २ ) त्त्ययो इति शा-बिन्दु-य-टुप्-रत्नख । ( ३ ) योगात् इति बृ-ल-टी ।

अधि० १२ बृहस्पतिसवादेर्वाजपेयादिशेषता इति बिन्दुः । सौत्रामण्यादीनां चयनाद्यङ्गता इति म-सा-वि-भाट्ट-शा-बृ-ल-रत्नख । सौत्रामण्यादेश्चयनाद्यङ्गता इति भा । अत्र शा-मूले सौत्रामण्या नामापि नास्ति । विस्तरे प्रथमतो बृहस्पतिसववाक्यमुदाहृतं एवं शास्त्रदीपिकायामपि, तथापि शीर्षके सौत्रामण्यादेः इति निवेशितम् । संपादकाः किल मूलमदृष्ट्वैव प्राचीनग्रन्थे यथादृष्टमेव शीर्षकं स्वीकुर्वन्तीति धन्यास्ते, नमस्तेभ्यः ।

२९ समवाये चोदना संयोगस्यार्थवत्त्वात् । २७ वृ, ११ बिन्दुः.

३० कालश्रुतौ काल इति चेत् । २८ वृ.

३१ नासमवायात् प्रयोजनेन स्यात् । २९ वृ, ३० य.

अधि० १३ भा-वृ, १४ म-सा-वि-शा-ल-मण्डन-रत्नख, १२ बिन्दुः, ११ भाट्ट.

३२ उभयार्थमिति चेत् । ३० वृ, ३१ य, १२ बिन्दुः.

३३ न शब्दैकत्वात् । ३१ वृ-य.

३४ प्रकरणादिति चेत् । ३२ वृ-य.

३५ नोत्पत्तिसंयोगात् । ३३ वृ, ३२ य.

अधि० १४ भा-वृ, १५ म-सा-वि-शा-ल-मण्डन-रत्नख, १३ बिन्दुः, १२ भाट्ट.

३६ अनुत्पत्तौ तु कालः स्यात्, प्रयोजनेन संबन्धात् । ३४ वृ, ३३ य, १३ बिन्दुः.

अधि० १५भा-वृ, १६ म-सा-वि-शा-ल-मण्डन-रत्नख, १४ बिन्दुः, १३ भाट्ट.

३७ उत्पत्तिकालविशये कालः स्याद्, वाक्यस्य तत्प्रधानत्वात् । ३५ वृ, ३४ य, १४ बिन्दुः.

अधि० १६ भा-वृ, १७ म-सा-वि-शा-ल-मण्डन-रत्नख, १५ बिन्दुः, १४ भाट्ट.

---

सू० २९ यद्यपि वृ-बिन्दुभिन्नेषु ग्रन्थेषु चोदनासंयोगस्येति पदं सामासिकं मत्वा मुद्रितं तथापि चोदना इति पदमसमस्तमेव मन्यामहे, वृत्तौ च तथा स्पष्टमेव ।

सू० ३० ( १ ) श्रुतेः का इति भाटि ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० ३१ ( १ ) स्यात्-पदं नास्ति वृ-ल । अत्र भाष्ये 'नैतदेवं असमवायात् शब्दप्रयोजनेन शब्दार्थेनेत्यर्थः' इत्युक्तं, तेन मन्यामहे तथैव सूत्रे पाठः स्यादिति । परंतु अन्यत्र क्वापि तथा न लभ्यते।

अधि० १३ वैमृधस्य पूर्णमास्यङ्गता इति बिन्दुः । पूर्णमासी इत्यत्र पौर्णमासी इत्यावश्यकम् । वैमृधस्य पौर्णमास्यङ्गता इति वृ । वैमृधस्य पौर्णमासीमात्राङ्गता इति भा । वैमृधादेः पौर्णमास्याद्यङ्गता इति म-सा-वि-भाट्ट-शा-ल-रत्नख ।ननु आदिशब्दाभ्यां किं ग्रहीष्यते ? तत्तन्मूले तु न किमपि । अधिकरणानां सर्वतोमुखत्वात्तु कथंचित्संगमनीयम् ।

सू० ३२ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ३४ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० १४ अनुयाजादीनामाग्निमारुतोत्तरकरणता इति बिन्दुः । यद्यपि करणं कृतिः अनुष्ठानं इति पर्यायास्तथापि मराठीभाषायां 'करणें' इति शब्दस्य योर्थः तस्मिन्नर्थे संस्कृते करणशब्दस्य प्रयोगो न दृश्यते किंतु 'साधकतमं करणं' इत्यर्थे एव प्रयोगः । तेन बिन्दुशीर्षकगतकरणशब्दे अप्रयुक्ततादोषः संभवति । अनुयाजादीनां आग्निमारुतोर्ध्वकालता इति म-सा-वि-भाट्ट-शा-ल-रत्नख । शा-ल इत्यत्र तु अनूयाज इति दीर्घप्रयोगः इति विशेषः । अनुयाजादीनां कालविधानार्थता इति भा ।

अधि० १५ ज्योतिष्टोमस्य दर्शपूर्णमासोत्तरकालत्वं इति भा । सोमादीनां दर्शपूर्णमासोत्तरकालता इति भाट्ट-बिन्दुः । अत्र व्यर्थ आदिशब्दः । सोमादीनां दर्शपूर्णमासोत्तरकालतादि इति म-सा-वि-शा-ल-रत्नख । अत्र आदिशब्दस्य वृद्धौ व्यर्थताया अपि वृद्धिरेव ।

सू० ३७ ( १ ) उत्पत्तिविषये इति टुप्-पाठः अशुद्धः । उत्पत्तिकालविषये इति सा-रत्नख-पाठोप्यशुद्धः । विशये इत्यावश्यकम् ।

अधि० १६ जातेष्टिन्यायः इति म-सा-वि-ल । जातेष्टिन्यायान्तर्गतवैश्वानरेष्टेः पुत्रगतफलकत्वं इति शा । यथा ज्योतिष्टोमान्तर्गता आतिथ्येष्टिः तथा किमियं वैश्वानरेष्टिः जातेष्टिन्यायान्तर्गता ? महती श्रौतार्थाभिज्ञता प्रकटिता संपादकमहाशयैः । वैश्वानरेष्टेः पुत्रगतपूतत्वादिफलप्रयुक्तत्वं इति भा । वैश्वानरेष्टेः पुत्रगतफलकत्वं इति भा-शा-भिन्नाः सर्वे ।

३८ फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् । ३६ वृ, ३५ य, १५ बिन्दुः.

(अधि० १८ म-सा-वि-ल-मण्डन-रत्नख, १७ वृ, । )

( अधि० १९ वि-ल-मण्डनः, )

३९ अङ्गानां तूपघातसंयोगो निमित्तार्थः ।

३७ वृ, ३६ य.

अधि० १७ भा, २० वि-ल-मण्डनः, १९ म-सा-रत्नख, १८ शा-वृ, १६ बिन्दुः, १५ भाट्ट.

४० प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् । ३८ वृ, ३७ य, १६ बिन्दुः.

४१ अपवृत्ते तु चोदना तत्सामान्यात् स्वकाले स्यात् । ३९ वृ, ३८ य.

पादेऽस्मिन् विंशतिर्न्याया भाष्यकारेण वर्णिताः ॥

द्रव्य अपिवा विहत उभयाऽष्टात्रिंशत् ॥

॥ इति चतुर्थाध्यायस्य तृतीयः पादः समाप्तः ॥

॥ अथ चतुर्थाध्यायस्य चतुर्थः पादः ॥

अधि० १.

१ प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ।

२ अपिवाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ।

अधि० २.

---

अत्र भाष्ये सूत्रद्वयं एकाधिकरणत्वेन व्याख्याय तत्र वैश्वानरेष्टेः पुत्रगतफलकत्वं प्रतिपादितम् । पुनश्च अङ्गानां० इति सूत्रं द्वितीयवर्णकत्वेन व्याख्याय वैश्वानरेष्टेः जातकर्मोत्तरकालत्वं प्रतिपादितम् । पुनश्च तत्सूत्रद्वारा वा उत्सूत्रमेव वा तृतीयवर्णकमारचय्य वैश्वानरेष्टेः अशौचापगमोत्तरकालता प्रतिपादिता । म-सा-संपादकैस्तु प्रथमं वर्णकं सप्तदशाधिकरणत्वेन उत्तरं च वर्णकद्वयं अष्टादशाधिकरणत्वेनैव स्वीकृतम् ।

सू० ३८ ( १ ) तेन इति तृतीयान्तं पदं शा । परंतु स पाठः अयुक्तः । ( २ ) स्यात्तस्याशेषभूतत्वात् इति उपक्रमपराक्रमः ।

( अधि० १८ ) वैश्वानरेष्टेः जातकर्मोत्तरकालत्वं इति सर्वे । भाष्ये षोडशस्य द्वितीयं वर्णकमेवेदम् ।

(अधि० १९) तृतीयं वर्णकमित्यर्थः । वैश्वानरेष्टेः अशौचापगमोत्तरकालता इति वि-ल ।

सू० ३९ अत्र शास्त्रदीपिकायां ' अङ्गानां तूपघातसंयोगो ' इत्यर्धमेव सूत्रं मुद्रितं अनवधानात् ।

अधि० १७ सौत्रामण्यादेः स्वकालकर्तव्यता इति भा । सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यता इति भा-भिन्नाः सर्वे । सौत्रामण्याद्यङ्गानां इति पदं सौत्रामण्यादीनां यान्यङ्गानि तेषां इति वा, सौत्रामण्यादीनि यानि चयनाद्यङ्गानि तेषां वा इति संशयजनकम् । सौत्रामण्यादीनां यान्यङ्गानि तेषां इत्येव वा निश्चयजनकम् । तस्मादयुक्तमिदं शीर्षकम् । चयनाद्यङ्गभूतसौत्रामण्यादीनां इति युक्तम् ।

सू० ४० ( १ ) संबन्धाद इति य ।

सू० ४१ ( १ ) अप्रवृत्ते इति वि-शा । (२) नात् त इति भाट्ट-वृ-य ।

अधि० १ राजसूयशब्दवाच्यानां यागानामेव फलार्थत्वं इति भा । राजसूयेज्यानां देवनाद्यङ्गकत्वं इति वि । राजसूयेज्यानां देवनाद्यङ्गत्वं इति शा-ल । अस्मात् शीर्षकात् देवनादिकं प्रधानं राजसूयेज्याश्च अङ्गं इति भाति । तच्च विपरीतम् । बहुव्रीहिबोधककप्प्रत्ययप्रयोगाभावात्तत्पुरुष एवात्र भाति । विस्तरस्थः कप्प्रत्ययो विस्मृतोऽनवधानात् शा-लसंपादकैः । राजसूयेज्यानां विदेवनाद्यङ्गकत्वं इति म-सा-भाट्ट-बिन्दु-वृ ।

अधि० २ देवनस्य कृत्स्नराजसूयाङ्गता इति वि-शा-ल । विदेवनस्य कृत्स्नराजसूयाङ्गता इति म-सा-भाट्ट-बिन्दु-वृ । अन्यत्र आदिशब्दग्राह्यस्याविद्यमानत्वेपि आदिशब्दः प्रयुज्यते, अत्र च आदिशब्दग्राह्यस्य विद्यमानत्वेपि आदिशब्दो न

३ मध्यस्थं यस्य तन्मध्ये । २ बिन्दुः.
४ सर्वासां वा समत्वाच्चोदनातः स्यान्नहि तस्य प्रकरणं, देशार्थमुच्यते मध्ये ।
अधि० ३.
५ प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् । ३ बिन्दुः.
६ अपिवा कालमात्रं स्याददर्शनाद्विशेषस्य ।
अधि० ४.
७ फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् । ४ बिन्दु.
अधि० ५.
८ दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् । ५ बिन्दुः.
९ नित्यश्च ज्येष्ठशब्दात् ।
१० सर्वसारूप्याच्च ।
११ नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसंबन्धाद् भङ्गित्वाच्चान्तरायस्य ।
अधि० ६.
१२ वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् । ६ बिन्दुः.
अधि० ७.
१३ पक्षे वोत्पन्नसंयोगात् ।
१४ षट्चितिः पूर्ववत्त्वात् । ७ बिन्दुः.
१५ ताभिश्च तुल्यसंख्यानात् ।
१६ अर्थवादोपपत्तेश्च ।
१७ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ।
१८ विप्रतिषेधात् ताभिः समानसंख्यत्वम् ।
अधि० ८.

---

प्रयुज्यते इति वैपरीत्यं बुद्धिचातुर्यस्य । विदेवनादीनां कृत्स्नराजसूयाङ्गता इति भा ।

सू० ४ ( १ ) सर्वेषां वा इति टुप्-रत्नखटि ( २ ) ना स्या इति य ।

अधि० ३ सौम्यादीनामुपसत्कालकत्वं इति सर्वे । नैतत् हृद्यम् । नहि बहुव्रीहिबोध्योऽर्थोऽत्र ग्रहीतुं शक्यते । सौम्यादीनामुपसत्कालिकत्वं इति तु युक्तम् । 'पुरस्तादुपसदां सौम्येन प्रचरति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद् वैष्णवेन' इति हि श्रुतिः । सौम्यादयः नोपसदङ्गं किं तु कालार्थः संयोगः इति च सिद्धान्तः ।

सू० ५ ( १ ) च प्र इति रत्नख ।

अधि० ४ आमनहोमानां सांग्रहणीष्टयङ्गता इति भा । आमनहोमानां सांग्रहण्यङ्गता इति वि-भाट्ट-शा-बिन्दु-वृ-ल । आमनहोमानां सांग्रहायण्यङ्गता इति म-सा । किमियं सांग्रहायणी आग्रहायणीभगिनी ? ' सांग्रहण्या ग्रामकामो यजेत ' इति हि श्रुतिः । सांग्रहणी नाम इष्टिः का चित् न तु सांग्रहायणी ।

अधि० ५ दधिग्रहस्य नित्यत्वं इति सर्वे ।

सू० ९ ( १ ) शब्दत्वात् इति वृ-ल ।

सू० ११ (१)वादात्तयोः इति य । ( २ ) कर्मसं इति वृ-सूत्रे, वृ-मुले तु ' कर्मणि संबन्धाभावात् ' इत्युक्तत्वात् कर्मण्यसंबन्धात् इत्येव पाठः सिध्यति । ( ३ ) बन्धाद् बन्धाद् भङ्गि इति य-पाठे द्विरुक्तिर्लेखकप्रमादादेव स्यात् ।

अधि० ६ वैश्वानरस्य नैमित्तिकत्वं इति भाभिन्नाः सर्वे । अत्र वैश्वानरशब्देन न देवता ग्राह्या किंतु तद्देवताकः पुरोडाशः । वैश्वानरेष्टेर्नैमित्तिकत्वं इति भा-शीर्षकं तु साधीयः संशयाजनकत्वात् ।

अधि० ७ षष्ठाचितेर्नैमित्तिकत्वं इति वि-भाट्ट-शा-ल । षष्ठ्याश्चितेर्नैमित्तिकत्वं इति भा-म-सा--बिन्दु-वृ ।

सू० १३ ( १ ) पक्षे चोत्प इति य । परंतु स लेखकप्रमाद एव स्यात् नैमित्तिकत्वस्यैव प्रतिपादनीयत्वात् । तथापि भाष्यान्तरापरिज्ञानात् निर्णेतुं न शक्यते ।

सू० १४ ( १ ) त्त्वात् स्यात् इति बिन्दु-य-रत्न । पूर्ववत् स्यात् इति भाट्ट-शा-वृ-ल ।

सू० १७ ( १ ) वृत्ते हि इति य ।

सू० १८ ( १ ) संख्यं इति वि-शा-चौ । संख्यत्वं इति तु साधीयः ।

अधि० ८ पिण्डपितृयज्ञस्य दर्शयागानङ्गत्वं इति वृ । पिण्डपितृयज्ञस्य दर्शेष्टयनङ्गत्वं इति भा ।

१९ पितृयज्ञः स्वकालत्वादनङ्गं स्यात् । ८ बिन्दुः.

२० तुल्यवच्च प्रसंख्यानात् ।

२१ प्रतिषिद्धे च दर्शनात् ।

अधि० ९.

२२ पश्वङ्गं रशना स्यात् तदागमे विधानात् । ९ बिन्दुः.

२३ यूपाङ्गं वा तत्संस्कारत्वात् ।

२४ अर्थवादश्च तदर्थवत् ।

अधि० १०

२५ स्वरुश्चाप्येकदेशत्वात् । १० बिन्दुः.

२६ निष्क्रयश्च तदङ्गवत् ।

२७ पश्वङ्गं वाऽर्थकर्मत्वात् ।

२८ भक्त्या निष्क्रयवादः स्यात् ।

---

पिण्डपितृयज्ञस्यानङ्गता इति म–सा–वि–भाट्ट–शा–ल । अत्र किंनिरूपितोऽङ्गत्वाभावः इति निरूपणाभावान्न्यूनता । पिण्डपितृयागस्य दर्शानङ्गता इति बिन्दुः । बिन्दुसंपादकाः किल प्रियवैचित्र्याः । एकरसत्वे किल नानन्दस्तावाननुभूयते यावान्नानारसत्वे । इतरैर्यज्ञशब्दे निवेशिते यागशब्दमेते निवेशयन्ति । इतरैर्यागशब्दे निवेशिते तु एभिर्यज्ञशब्दः। इतरैः त्वप्रत्यये प्रयुक्ते एतैः ताप्रत्ययः प्रयुज्यते । अन्यैः ताप्रत्यये प्रयुक्ते तु एभिरवश्यं त्वप्रत्ययः प्रयुज्यते । पूर्वस्मात् यावत्तावदपि वैचित्र्यं कर्तव्यमिति कृतप्रतिज्ञा एते । अपि भोः ' पिण्डपितृयज्ञः' इति यज्ञशब्द एव रूढोऽत्र, न तु 'पिण्डपितृयागः' इति यागशब्दः । व्यर्थः प्रयासोऽयं तत्रभवतां शब्दविपरिवर्तने ।

सू० १९ ( १ ) त्वानङ्गं इति ल–पाठो न शुद्धः । कालविधानादनङ्गं इति रत्नख । भाष्ये तु नैतत् ।

सू० २० ( १ ) वत् प्र इति वि–शा । वच्चाप्र इति चौ । उभयमिदं न भाष्यादिसंमतम् ।

सू० २१ ( १ ) विप्रति इति बृ–ल । 'विप्रतिषेधे दर्शयागप्रतिषेधे निषेधेऽपि पितृयज्ञस्य दर्शनात् विधानात् ' इति बृ–मूलम् । तत्र प्रतिषेधे वक्तव्ये विप्रतिषेधशब्दोऽयुक्त एव ।

अधि० ९ रशनाया यूपाङ्गत्वं इति सर्वे ।

सू० २२ ( १ ) पश्वङ्गर इति रत्नख । पश्वङ्गे र इति वि । उभयमपीदमयुक्तम् ।

सू० २३ ( १ ) स्कारत्वात् इति य–टुप्–टी–रत्नख । अन्यत्र तु स्कारात् ।

अधि १० स्वरोः पश्वङ्गत्वं इति सर्वे ।

सू०२७ ( १ ) वा तदर्थः स्यात् इति वि–शा । अत्र भाष्यं " पश्वङ्गं वा । तस्य हि अञ्जनार्थेन स्वरुणा प्रयोजनम् । तथाहि श्रूयते स्वरुणा पशुमनक्ति इति । तत् अञ्जनं पशोः, स्वरोरुत्पत्तिं प्रयोजयति " एतावता ग्रन्थेन 'नेयं प्रतिपत्तिः किंतु अर्थकर्म ' इति भानात् ' अर्थकर्मत्वात् ' इति पाठो भाष्यसंमत इति। इदं तु बोध्यं, अधिकरणादौ भाष्ये " तत्र संदेहः किं यूपाङ्गं स्वरुः उत पश्वङ्गं इति " इति संशयस्य निवेशात् प्रतिपत्तिकर्मत्वस्य पूर्वपक्षसाध्यत्वाभावात् सिद्धान्ते अर्थकर्मत्वनिवेशस्याप्रासङ्गिकत्वमिति । अथ ततः परं भाष्यं " यदि तदर्थ एष स्वरुः ततो दृष्टं प्रयोजनं, अथ यूपार्थः, अदृष्टं प्रयोजनं, ततः कल्प्यम् । तस्मात् पश्वङ्गमिति " इति । अस्माद् ग्रन्थात् तदर्थत्वात् इति पाठः कथं चित् सिध्येत् । तमनुसृत्य ' तदर्थः स्यात् ' इति वि–शा पाठः । अत्र टुप् टीकावार्तिकं नास्त्येव । तन्त्ररत्नं तु " यूपस्येति षष्ठ्या स्वरोरुत्पत्तिवाक्ये तादर्थ्यावगमात्... यूपार्थः स्वरुः, अञ्जनं तु तस्यैव निर्ज्ञातप्रयोजनस्य प्रतिपत्तिरिति । नैतद्युक्तम्... तदर्थ एव ( पश्वर्थ एव ) स्वरुर्न यूपार्थः, तेन पशुप्रयुक्त इति " इति । अत्र प्रतिपत्तित्वं स्वरोः पूर्वपक्षत्वेनोक्तम् । तेन च सिद्धान्ते अर्थकर्मत्वमेव हेतुत्वेनोदाहर्तव्यम् । तथा च सूत्रे अर्थकर्मत्वादिति पाठः सिद्धयति । " पशोश्च द्वितीयया प्राधान्यप्रतीतेः तदर्थ एव स्वरुः " इत्युत्तरस्माच्च ग्रन्थात् भाष्यग्रन्थादिव 'तदर्थत्वात् ' इति पाठः सेत्स्यति । अत्र सूत्रपाठं मीमांसकवर्याः

अधि० ११.

२९ दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात्। ११ बिन्दुः.

३० अपिवाऽङ्गानि कानि चिद्, येष्वङ्गत्वेन संस्तुतिः, सामान्यो ह्यभिसंस्तवः।

३१ तथाचान्यार्थदर्शनम्।

३२ अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात्।

३३ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात्।

३४ पृथक्त्वे त्वभिधानयोर्निवेशः, श्रुतितो व्यपदेशाच्च, तत् पुनर्मुख्यलक्षणं यत् फलवत्त्वं, तत्संनिधावसंयुक्तं तदङ्गं स्याद्, भागित्वात् कारणस्याश्रुतश्चान्यसंबन्धः।

३५ गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते।

३६ तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसंबन्धः।

३७ उत्पत्तावभिसंबन्धस्तस्मादङ्गोपदेशः स्यात्।

३८ तथाचान्यार्थदर्शनम्।

अधि० १२.

३९ ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम्। १२ बिन्दुः.

४० गुणानां तूत्पत्तिवाक्येन संबन्धात् कारणश्रुतिस्तस्मात् सोमः प्रधानं स्यात्।

४१ तथाचान्यार्थदर्शनम्।

द्वादश पाद इहाह सुनीतीर्वीक्ष्य मुनिः किल तत्त्वविदत्र ॥+

---

एव निश्चिन्वन्तु। अस्मन्मनस्तु दोलायते, तथापि अर्थकर्मत्वात् इति पाठ एव उत्कटा कोटिर्भाति बुद्धौ। वाऽस्यार्थत्वात् इति लटि-पाठः, अर्थत्वात् इत्यस्य अर्थकर्मत्वात् इत्यर्थं विधाय कथं चित् समाधेयः।

अधि० ११ आघारादीनामङ्गत्वं इति भा-म सा-वि-भाट्ट-शा-ल। अत्र प्रधानस्यानुक्तत्वान्न्यूनता।"तस्मात् आग्नेयादीनि प्रधानानि, आघारादीन्यङ्गानि इति सिद्धम्" इति हि भाष्यस्य उपसंहारः। आघारादीनामाग्नेयाद्यङ्गत्वं इति बिन्दुषु। अत्र तु बिन्दु-संपादकानां मनः समाहितमासीदित्यभिनन्द्यते।

सू० २९ (१) रिज्याप्र इति शा-पाठो न युक्तः। रिज्याप्राधान्यमवि इति शाटि-य।

सू० ३० (१) मान्यतो ह्य इति भाट्ट। मान्याद्यभि इति वृ-ल। मान्याघ्याभि इति य। मान्येष्वभि इति मटि। (२) संबन्धः इति वि-शा-चौ। भाष्यमूले तु 'सामान्यो ह्यभिसंस्तवः' इत्येव।

सू० ३२ (१) अवशि इति सा-ल-चौपाठो न युक्तः।

सू० ३४ (१) श्रुतेश्चा इति वृ-ल।

सू० ३६ (१) रङ्गाभिसंबन्धैः इति मटि-वृ-ल। एतत्सूत्रोपन्यस्तस्याक्षेपस्य निराकरणं उत्तरसूत्रे। तत्र च 'उत्पत्तावभिसंबन्धः' इत्यभिसंबन्धशब्दः प्रयुक्तः, तेन एतत्सूत्रे 'अङ्गाङ्गिसंबन्धः' इत्यस्य स्थाने अङ्गाभिसंबन्धः' इति पाठः स्यात्। रङ्गाभिधानैः इति य।

सू० ३७ (१) वपि सं इति य।

अधि० १२ ज्योतिष्टोमे दक्षिणीयादीनामङ्गता इति भा-भिन्नाः सर्वे। सोमयागस्यैव प्राधान्यं इति भा। अत्र भा-शीर्षकं सूत्रानुसारि सिद्धान्तप्रदर्शनपरं च। इतरशीर्षकं तु पूर्वपक्षनिरासप्रधानम्।

सू० ४० (१) संयोगात् कारणं श्रु इति य।

+मीमांसानुक्रमणिकाश्लोके सुनीती वीक्ष्य इति मुद्रितं, 'सुनीती न्यायज्ञः' इति गंगानाथझाशर्मभिर्व्याख्यातं च, तथापि सुनीतीर्वीक्ष्य इत्येवात्र पाठः स्यादिति कल्पयामः। सुनीतीः सुष्ठुतमान् न्यायान् इत्यर्थः। अन्यथा हि विशेष्यलाभार्थं 'अधिकरणानि' इति पदमध्याहर्तव्यं भवति, तत्त्ववित्पदेन पुनरुक्तिश्च प्रसज्यते।

प्रकरण नित्यः प्रति तथा तर्थकचत्वारिं-शत् ॥

॥ इति चतुर्थाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

---

॥ अथ पञ्चमाध्यायस्य प्रथमः पादः ॥

अधि० १, १ तः २ मण्डनः.

१ श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ।

अधि० २, ३ मण्डनः.

२ अर्थाच्च ।

अधि० ३, ४ मण्डनः.

३ अनियमोऽन्यत्र ।

अधि० ४, ५ मण्डनः.

४ क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ।

५ अशाब्द इति चेत् स्याद् वाक्यशब्दत्वात् ।

६ अर्थकृते वाऽनुमानं स्यात् क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन संबन्धस्तस्मात् स्वशब्दमुच्येत ।

७ तथाचान्यार्थदर्शनम् ।

अधि० ५, ६ मण्डनः.

८ प्रकृत्या तुल्यकालानां गुणानां तदुपक्रमात् । ५ बिन्दुः.

९ सर्वमिति चेत् ।

१० नाकृतत्वात् । ९ य.

११ क्रत्वन्तरवदिति चेत् । १० य.

---

अधि० १ क्रमनियमः इति म-सा-भाट्ट-बिन्दु-वृ । क्रमनिरूपणं इति ल । क्रमनिरूपणाधिकरणे श्रुतिबलीयस्त्वं इति वि-शा । श्रुतिबलीयस्त्वं इति म-सा-वि-भाट्ट-बिन्दु-ल । श्रौतकर्मनियमः इति भा । अत्र वि-शाशीर्षकमसंबद्धोक्तेरयुक्तम् । भा-शीर्षके च क्रमशब्दस्थाने कर्मशब्दोऽनवधानात् पतितः ।

अत्राधिकरणे भा-वि-शा-ग्रन्थेषु वर्णकत्रयम् । तत्र द्वितीये वर्णके क्रमधर्मः चोदनालक्षण एवेति प्रतिपादितम् । तृतीये वर्णके च द्वादशाहे दीक्षाणां क्रमविशेषनियमः इत्युक्तम् । तृतीयं चेदं वर्णकं मण्डनेन द्वितीयाधिकरणत्वेनैव स्वीकृतम् ।

सू० १ ( १ ) तत्प्रधानत्वात् इति वि-भाट्ट-शा-चौपाठः । 'श्रुतिप्रमाणका हि वैदिका अर्था नैषामन्यत् प्रमाणमस्ति ' इति तु भाष्यम् ।

अधि० २ आर्थक्रमनियमः इति भा । क्रमस्य क्वचिदार्थिकत्वं इति भा-भिन्नाः सर्वे ।

अधि० ३ क्रमस्य क्वचिदनियमः इति भा-म सा-वि-भाट्ट-शा ल । प्रयाजानुमन्त्रणे क्रमानियमः इति बिन्दु-वृ ।

सू० ३ ( १ ) मोऽत्र इति टी । मो ह्यत्र इति रत्न ।

अधि० ४ क्रमस्य क्वचित् पाठानुसारिता इति म-सा-वि-भाट्ट-शा-वृ-ल । पाठक्रमः इति म-सा-वि भाट्ट-ल । पाठक्रमनियमः इति भा । पाठतः क्रमनियमः इति बिन्दुः ।

सू० ४ (१) ण नि इति वृ । (२) त्वेन त इति रत्नख ।

सू० ५ ( १ ) ब्दमिति इति वृ ।

सू० ६ ( १ ) ते चानु इति वृ-ल-य । ते ह्यनु इति रत्न । ( २ ) ब्दमुच्यते इति वि-शा-वृ-ल -चौ-टुप्-टी-रत्न । ब्द उच्यते इति य ।

अधि० ५ क्रमस्य क्वचित् प्रथमप्रवृत्त्यनुसारिता इति म-सा-वि-भाट्ट-शा-वृ-ल । प्रवृत्तिक्रमनियमः इति भा । प्रावृत्तिकक्रमन्यायः इति म-सा-वि-भाट्ट -ल । प्रावर्तिकक्रमनियमः इति बिन्दुशीर्षकं तु अयुक्तमेव ।

सू० ९ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ११ ( १ ) चेदन्तमुत्तरेणैकं य ।

१२ नासमवायात् । १० य.

अधि० ६, ७ तः ८ मण्डनः.

१३ स्थानाच्चोत्पत्तिसंयोगात् ।११ य,६बिन्दुः.

अधि० ७, ९ मण्डनः.

१४ मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् । १२ य, ७ बिन्दुः.

अधि० ८, १० मण्डनः.

१५ प्रकृतौ तु स्वशब्दत्वाद् यथाक्रमं प्रतीयेत । १३ य, ८ बिन्दुः.

अधि० ९, ११ मण्डनः.

१६ मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः । १४ य, ९ बिन्दुः.

अधि० १०, १२ मण्डनः.

१७ तद्वचनाद् विकृतौ यथाप्रधानं स्यात् । १५ य, १० बिन्दुः.

१८ विप्रतिपत्तौ वा प्रकृत्यन्वयाद् यथाप्रकृति । १६ य.

अधि० ११, १३ मण्डनः.

१९ विकृतिः प्रकृतिधर्मत्वात् तत्काली स्याद् यथाशिष्टम् । १७ य, ११ बिन्दुः.

२० अपिवा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपः स्यात् । १८ य.

२१ कालोत्कर्ष इति चेत् । १९ य.

२२ न तत्संबन्धात् । १९ य.

अधि० १२, १४ मण्डनः.

---

अधि० ६ क्रमस्य क्वचित् स्थानानुसारिता इति म–सा–वि–भाट्ट–शा–वृ–ल । स्थानक्रमनियमः इति भा । स्थानतः क्रमनियमः इति बिन्दुः । अत्र वर्णकद्वयमधिकरणद्वयत्वेन स्वीकृतं मण्डनेन ।

अधि० ७ अङ्गक्रमस्य मुख्यक्रमानुसारिता इति भा–भिन्नाः सर्वे । मुख्यक्रमनियमः इति भा ।

सू० १४ ( १ ) ण चाङ्गा इति वृ–ल–य–बिन्दु –रत्न–रत्नख ।

अधि० ८ अङ्गेषु मुख्यक्रमापेक्षया पाठक्रमस्य बलवत्त्वं इति ल । अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वं इति म–सा–वि–भाट्ट–शा । अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलीयस्त्वं इति बिन्दु–वृ । अङ्गेषु इति पदं शीर्षकत्रयेऽपि व्यर्थम् । पाठक्रमस्य मुख्यक्रमापेक्षया बलीयस्त्वं इति भा–शीर्षकं तु साधीयः ।

अधि० ९ ब्राह्मणपाठात् मन्त्रपाठस्य प्रबलत्वं इति बिन्दुः । ब्राह्मणपाठात् मन्त्रपाठस्य बलीयस्त्वं इति म–सा–वि–भाट्ट–शा–ल । ब्राह्मणपाठापेक्षया मन्त्रपाठस्य बलीयस्त्वं इति भा–वृ । प्रबलत्वं बलीयस्त्वं, ब्राह्मणपाठात् ब्राह्मणपाठापेक्षया इति च वैचित्र्यं संपादितं संपादकैः ।

अधि १० औपदेशिकमुख्यक्रमापेक्षया आतिदेशिकपाठक्रमस्य बलवत्त्वं इति भा । प्रयोगवचनाचोदकस्य बलवत्त्वं इति भा–भिन्नाः ।

सू० १७ ( १ ) नात्तु वि इति शा–बिन्दु–य –टुप्–रत्न ।

अधि० ११ विकृतौ क्वचित् प्रकृतिधर्मानतिदेशः इति म–सा–वि–भाट्ट–शा–बिन्दु–वृ–ल । साकमेधीयन्यायः इति म–सा–वि–भाट्ट । साकमेधे अनीकवत्यादीनां सद्यस्कालता इति भा ।

सू० १९ ( १ ) लाः स्याद् इति सा–पाठस्तु न शुद्धः ' विकृतिः ' इति विशेष्यस्यैकत्वात् ।

सू० २० ( १ ) सद्यस्क्रि इति टी । ( २ ) विधिर इति वृ ।

सू० २१ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० २२ ( १ ) न सं इति य–टुप् ।

अधि० १२ अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षौ इति म–सा–वि–शा–बिन्दु–वृ–ल । अनूयाजाद्युत्कर्षप्रयाजान्तापकर्षौ इति भाट्ट । तदादितदन्तन्यायः इति म–सा–वि–भाट्ट–ल । तदाद्युत्कर्षतदन्तापकर्षौ इति भा ।

२३ अङ्गानां मुख्यकालत्वाद् यथोक्तमुत्कर्षे स्यात् । २० य, १२ बिन्दुः.

२४ तदादि वाऽभिसंबन्धात् तदन्तमपकर्षे स्यात् । २१ य.

अधि० १३, १५ मण्डनः.

२५ प्रवृत्त्या कृतकालानाम् । २२ य, १३ बिन्दुः.

२६ शब्दविप्रतिषेधाच्च । २३ य.

अधि० १४, १६ मण्डनः.

२७ असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत । २४ य, १४ बिन्दुः.

अधि० १५, १७ मण्डनः.

२८ प्रासङ्गिकं च नोत्कर्षेदसंयोगात् । २५ य, १५ बिन्दुः.

अधि० १६, १८ मण्डनः.

२९ तथाऽपूर्वम् । २६ य, १६ बिन्दुः.

अधि० १७, १९ मण्डनः.

३० सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद् वैगुण्यात् । २७ य, १७ बिन्दुः.

३१ अव्यवायाच्च । २८ य.

३२ असंबन्धात्तु नोत्कर्षेत् । २९ य.

३३ प्रापणाच्च निमित्तस्य । ३० य.

३४ संबन्धात् सवनोत्कर्षः । ३१ य.

अधि० १८, २० मण्डनः.

३५ षोडशी चोक्थ्यसंयोगात् । ३२ य, १८ बिन्दुः.

पादेऽस्मिन् विंशतिर्न्याया भाष्यकारेण वर्णिताः ॥

श्रुति स्थानात् तदादि संबन्धाद् द्वात्रिंशत् ॥

॥ इति पञ्चमाध्यायस्य प्रथमः पादः ॥

॥ अथ पञ्चमाध्यायस्य द्वितीयः पादः ॥

अधि० १.

---

अधि० १३ पौरोडाशिकानां प्रोक्षणादीनां सौमिकपदार्थपूर्वभावित्वं इति भा । प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविता इति भा–भिन्नाः ।

सू० २५ (१) प्रकृत्या इति शा–बिन्दु–वृ ।

अधि० १४ यूपकर्मन्यायः इति म–सा–वि–भाट्ट –ल । यूपमात्रापकर्षः इति भा । वैकृतयूपकर्ममात्रापकर्षः इति म–सा–वि–भाट्ट–शा–बिन्दु–वृ–ल ।

सू० २७ (१) वैकृतं इति पदं नास्त्येव भाट्ट । कृते त इति रत्न । (२) ष्येत् इति शा–पाठः अशुद्धः । सोमनाथेन 'प्रतिकृष्यमाणं तदेव प्रतिकृष्येत' इत्यात्मनेपदत्वेन व्याख्यानात् ।

अधि० १५ दक्षिणाग्निकहोमानपकर्षः इति म –सा–वि–भाट्ट–शा–ल पाठः अशुद्धः, ठकस्तद्धितस्य कित्त्वेन आदिवृद्धेरावश्यकत्वात् । दाक्षिणाग्निकहोमानपकर्ष इति भा–बिन्दु–वृ–ल ।

सू० २८ (१) र्षे तद इति रत्नखटि–पाठस्त्वशुद्धः ।

अधि० १६ पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षः इति भा–भिन्नाः । हविरभिवासनान्तस्यामावास्यायां पूर्वेद्युरनपकर्षः इति भा ।

अधि० १७ सांतपनीयाया अग्निहोत्रानुत्कर्षकता इति भा–भिन्नाः । सांतपनीयोत्कर्षेऽपि अग्निहोत्रानुत्कर्षः इति भा ।

सू० ३० (१) वद् वैगु इति टुप्पाठोऽशुद्धः ।

सू० ३३ पणं च नि इति य ।

अधि० १८ उक्थ्याद्यनुरोधेन षोडश्युत्कर्षः इति भा–भिन्नाः । उक्थ्योत्कर्षे षोडश्युत्कर्षः इति भा ।

सू० ३५ (१) चोक्थसं इति बिन्दुपाठस्तु न शुद्धः । अस्मिन् पादे भाष्ये प्रथमसूत्रे वर्णकत्रयं, त्रयोदशे च सूत्रे वर्णकद्वयम् । तथा सति विचारपदानि एकविंशतिरत्र । परंतु मण्डनेन विंशतिर्न्याया इत्युक्तम् । इतरैस्तु अष्टादशैव न्यायाः इति गृहीतम् । तत्र प्रथमसूत्रीयवर्णकत्रयस्यानतिभिन्नार्थकत्वात् द्वाभ्यां न्यूनत्वं क्षम्यते । त्रयोदशसूत्रीयवर्णकद्वयं तु अत्यन्तं भिन्नार्थकत्वात् पार्थक्येन ग्रहीतुं युक्तं इति अन्ततः एकोनविंशतिर्न्याया अत्रेति युक्तमुत्पश्यामः।

अधि० १ अनेकप्रधानेषु संनिपातिनां पदार्थानुसमयः इति भा । पदार्थानुसमयन्यायः इति म–सा–वि–भाट्ट–ल । वाजपेयपशूनां सर्वेषामेकदोपाकरणादिधर्मानुष्ठानं इति म–सा–वि–भाट्ट–शा–वृ–ल।

१ संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ।

२ सर्वेषां वैकजातीयं कृतानुपूर्व्यत्वात् ।
अधि० २ शा-बिन्दुभिन्नेषु.

३ कारणादभ्यावृत्तिः ।
अधि० ३, २ शा-बिन्दुः.

४ मुष्टिकपालोपधानावदानाञ्जनाभ्यञ्जन-वपनपावनेषु चैकेन । २ बिन्दुः.

५ सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् ।
अधि० ४, ३ शा-बिन्दुः.

६ संयुक्ते तु प्रक्रमात् तदङ्गं स्यादितरस्य तदर्थत्वात् । ३ बिन्दुः.
अधि० ५, ४ शा-बिन्दुः.

७ वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ।
४ बिन्दुः.

८ कारणाद् वाऽनवसर्गः स्याद् यथा पात्रेविवृद्धिः ।

---

तृतीयं सूत्रं प्रथमाधिकरणगुणत्वेन व्याख्याय पुनरधिकरणान्तरत्वेनापि भाष्यकारैर्व्याख्यातम् । सूत्रं चेदं भा-म-सा-वि-ग्रन्थेषु द्विरुपन्यस्तम् । शा-ग्रन्थे तु प्रथमाधिकरणसूत्रेषूपन्यस्तं शा-मूले च वर्णकद्वयमिव कृतम् । भाट्ट-वृ-ल-ग्रन्थेषु पुनः द्वितीयाधिकरणत्वेन एकदैवोपन्यस्तम् । वार्तिककारैस्तु प्रथमाधिकरणगुणसूत्रत्वमस्य खण्डितम् । तन्त्ररत्नेन च ' अधिकरणान्तरं वा ' इति भाष्यप्रतीकमादाय अधिकरणान्तरं प्रदर्शितम् ।

सू० २ ( १ ) तीयः कृ इति य । ' एकजातीयानुसमयः कर्तव्यः ' इति भाष्यादपि पुंलिङ्गपाठ एव सिध्यति । नपुंसकपाठे एव तु सूत्रस्वारस्यं, पूर्वसूत्रात् विशेष्यस्य कर्मपदस्यानुषङ्गात् तस्य च नपुंसकत्वात् । सर्वं कर्म, एकजातीयं कर्म, इति पूर्वोत्तरपक्षौ । ( २ ) पूर्वत्वात् इति म-सा-वि-भाट्ट-शा-चौ-य-टुप्-रत्नखटि । पूर्व्यात् इति वृमूलं-रत्न ।

अधि० २ काण्डानुसमयन्यायः इति म-सा-वि-भाट्ट-ल । प्रधानविरोधे संनिपातिनां काण्डानुसमयः इति भा । सहस्राश्वप्रतिग्रहस्थले एकैकस्य एकदा सर्वधर्मानुष्ठानं इति म-सा-वि-भाट्ट-वृ-ल।

वर्णकान्तरस्याधिकरणान्तरत्वं स्वीकृत्य अङ्को वर्धितः शा-बिन्दुभिन्नेषु, तयोस्तु न वर्धित इति इत आरभ्याधिकरणाङ्को भिन्नः संजातः ।

अधि० ३ मुष्टिकपालादिषु चतुर्मुष्टिनिर्वापादिना अनुसमयः इति भा । मुष्टिकपालादीनां समुदायानुसमयः इति भा-भिन्नाः ।

सू० ४ ( १ ) पालाव इति शा-भिन्नाः सर्वे । सोमनाथोपि अत्रैव स्पष्टमनुकूलः । परंतु कपालानि संस्कार्याणि इति, उपधानानां संस्कारभूतानां समुदायस्य अनुसमय इति च वक्तव्यम् । भाष्यादितोऽपि पाठोऽयमेव सिध्यतीति मन्यामहे ।

सू० ५ ( १ ) सर्वेषां त्वैककर्म्यादेतेषां इति टी । सर्वाणि त्वैककर्म्यादेतेषां इति य-रत्न-रत्नख । सर्वाणि वैककार्यत्वादेषां इति वृ ।

अधि० ४ अवदानस्य प्रदानान्तानुसमयः इति भा-भिन्नाः । दर्शपूर्णमासयोः अवदानादिप्रदानान्तेन अनुसमयः इति भा ।

सू० ६ ( १ ) दन्तं स्या इति शा-बिन्दु-वृ-य-टी-रत्न ।

अधि० ५ अञ्जनादेः परिव्याणान्तानुसमयः इति भा-भिन्नाः । अशुद्धमिदम् । अञ्जनादेः परिव्याणान्तस्यानुसमय इति वा अञ्जनादिपरिव्याणान्तानुसमय इति वा युक्तम् । यूपगणे अञ्जनादिपरिव्याणान्तेनानुसमय इति भा ।

सू० ७ ( १ ) परिमाणान्त इति चौ-पाठस्तु त्याज्यः ( २ ) नादिः स्यात् इति वृ-सूत्रे, वृ-मूले तु विसर्गराहित्यमेव । ( ३ ) स्यात्-पदं नास्ति य ।

सू० ८ ( १ ) वाव इति वृ-ल-य । ' तस्माद् यूपान्तरेणोच्छ्रयितव्येन कारणेनावसृजेत् ' इति भाष्यात्तु 'कारणाद्वाऽवसर्गः' इति सूत्रपाठो भाति । ' न वा शब्दकृतत्वात् ' इत्याद्युत्तरसूत्रे शब्दकृतं हि प्रकृतावनवसर्जनं ' इति भाष्यात्तु ' कारणाद्वाऽनवसर्गः ' इत्येव सूत्रपाठः सिध्यति ( २ ) त्र

९ न वा. शब्दकृतत्वान्न्यायमात्रमितरद- र्थात् पात्रविवृद्धिः ।

अधि० ६, ५ शा-बिन्दुः.

१० पशुगणे तस्यतस्यापवर्जयेत् पश्वेक- त्वात् । ५ बिन्दुः.

११ दैवतैर्वैककर्म्यात् ।

१२ मन्त्रस्य चार्थवत्त्वात् ।

अधि० ७, ६ शा-बिन्दुः.

१३ नानाबीजेष्वेकमुलूखलं विभवात् । ६ बिन्दुः.

१४ विवृद्धिर्वा नियमानुपूर्व्यस्य तदर्थत्वात् ।

१५ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ।

अधि० ८, ७ शा-बिन्दुः.

१६ विकारे त्वनुयाजानां पात्रभेदोऽर्थभे- दात् स्यात् । ७ बिन्दुः.

अधि० ९, ८ शा-बिन्दुः.

१७ प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्नह्य- चोदितस्य शेषाम्नानम् । ८ बिन्दुः.

---

इति य-भिन्नाः सर्वे। य-पुस्तके तु पात्रविवृद्धिः इति पाठः। अत एवोत्तरसूत्रेऽपि ' अर्थात् पात्रवि- वृद्धिः ' इत्यनुवादः संगच्छते।

सू० ९ ( १ ) त्र वृ इति वृ-ल। यदि पूर्व- सूत्रे वृद्धिशब्दस्य प्रयोगः, अत्रापि तथैव भवतु। यदि वा अत्र विवृद्धिशब्दस्य प्रयोगः, प्रागपि तथैव भवतु।

अधि० ६ एकदेवताकपशुगणे दैवतावदानादिना अनुसमयः इति भा। दैवतायवदानेषु पदार्थानु- समयः इति भा-भिन्नाः।

सू० १० गण एकैकस्या इति शा। सोमनाथीये तु गणे तस्यतस्याप इत्येव। ( २ ) पश्वेकत्वात् इतिपदं नास्ति वृ-सूत्रे, वृ-मूले त्वस्त्येव। अत्र तस्यतस्येति वीप्सात्वेन ऐकपद्यमावश्यकं इत्युक्तं प्राक्। सर्वत्र तु प्रायदिछत्त्वैव मुद्रितम्।

अधि० ७ नानाबीजेषु कृष्णाजिनास्तरणादितण्डु- लप्रक्षालननिनयनान्तेनानुसमयः इति भा। नाना- बीजेष्टौ उलूखलादीनां तन्त्रता इति भा-भिन्नाः।

सू० १३ (१) बीज एक इति वृ-ल। नानाबीजे इति एकवचनं तु युक्तमेव। नाना बीजानि यस्मिन् यागे इति हि तदर्थः। बहुवचनपाठे तु कर्मधारयः समासः कार्यः। भाष्ये तु नानाबीजेष्टौ इत्येकवचन- मेव।

सू० १४ ( १ ) मादानु इति वि-शा-वृ-ल य। ' नियतं ह्यानुपूर्व्यं पाठकृतं ' इति भाष्यात् नियमानुपूर्व्यस्य नियतानुपूर्व्यस्य इति वा सिध्यति। ( २ ) पूर्वस्य इति म-सा-भाट्टपाठस्तु न युक्तः।

अधि० ८ अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदः इति म-सा-वि-भाट्ट-शा-बिन्दु। अनू- याजेति दीर्घपाठेन तदेव शा-वृ-ल। अस्मिन् शीर्ष- कद्वयेऽपि प्रयाजानु( नू ) याजयोः इति द्विवचन- मशुद्धम्। अग्नीषोमीये पशौ प्रयाजानुयाजानां पात्र- भेद इति भा।

सू० १६ ( १ ) त्वनूया इति शा-बिन्दु-वृ-ल -य। ( २ ) स्यात् इति पदं नास्ति वृ-ल।

अधि० ९ नारिष्ठन्यायः इति वि-भाट्ट-ल। नारिष्ठहोमस्य उपहोमपूर्वता इति म-सा-वि-भाट्ट -शा-बिन्दु-वृ-ल। नारिष्ठहोमानामुपहोमपूर्वता इति भा। नारिष्ठहोमस्येति म-सादिशीर्षके एक- वचनमशुद्धमेव, नारिष्ठहोमानां बहुत्वात्। अथ उप- होमपूर्वता इति पदे बहुव्रीहिर्वा तत्पुरुषो वेति निश्चयो न भवति। बहुव्रीहिसूचकश्च कप्प्रत्ययः प्रायो नैव प्रयुज्यते संपादकैस्तत्रतत्र सत्यपि बहुव्रीहौ। तेन उभयमपि शीर्षकं संशयजनकमेव। नारिष्ठहोमा- नामुपहोमेभ्यः पूर्वत्वं इति तु शीर्षकमावश्यकम्।

सू० १७ ( १ ) ते पू इति भा। भा-भिन्नेषु चतुर्दशसु ग्रन्थेषु प्रकृतेः पूर्वोक्तत्वात् इत्येव पाठः।

१८ मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वाद् प्राकृतानां व्यवायः स्यात् ।

१९ अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ।

२० तथाचान्यार्थदर्शनम् ।

अधि० १०, ९ शा-बिन्दुः.

२१ कृतदेशात्तु पूर्वेषां स देशः स्यात् तेन प्रत्यक्षसंयोगोन्न्यायमात्रमितरत् । ९ बिन्दुः.

अधि० ११, १० शा-बिन्दुः.

२२ प्राकृताच्च पुरस्ताद् यत् । १० बिन्दुः.

अधि० १२, ११-शा-बिन्दुः.

२३ संनिपातश्चेद् यथोक्तमन्ते स्यात् । ११ बिन्दुः

पादे द्वितीये खलु पञ्चमस्य भाष्योदिता द्वादश नीतयः स्युः ॥

संनिपाते दैवतैः कृत त्रयोविंशतिः ॥

॥ इति पञ्चमाध्यायस्य द्वितीयः पादः ॥

॥ अथ पञ्चमाध्यायस्य तृतीयः पादः ॥

अधि १.

१ विवृद्धिः कर्मभेदात् पृषदाज्यवत् तस्य-तस्योपदिश्येत ।

२ अपिवा सर्वसंख्यां स्यात् तद्विकारः प्रतीयेत ।

---

भाष्यादपि च तथैव सिध्यतीति मतिरस्माकम् । ( २ ) म्नातं इति वि-चौ-वा-टुप्-रत्नख ।

सू० १९ (१) शब्दात् इति य ।

अधि० १० विदेवनादीनां अभिषेकपूर्वकालत्वं इति भा । विदेवनादीनां अभिषेकपूर्वता इति भा--भिन्नाः । अभिषेकात् पूर्वकालत्वं, अभिषेकात् पूर्वता इति युक्तं वक्तुं, संशयास्पदत्वात् यथाश्रुतमयुक्तम् ।

सू० २१ ( १ ) षां स्वदे इति य । ( २ ) गात् प्राय इति बिन्दुपाठस्तु न युक्तः ।

अधि० ११ सावित्रहोमादीनां इति पूर्वभागः सर्वत्र समानः । उत्तरभागस्तु दीक्षणीयपूर्वता इति भाट्ट । दीक्षणीयपूर्वप्रयोग इति म-सा-वि-शा । दीक्षणीयापूर्वकालत्वं इति भा । दीक्षणीयात्पूर्वत्वं इति बिन्दु-वृ । दीक्षणीयापूर्वप्रयोगः इति ल । कारणं विनैव अल्पाक्षरपरिवर्तनेन शीर्षकभेदकरणमिदं संपादकमहाशयानां कौतुकास्पदम् । सावित्रहोमादयः पूर्वं कर्तव्याः दीक्षणीयेष्टिश्च पश्चात्कर्तव्या इति सर्वत्र विवक्षितम् ।

अधि० १२ दीक्षितसंस्काराणां रुक्मप्रतिमोचनादिपूर्वभाविता इति भा । यजमानसंस्काराणां इति पूर्वार्धे समाने सति रुक्मप्रतिमोकात् पूर्वभाविता इति वि । रुक्मप्रतिमोकपूर्वता इति भाट्ट-शा । रुक्मप्रतिमोकपूर्वभाविता इति बिन्दुः । रुक्मप्रतिमोकात् पूर्वभावित्वं इति म-सा-वृ । अत्र तु 'रुक्मप्रतिमोकात्' इति पञ्चमीनिवेशेन अनुष्ठानक्रमः स्पष्टीकृतो भवतीति संपादकानामनुग्रहो वाचकेषु ।

अधि० १ प्रयाजादिगतैकादशादिसंख्यायाः सर्वसंपाद्यत्वं इति भा । प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्यता इति भा-भिन्नाः । सर्वसंपाद्यत्वमित्यस्य कोऽर्थः ? सर्वे के ? देवमनुष्यादयो वा, जगति वर्तमाना यजमाना वा, एकप्रयोगगता ऋत्विजो वा, एकप्रयोगगतान्यङ्गप्रधानानि वा ? सर्वैर्वा संपाद्या सर्वेषु वा संपाद्या ? । प्रयाजादीनामेकादशादिसंख्या प्रयाजादिसमुदायसंपाद्या इति तु युक्तम् ।

सू० २ (१) संख्यत्वाद् विका इति भा-म-सादयः सर्वे । ख्यात्वात् तद्विका इति टी-रत्न । सर्वसंख्या स्यात् तद्विका इति य । अत्र भाष्यं ' सर्वसंपाद्या संख्या कल्प्येत तस्मात् सर्वसंपाद्यैव संख्या ' इति । अत्र विवृद्धिः पूर्वपक्षः, सर्वसंख्या समुदायसंख्या सिद्धान्तः। तेन भा-सूत्रपाठः परिवर्तितोऽस्माभिः य-पाठानुसारेण ।

अधि० २.

३ स्वस्थानात्तु विवर्धेरन् कृतानुपूर्व्यत्वात् । २ बिन्दुः.

अधि० ३.

४ समिद्ध्यमानवर्तीं समिद्धवर्तीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् । ३ बिन्दुः

५ तच्छब्दा वा ।

६ उष्णिक्ककुभोश्चान्ते दर्शनात्

अधि० ४.

७ स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात् पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे । ४ बिन्दुः

८ पर्यास इति चान्ताऽऽख्या ।

९ अन्ते वा तदुक्तम् । ८ य.

१० वचनात्तु द्वादशाहे । ९ य.

११ अतद्विकारश्च । १० य.

१२ तद्विकारेऽप्यपूर्वत्वात् । ११ य.

अधि० ५.

---

अधि० २ प्रथमादीनां तिसृणामुपसदां स्वस्थानाऽऽवृत्तिः इति म-सा-बिन्दु-वृ । प्रथमोपसत्त्रयस्य स्वस्थानाऽऽवृत्तिः इति वि-भाट्ट-शा-ल । स्वस्थानविवृद्ध्या उपसत्संख्यासंपत्तिः इति भा । त्रिषु शीर्षकेषु भा-शीर्षकं युक्तम् । तथापि 'उपसद्विवृद्धौ स्वस्थानविवृद्ध्या अधिकसंख्यापूरणं' इत्येवावशक्यम् ।

सू० ३ (१) विवृध्येरन् इति य-भिन्नाः । परंतु विवर्धेरन् इति कर्तरि वा, विवर्ध्येरन् इति णिजन्तात् कर्मणि वा प्रयोगो योग्यः । तत्र विवर्धेरन् इति य-पाठः । (२) पूर्व्यात् इति टुप् ।

अधि० ३ धाय्याशब्दितानामेव समिद्ध्यमानवतीसमिद्धवत्योरन्तरालनिवेशः इति भा । सामिधेनीषु आगन्तूनामन्ते निवेशः इति भा-भिन्नाः । भा-भिन्नशीर्षकं त्वशुद्धमेव अन्ते निवेशाभावात् ।

सू० ४ (१) रालस इति य ।

सू० ५ (१) तच्छब्दो वा इति वृ-ल भिन्नाः । यद्यपि प्रायः सर्वत्र 'तच्छब्दः' इत्येव पाठ उपलभ्यते तथापि 'अथवा या धाय्याशब्दिकास्तास्तत्र भवितुमर्हन्ति' इति भाष्यात् 'तच्छब्दाः' इत्येव पाठो भवितुमर्हति । वृ-ल इत्यत्र च स एव दृश्यते ।

सू० ६ (१) भोरन्ते इति य-भिन्नाः । भोश्चान्ते इति तु य । भाष्ये च 'उष्णिक्ककुभोश्चान्ते प्रयोगो दृश्यते' इत्युक्तत्वात् य-पाठ एव भाष्यसंमत इति मन्यामहे ।

अधि० ४ बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालता इति सर्वे । स्तोमविवृद्धौ आगन्तूनां पर्यासोत्तरकालता इति युक्तम् ।

सू० ७ (१) द्धौ पु इति वृ-ल । बहिष्पवमाने इति पदं नास्ति तत्र ।

सू० ८ नास्तीदं सूत्रं य । पर्यासशब्दस्यार्थप्रतिपादनार्थमेवेदं सूत्रं, तच्च संमतं भाष्यकारस्येति ।

सू० ९ (१) तदुक्तं स्यात् इति य ।

सू० १० (१) वचनात्तु द्वा इति य-भिन्नेषु सर्वत्र तु-शब्दः पठ्यते । भाष्यमूले तु तु-शब्दो न दृश्यते तथापि अर्थतोऽस्ति ।

अधि० ५ तत्रैवागन्तूनां साम्नां मध्ये निवेशः इति म-सा । तत्रैव नाम ? पूर्वस्मात् शीर्षकात् 'बहिष्पवमाने' इति पदस्य प्रदर्शकं 'तत्रैव' इति पदं इति म-सासंशोधकानामभिप्रायः । परंतु शीर्षकयोर्मध्ये चतुर्थाधिकरणेन सर्वेण व्यवधानं न चिन्तितं तैः । बहिष्पवमाने एवागन्तूनां साम्नां मध्ये निवेशः इति वि-शा-ल । बहिष्पवमाने आगन्तूनां साम्नां मध्ये निवेशः इति भाट्ट-वृ । बहिष्पवमाने आगन्तूनां साम्नामन्ते निवेशः इति बिन्दुः । माध्यंदिनार्भवपवमानयोः आगन्तूनां साम्नां गायत्र्यादिष्वेव निवेशः इति भा । अत्र विद्यमानेषु पञ्चसु शीर्षकेषु भाष्यस्थमेव शुद्धं इतराणि तु विपरीतार्थानि नितान्तमशुद्धानि । ज्योतिष्टोमे त्रिष्वपि पवमानेषु यद्यपि बहिःप्रसर्पणं समानं तथापि

१३ अन्ते तूत्तरयोर्दध्यात् । १२ य, ५ बिन्दुः.
१४ अपिवा गायत्रीबृहत्यनुष्टुप्सु वचनात् । १३ य.

अधि० ६.

१५ प्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् । १४ य, ६ बिन्दुः.
१६ क्रत्वग्निशेषो वा चोदितत्वादचोदना तु पूर्वस्य । १५ य.

प्रातःसवनीये एव पवमाने 'बहिष्पवमानं' इति रूढं नामधेयम् । माध्यंदिनसवनगते पवमाने 'माध्यंदिनपवमानं' इत्येव नामधेयं, तृतीयसवनगते च 'आर्भवपवमानं' इति नामधेयम् । एवं सति बहिष्पवमाने इत्युक्ते 'प्रातःसवनगते पवमाने' इत्येवार्थः स्यात्, स च सर्वथा विरुद्धः । 'अन्ते तूत्तरयोर्दध्यात्' इति सूत्र एव तावत् उत्तरयोः इत्युक्तं, तेन माध्यंदिनार्भवपवमानयोः इत्यर्थः स्पष्ट एव । किं च विवृद्धस्तोमकेऽतिरात्रे बहिष्पवमानविषयको विचारः कृत एवाव्यवहिते प्राचीनेऽधिकरणे । अस्मिन्नधिकरणे तु उत्तरयोर्माध्यंदिनार्भवपवमानयोर्विषये एव विचारः कृतो भाष्यादौ सर्वत्र । तत्र उत्तरयोः पवमानयोः विवृद्धस्तोमकेऽतिरात्रादौ साम्नामागमः कर्तव्यः, आगमितानां च साम्नां अन्ते निवेश इति 'अन्ते तूत्तरयोर्दध्यात्' इति सूत्रेण पूर्वः पक्षः । मध्ये, तत्रापि गायत्रीबृहत्यनुष्टुप्सु एव निवेशः, नान्ते, इति सिद्धान्तः । सर्वथापि शीर्षकाणि चत्वार्यादिमानि अशुद्धानि । परंतु 'बहिष्पवमाने' इत्येकमेव पदं संपादकानामुत्स्वप्रायितत्वस्य सूचकं, बिन्दौ तु बहिष्पवमाने इत्ययुक्तमेव 'अन्ते' इति तु पाण्डित्याधिक्यम् । पाण्डित्याधिक्ये बीजं तु 'अन्ते तूत्तरयोर्दध्यात्' इत्येतत्सूत्रस्थस्य 'अन्ते' इति पदस्य स्फुरणम् । सूत्रस्थस्यैव तु 'उत्तरयोः' इति पदस्य स्फुरणं नाभूदित्यन्यदेतत् । तेन च 'बहिष्पवमाने' इत्यस्य निवेशे प्रतिबन्धकं न प्रसक्तम् । तथा पदनिवेशे साधकं तु बिन्दुमूले 'बहिष्पवमानोत्तरयोर्माध्यंदिनार्भवपवमानयोः सामागमो वक्ष्यमाणः अन्ते तृचे इति प्राप्ते' इति पङ्क्तौ प्रथमपठितत्वादसंजातविरोधिनो बहिष्पवमानपदस्य स्फुरणमेव । 'अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः' इत्येव तु सत्यम् । भाष्यशीर्षकेऽपि आदौ 'विवृद्धस्तोमक्रत्वे' इति पदमवश्यं निवेशनीयम् । अविवृद्धस्तोमकयोस्तु उत्तरयोः पवमानयोरपि नागन्तूनि भवन्ति सामानि इति ।

सू. १४

अधि० ६ अनारभ्याधीतप्रहेष्टकयोः क्रत्वग्निशेषता इति भा । प्रहेष्टकादीनां क्रत्वग्निशेषता इति भा-भिन्नाः । अत्र प्रहेष्टकादीनामिति आदिपदं व्यर्थम् । 'प्रहेष्टकमौपानुवाक्यं' इत्येव तु सूत्रम् । प्रहेष्टकस्य च अनारभ्याधीतेति विशेषणं देयम् । आरभ्याधीते प्रहेष्टके विचारानावश्यकत्वात् । भा-शीर्षकेऽपि प्रहेष्टकयोः इत्यस्य स्थाने प्रहेष्टकानां इति वक्तव्यम् । जातिनिर्देशेन द्विवचनस्योपपादने च यथासूत्रं प्रहेष्टकस्य इत्येव वक्तव्यमेकवचनम् ।

सू० १५ (१) प्रहेष्टिक इति शा । सोमनाथे तु प्रहेष्टक इत्येव । (२) स्यात्पदं नास्ति वृ ।

सू० १६ (१) शेषा वा इति ल । (२) दचोदना च पूर्वस्य इति य । दचोदना तु पूर्वस्य इति वृ-ल । दचोदना नु पूर्वस्य इति भा । दचोदनानुपूर्वस्य इति म-सा-वि-शा-चौ । दचोदनान्न पूर्वस्य इति भाटि । दचोदितानुपूर्वस्य इति भाट्ट । पाठनिर्णयोऽत्र गहनं प्रविष्टः । अत्र भाष्यं 'क्रत्वग्निशेषः स्यात् । कुतः । चोदितत्वात् । अग्निश्चेतव्यः श्रूयते । ... ... अचोदना चितिसवनयोः । नहि ते कर्तव्यतया चोद्येते' इति । तत्र चितिसवनयोः इति पदेन 'पूर्वस्य' इति सूत्रपदं व्याख्यातम् । सवनचितिशेषः इति हि पूर्वसूत्रे पदम् । एवं सति भा-सूत्रपाठस्थं 'नु' इति पदं न संगच्छते । अत्र 'अचोदना चितिसवनयोः' इतिभाष्यस्य स्थाने 'अचोदनान्न चितिसवनयोः' इति पाठः प्रदर्शितो भा-पुस्तके टिप्पण्याम् । तेन अचोदनात् इति पञ्चमी लभ्यते । तेन च भाटि-पाठोपि संगच्छते । वार्तिककृद्धे चात्र

अधि० ७.

१७ अन्ते स्युरव्यवायात् । १६ य, ७ बिन्दुः.

१८ लिङ्गदर्शनाच्च । १७ य.

१९ मध्यमायां तु वचनाद् ब्राह्मणवत्यः । १८ य.

अधि० ८.

२० प्राग् लोकंपृणायास्तस्याः संपूरणार्थत्वात् । १९ य, ८ बिन्दुः.

अधि० ९.

२१ संस्कृतेषु कर्माणि संस्काराणां तदर्थत्वात् । २० य, ९ बिन्दुः.

२२ अनन्तरं व्रतं तद्भूतत्वात् । २१ य.

२३ पूर्वं च लिङ्गदर्शनात् । २२ य.

२४ अर्थवादो वाऽर्थस्य विद्यमानत्वात् । २३ य.

२५ न्यायविप्रतिषेधाच्च । २४ य.

अधि० १०.

२६ संचिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य । २५ य, १० बिन्दुः.

२७ क्रत्वन्ते वा प्रयोगवचनाभावात् । २६य.

२८ अग्नेः कर्मत्वनिर्देशात् ।

अधि० ११.

---

न विधेते । वृ-पाठस्तु अचोदना तु पूर्वस्य इति संगच्छत एव भाष्यानुसारी च । म-सादिपाठो भाट्ट-पाठश्च नैव संगच्छते । य-पाठस्तु संगच्छत एव । वयं तु 'अचोदना तु पूर्वस्य' इति वृ-ल पाठमेव गरीयांसं मन्यामहे । भाष्यानुसारश्चास्त्येव ।

अधि० ७ चित्रिण्यादीनां मध्यचितावुपधानं इति बिन्दुः । चित्रिण्यादीनां मध्यमचितावुपधानं इति बिन्दु-भिन्ना भादयः । बिन्दुसंपादकेन तु मध्यमशब्दान्त्यस्य मस्य निगिरणेन लाघवं साधितम् । तच्च 'मध्यमायां तु' इति सौत्रप्रयोगाननुसारि ।

सू० १९ (१) वत्यः स्युः इति रन्न ।

अधि० ८ प्राग्लोकंपृणायाश्चित्रिण्याद्युपधानं इति भा । लोकंपृणातः पूर्वं चित्रिण्याद्युपधानं इति भा-भिन्नाः । भा-शीर्षकं सूत्रानुसारि भाष्यनुसारि चाक्षरशः । इतरत्तु शब्दान्तरेण सूत्राद्यर्थानुसारि इति विशेषः ।

सू० २० (१) पृणं तस्याः इति य ।

अधि० ९ इष्टिसंस्कृतामौ अग्निहोत्राद्यनुष्ठानं इति म-सा-भाट्ट-वृ । इष्टिसंस्कृतेऽग्नौ अग्निहोत्राद्यनुष्ठानं इति वि-शा-ल । अत्र समासाभावो युक्ततरः । पवमानेष्टिसंस्कृतेऽग्नौ अग्निहोत्राद्यनुष्ठानं इति बिन्दुः । अत्रेष्टिविशेषः स्पष्टं दर्शित इति युक्ततमः पाठो भाष्यानुसारी च । पवमानेष्ट्युत्तरकालं अग्निहोत्राद्यनुष्ठानं इति भा ।

सू० २१ (१) संस्कृते कर्म सं इति भा-म-सा इत्यादौ वृ-यभिन्नेषु सर्वत्र पाठः । वृ-सूत्रे कर्मशब्दो नास्ति, वृ-मूले तु अस्त्येव । संस्कृतेषु कर्म सं इति य-पाठः । कर्मशब्दस्तु सर्वत्र एकवचनान्त एव । भा-मूलं तु 'पवमानेष्टिभिः संस्कृतेष्वग्निषु कर्माणि वर्तेरन् । कुतः । संस्काराणां तदर्थत्वात्' इति । अधिकरणान्ते तु पुनः 'तस्मात् संस्कृते कर्माणि भवेयुरिति' इति । एवं च भाष्ये संस्कृतशब्दः आदौ बहुवचनान्तः अन्ते एकवचनान्तः, कर्मशब्दस्तु उभयत्रापि बहुवचनान्त एव ।

सू० २२ (१) रं च व्रतं इति वृ-ल ।

अधि० १० अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानं इति भा-बिन्दुभिन्नाः । अग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानं इति भा-बिन्दुः । ननु वर्षणं मेघानां व्रतं नत्वग्निचितः । 'वर्षति न धावेत्' इत्यादीनि तु अग्निचिद्व्रतानि ।

सू० २६ (१) णाच्च निमि इति बिन्दुः ।

सू० २८ नास्तीदं सूत्रं य ।

अधि० ११ दीक्षणीयान्ते दीक्षितस्य स्वधर्मानुष्ठानं इति भा । दीक्षाया इष्टसिद्धता इति ल । दीक्षाया इष्टिसिद्धता इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ । अत्र ल-शीर्षकमशुद्धम् । दीक्षणीयान्ते दीक्षितत्वसिद्धिः इति तु युक्तं शीर्षकम् ।

२९ परेणावेदनाद् दीक्षितः स्यात् सर्वैर्दीक्षाऽभिसंबन्धात्। २७ य, ११बिन्दुः.

३० इष्ट्यन्ते वा तदर्थो ह्यविशेषार्थसंबन्धात्। २८ य.

३१ समाख्यानं च तद्वत्। २९ य.

अधि० १२.

३२ अङ्गवत् क्रतूनामानुपूर्व्यम्। ३० य, १२ बिन्दुः.

३३ न वाऽसंबन्धात्। ३१ य.

३४ काम्यत्वाच्च। ३२ य.

३५ आनर्थक्यान्नेति चेत्। ३३ य.

३६ स्याद् विद्यार्थत्वाद् यथा परेषु सर्वस्वारात्। ३३ य.

अधि० १३.

३७ य एतेनेत्यग्निष्टोमः प्रकरणात्। ३४ य, १३ बिन्दुः.

३८ लिङ्गाच्च। ३५ य.

अधि० १४.

३९ अथान्येनेति संस्थानां वादः संनिधानात्। ३६ य, १४ बिन्दुः.

---

सू० २९ (१) दीक्षिताऽभि इति टी।

सू० ३० (१) षार्थसंयोगात् इति टी-रत्न। षाच्चार्थसंयोगात् इति य।

अधि० १२ काम्यानामनुष्ठाने पाठक्रमस्यानियामकत्वं इति भा। काम्येष्टीनामनियमेनानुष्ठानं इति भा-भिन्नाः। अनियमेनानुष्ठानं इत्यस्य कोर्थः ? भा-शीर्षकमेव तु युक्तम्।

सू० ३३ (१) वा सं इति भाट्ट-टुप्। वासं इति म-सा। उभयत्रापि अवग्रहशून्यता। परंतु 'अनङ्गत्वात्तेषां' इति वार्तिकपङ्क्तिः। तेन असंबन्धात् इत्येव च्छेदः।

सू० ३५ (१) क्यादिति इति य। (२) चेदन्तमुत्तरेणैकं य।

सू० ३६ (१) थाप इति संधाय मुद्रितं शा। तेन अकारप्रश्लेषो भाति स च नावश्यकः।

अधि० १३ अग्निष्टोमस्य प्राथम्यं इति भा। अत्र 'यज्ञेषु अग्निष्टोमस्य प्राथम्यं' इति युक्तं अन्यथा सर्वस्मादेव कर्मणोऽग्निष्टोमस्य प्राथम्यं प्रसज्जेत। यज्ञानामग्निष्टोमपूर्वकत्वं इति म-सा-बिन्दु-वृ। यज्ञानामग्निष्टोमपूर्वता इति वि-भाट्ट-शा-ल। अत्रेदमवधेयं, ५।२।८ इत्यधिकरणस्य नारिष्टहोमस्योपहोमपूर्वता इति शा-शीर्षकं, ५।२।९ इत्यधिकरणस्य तदेव वि-भाट्ट-लशीर्षकं, ५।२।९-१० अधिकरणयोः विदेवनादीनामाभिषेकपूर्वता इति भा-भिन्नेषु शीर्षकं, एवमन्यत्रापि। अग्निष्टोमपूर्वता उपहोमपूर्वता अभिषेकपूर्वता इत्यादौ यदि, एकरूपो बहुव्रीहिर्वा तत्पुरुषो वा समासः करिष्यते तदाऽपसिद्धान्तप्रसङ्गः। संपादकास्तु अविचार्यैव यथाकथमपि लिखन्तीति महदाश्चर्यम्। यत्र बहुव्रीहिस्तत्र कृपालुना पाणिनिनोक्तोऽपि कप्प्रत्ययः कस्मान्न प्रयुज्यते संपादकैः ?। यज्ञानामग्निष्टोमपूर्वकता इत्येवावश्यकम्।

अधि० १४ अग्निष्टोमविकाराणामग्निष्टोमोत्तरकालता इति भा। ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकता इति वि-भाट्ट-शा-बिन्दु-वृ। ज्योतिष्टोमादिविकाराणामग्निष्टोमपूर्वकता इति म-सा-ल।

सू० ३९ (१) स्थानां सं इति य-भिन्नाः। स्थानां वादः सं इति य। भाष्येऽपि 'अथान्येनेति किं संस्थानां वादः अथ ज्योतिष्टोमविकाराणामेव' इति, 'तासां वादः प्रकरणानुग्रहाय' इति, उत्तरसूत्रे च 'तत्प्रकृतेर्वा गवादेर्वादः स्यात्' इति, तदुत्तरसूत्रे च 'यद्येवं न तर्हि तद्विकाराणां वादः' इत्यनेकत्र वादशब्दः प्रयुक्तः। तेन य-पाठ एव भाष्यसंमत इति भाति। चौखम्बाटुप्टीकायां 'अथान्येनेति संस्था' इति मुद्रितं, आनन्दाश्रमीयटुप्टीकायां 'अथान्येनेति संस्थाः' इति मुद्रितं, तेन, 'अथान्येनेति संस्थाः संनिधानात्' इति टुप्टीकासंमतः सूत्रपाठः इत्य

४० तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते । ३७ य.

४१ प्रशंसा वा विहरणाभावात् । ३८ य.

४२ विधिप्रत्ययाद्वा नेह्यकस्मात् प्रशंसा स्यात् । ३९ य.

अधि० १५.

४३ एकस्तोमस्य वा क्रतुसंयोगात् । ४० य, १५ भिन्दुः.

४४ सर्वेषां वा चोदनाऽविशेषात् प्रशंसा स्तोमानाम् । ४१ य.

न्यायाः पञ्चदशेरिताः ॥

विवृद्धिस् तद्विकारेऽनन्तरं नवा सर्वेषामेकचत्वारिंशत् ॥

॥ इति पञ्चमाध्यायस्य तृतीयः पादः ॥

॥ अथ पञ्चमाध्यायस्य चतुर्थः पादः ॥

अधि० १.

नुमीयते । परंतु अस्मदीयटुप्टीकालिखिते ' अथान्येनेति संस्थानां संनिधानात् ' इति सर्वमेव सूत्रं लिखितं, अस्मदीयतन्त्ररत्नेप्येवम् । तेन तदनुमानं बाधितं भवति । सूत्रस्वरसस्तु ' य एतेनेत्यग्निष्टोमः प्रकरणात्, अथान्येनेति संस्थाः संनिधानात् ' इति सूत्रविन्यासानुकूलः । अथ यदि य-पाठानुसारेण भाष्यानुसारेण च वादशब्दः स्वीकरिष्यते तदा ' य एतेनेत्यग्निष्टोमस्य प्रकरणात्, अथान्येनेति संस्थानां वादः संनिधानात् ' इति सूत्रविन्यासः स्यात् । वादशब्दस्य पूर्वसूत्रे आवश्यकत्वेऽपि प्रकरणान्ते निवेशितत्वेनोभयत्रोपयोग इति वक्तुं शक्यम् । ' य एतेनानिष्ट्वाऽथान्येन यजेत ' इति तावच्छ्रुतिः । तद्गतस्य ' एतेन ' इति पदस्यार्थो निर्णीतः आद्येन सूत्रेण, ' अन्येन इति श्रौतपदस्यार्थो निर्णीत उत्तरेण सूत्रेणेति स्पष्टम् । अत एव पञ्चदशाधिकरणादौ टुप्टीकाकारैरुक्तं ' य एतेनानिष्ट्वाऽथान्येन इति द्वावपीमौ पदार्थौ विचारितौ, अथ वाक्यार्थो विचार्यते ' इति । तथा च कीदृशः सूत्रपाठोऽत्रेति निर्णेयं विद्वद्भिः ।

सू० ४१ ( १ ) सा वि इति य । सा च वि इति वृ-ल ।

सू० ४२ ( १ ) नह्येक इति ल-पाठस्तु न युक्तः ।

अधि० १५ अग्निष्टोमविकाराणां सर्वेषामेव तदुत्तरकालता इति भा । पूर्वस्मिन् भा-शीर्षकेऽपि अग्निष्टोमविकाराणां इति बहुवचनेन सर्वेषां ग्रहणं भवत्येव पुनरत्र सर्वेषामिति को विशेषः ? एकानेकस्तोमकानामिति तु सूत्रानुसारेण वक्तव्यम् । एकानेकस्तोमकानां सर्वेषामग्निष्टोमपूर्वकत्वं इति वृ-ल । एकानेकस्तोमकानां सर्वेषामग्निष्टोमपूर्वता इति भाट्ट । अत्र बहुव्रीहिद्योतनाय कप्प्रत्ययप्रयोग आवश्यकः । एकानेकस्तोमवतां सर्वेषामग्निष्टोमपूर्वकत्वं इति बिन्दुः । स्तोमवतां इति मतुप्प्रत्ययोऽत्र रोचते बिन्दुसंपादकेभ्यो न वि-भाट्टादिवत् कप्प्रत्ययः । यदि तु इतरैर्मतुप् प्रायोक्ष्यत तदा एतेभ्योऽपि कप्प्रत्ययोऽरोचिष्यत । सर्वेषामेकानेकस्तोमकानामग्निष्टोमपूर्वकता इति म-सा-वि-शा ।

सू० ४३ ( १ ) स्तोमो वा इति वृ-ल-य । एकस्तोमे वा इति वृ-ल-यभिन्नाः । अत्र भाष्यं ' किमेकस्तोमकस्य क्रतोरेष वादः उत एकस्तोमकस्यानेकस्तोमकस्य वादः ' इति । ' एकस्तोमस्य वा सर्वेषां वा ' इति विप्रतिपत्तिः साधीयसी ज्ञातुं शक्यते सूत्रद्वयात् । अन्यथा तु ' एकस्तोमो वा सर्वेषां वा ' ' इति एकस्तोमे वा सर्वेषां वा ' इति वा विप्रतिपत्तिरेव न भवति ।

सू० ४४ ( १ ) नावि इति अवग्रहराहित्यं भा-म-सा-वि-भाट्ट-शा-वृ-ल । भाष्ये तु ' कुतः अविशेषवचनादन्यशब्दस्य ' इत्युक्तत्वात् अकारप्रश्लेष आवश्यकः । ' अन्यशब्दशक्यार्थाविशेषात् ' इति वृ-मूलाच्चैवम् । ( २ ) प्रशंसार्थः स्तोमानां इति य । तत्र प्रशंसार्थो वाद इत्यन्वयः ।

अधि० १ पाठक्रमापेक्षया श्रुत्यर्थक्रमयोर्बलीयस्त्वं इति भा । पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वं इति भा-भिन्नाः । अत्र व्यस्तत्वं संजातम् । ' पाठक-

१ क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ।

अधि० २.

२ अवदानाभिघारणाऽऽसादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ।

३ यथाप्रदानं वा तदर्थत्वात् ।

४ लिङ्गदर्शनाच्च ।

५ वचनादिष्टिपूर्वत्वम् । ४ बिन्दुः.

अधि० ३, ४ मण्डनः.

६ सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् तदर्थेनानर्थकं हि स्यात् । ६ तः ७ भाट्ट.

७ तदर्थवचनाच्च नाविशेषात् तदर्थत्वम् । ८ भाट्ट.

८ अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशादानन्तर्याद् विशङ्का स्यात् । ९ भाट्ट.

---

मापेक्षया श्रुत्यर्थक्रमयोर्बलवत्त्वं ’ इति वा वक्तव्यं ‘ पाठापेक्षया श्रुत्यर्थयोर्बलवत्त्वं ’ इति वा वक्तव्यम् । प्रमाणयोर्वा प्रमेययोर्वा विरोधः संभवति । एकं प्रमाणं अपरं च प्रमेयं अनयोः कथं भो विरोधः संभवेत् ?

सू० १ क्रमको योऽर्थ इति म-सा-वि-भाट्ट-शा-चौ । अन्धगोलाङ्गूलन्यायस्येदमुदाहरणम् । महेशचन्द्रेण तथा अशुद्धं मुद्रितमिति वियासागरेणापि मुद्रितं , तदेव विस्तरसंशोधकैः प्रथमावृत्तौ, अनेकवर्षव्यवहितायां द्वितीयावृत्तावपि च स्वीकृतं, तदेव च शा-संशोधकैः स्वीकृतं, तदेव च भाट्ट-चौ संशोधकैः । क्रमस्य कोपः पाठक्रमस्य बाध इत्यर्थः । ‘ पाठक्रमो हि बाध्यते श्रुत्या अर्थेन च ’ इति भाष्यम् । परंतु यः किल भाष्यादि दृष्ट्वा सूत्राक्षरनिश्चयं चिकीर्षति तस्य तद् भाष्यमुपयुज्यते । नान्यस्य गोलाङ्गूलं धृत्वा धावतोऽन्धस्य ।

अधि० २ प्रवृत्तिक्रमापेक्षया मुख्यक्रमबलीयस्त्वं इति भा । मुख्यक्रमस्य बलीयस्त्वं इत्यसमास एव हृद्यो न समासः । मुख्यक्रमेण आग्नेयस्य पूर्वप्रदानाद्यनुष्ठानं इति म-सा-वि-भाट्ट-शा-वृ-ल । मुख्यक्रमेणाग्नेयस्य प्रथममवदानाद्यनुष्ठानं इति बिन्दुः । म-साशीर्षकात् बिन्दुशीर्षकं वरं, भा-शीर्षकमेव तु साधीयः । भा-शीर्षके शास्त्रार्थ उक्तः इतरत्र तूदाहरणम् ।

सू० ३ (१) प्रधानं इति टी-रत्नपाठो न युक्तः ।

अधि० ३ अत्र मण्डनेन पञ्चमं सूत्रं तृतीयाधिकरणत्वेन स्वीकृत्य उत्तराणि चत्वारि सूत्राणि चतुर्थाधिकरणत्वेन स्वीकृतानीति भाति । तत्तु न भाष्यसंमतम् ।

इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पः इति भा । इष्टिसोमयोः पौर्वापर्यनियमः इति वि-भाट्ट-शा । इष्टिसोमयोः पौर्वापर्यानियमः इति म-सा-बिन्दु-वृ-ल । अत्र वि-भाट्ट-शाशीर्षकं विरुद्धं, तत्र कीलकयोजकेषु वा दोष आरोप्यतां स्वीयमनश्चक्षुषोर्वा दोषः स्वीक्रियतामिति मोक्षोपायः ।

सू० ६ (१) तदन्तेना इति भा-म-सा-वि भाट्ट-शा-चौ-वा । तदन्तेन इत्यस्य न कोऽप्यर्थो ज्ञातुं शक्यते । तदर्थेन पूर्वपक्षसिद्धार्थेन योगे इति सुबोधिनीवृत्तौ व्याख्यातं । इति स एव पाठः स्वीकृतोऽस्माभिः । य-पुस्तकानुगृहीतश्चायम् ।

अत्र सोम इत्यारभ्य वचनात् इत्यन्तं षष्ठं सूत्रं, ‘तदन्तेनार्थकं हि स्यात्’ इति सप्तमं सूत्रं इति विभागो भाट्ट-सूत्रपाठे , अन्यत्र तु न तथा दृश्यते ।

सू० ७ (१) दर्थत्वं स्यात् इति वृ-ल । दर्थकम् इति य ।

सू० ८ (१) स्य प इति य । (२) कालविधानादा इति वृ-ल । (३) याद् विशेषः स्यात् इति य ।

९ इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम्। १० भाट्ट.
अधि० ४, ५ मण्डनः.
१० उत्कर्षाद् ब्राह्मणस्य सोमः स्यात्। ११ भाट्ट, ४ बिन्दुः.
११ पौर्णमासी वा श्रुतिसंयोगात्।
१२ सर्वस्य वैककर्म्यात्।
१३ स्याद्वा विधिस्तदर्थेन।
१४ प्रकरणात्तु कालः स्यात्।
अधि० ५, ६ मण्डनः.
१५ स्वकाले स्यादविप्रतिषेधात्।
१६ अपनयो वाऽऽधानस्य सर्वकालत्वात्।
( अधि० चतुर्थशेषः ).
१७ पौर्णमास्यूर्ध्वं सोमाद् ब्राह्मणस्य वचनात्।
१८ एकं वा शब्दसामर्थ्यात् प्राक् कृत्स्नविधानात्।
अधि० ६. ७ मण्डन, ५ शा–बिन्दुः.
१९ पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात्। ५ बिन्दुः.

---

सू० ९ (१) दर्थ्येन सो इति वृ। र्थ्ये न सो इति ल। भाष्ये तु सप्तम्यन्तपाठ एव।

अधि० ४ ब्राह्मणस्यापि सोमपूर्वत्वेष्टिपूर्वत्वरूपकल्पद्वयं इति भा। ब्राह्मणस्यापि इष्टिसोमयोः पौर्वापर्यनियमः इति भाट्टशीर्षकं न युक्तम्। ब्राह्मणस्यापि इष्टिसोमयोः पौर्वापर्यानियमः इति म–सा–वि–शा–बिन्दु–वृ–ल।

सू० १० (१) स्य तु सो इति य।

सू० ११ भाट्टपुस्तके उत्कर्षात् इति पूर्वसूत्रे ११ अङ्को मुद्रितः, पौर्णमासीसूत्रेऽपि स एव ११ अङ्को मुद्रितः, उत्तरसूत्रेषु चैतदनुसारेण द्वादशादयोऽङ्का मुद्रिताः। तत्कुतः इति न ज्ञायते।

सू० १२ (१) स्य चैक इति रत्न। स्य चैककर्मत्वात् इति वृ–ल।

सू० १३ (१) स्याद्विधि इति रत्न।

सू० १४ (१) तुल्यका इति सोम–य। 'अतो निर्ज्ञातस्य यागस्य कालमुपदिश्य कृतार्थं वाक्यमशक्तं कर्मान्तरविधौ' इति वार्तिकात् 'प्रकृतस्य कर्मणो ग्रहणं कालविधानार्थं स्यात्' इति भाष्याच्च "तु कालः" इत्येव पाठः सिध्यति।

अधि० ५ नर्तुं प्रतीक्षेत् इत्यादिना सोमकालबाधः इति म–सा–वि–वृ। नर्तून् सूर्क्षेत् इत्यादिना सोमकालबाधः इति भाट्ट। सोमकालबाधः इति ल। सोमपूर्वत्वकल्पे सोमस्य विहितकालबाधः इति भा। विस्तरे नर्तून् सूर्क्षेत् इत्येव वाक्यमुदाहृतं तथासति शीर्षकेपि तथैव वक्तव्यम्। एवं सुबोधिनीवृत्तावपि। म–सा–मूले तु नर्तुं प्रतीक्षेत् इत्येवोदाहृतं इति तच्छीर्षके तदुक्तमिति युक्तमेव। भाट्टे तु नर्तुं पृच्छेत्। इति वाक्यमुदाहृतं शीर्षके तु अन्यदेवेति न युक्तम्। ल–शीर्षकं तु सर्वदैव सोमकालबाधभानात् सर्वथैवायुक्तम्।

अत्र दशमादिभिः पञ्चभिः सप्तदशाष्टादशाभ्यां चेति सप्तभिः सूत्रैरेकमधिकरणं मध्ये च पञ्चदशषोडशसूत्राभ्यामेकं अतरागर्भिणी अधिकरणं पञ्चममिति ज्ञातव्यम्। इदमन्तरागर्भिण्यधिकरणं शा–बिन्दुमूलयोर्विद्यमानमपि संपादकैस्तदङ्को न वर्धितः इति इत आरभ्य अधिकरणाङ्क एकेन न्यून एव स्यात् तन्मतेन।

सू० १५ (१) कालः स्या इति चतुर्थाधिकरणसोम–य। भाष्ये तु 'स्वकाले स्यात् सोमः' इत्येव।

सू० १८ (१) एकं श इति म–सा–वि–भाट्ट–शा। एवं श इति चौ–पाठस्तु त्याज्य एव। एकं वा हविरुत्कृष्येत इति तु भाष्यम्। (२) धानं इति ल–पाठोऽपि न भाष्यविरुद्धः।

अधि० ६ आज्यस्य सोमादनुत्कर्षः इति भा–भिन्नाः। उपांशुयागस्य सोमोत्तरमनुत्कर्ष इति भा। उपांशुयाजस्येति वक्तव्यं न यागस्येति। पूर्वशीर्षकस्थात् 'सोमादनुत्कर्षः' इति वाक्यात्, सोमात् सकाशात् उत्कर्षो न, किंतु सोम एवाज्यं इत्यर्थो भाति। ततश्च सोमोत्तरमिति वक्तव्यम्।

सू० १९ (१) देवतापदं पृथक्, भावात् इति पदं पृथङ् मुद्रितं चौ–पाठे तदयुक्तं, भाष्ये वृत्तौ च

२० आज्यमपीति चेत् ।

२१ न मिश्रदेवतत्वादैन्द्राग्नवत् । २० य.

अधि० ७, ८ मण्डनः, ६ शा-बिन्दुः.

२२ विकृतेः प्रकृतिकालत्वात् सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् । २१ य, ६ बिन्दुः.

२३ द्वैयह्नकाल्ये तु यथान्यायम् । २२ य.

२४ वचनाद्वैककाल्यं स्यात् । २३ य.

अधि० ८, ९ मण्डनः, ७ शा-बिन्दुः.

२५ सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् । २४ य, ७ बिन्दुः.

अधि० ९, १० मण्डनः, ८ शा-बिन्दुः.

२६ तथा सोमविकारा दर्शपूर्णमासाभ्याम् । २५ य, ८ बिन्दुः.

पादे तुर्ये पञ्चमस्येह सम्यक् प्रोक्ता न्याया न्यायविद्भिर्दशैव ॥

क्रम पौर्णमासीवा विकृतेः पञ्चविंशतिः ॥

इति पञ्चमाध्यायस्य चतुर्थः पादः अध्यायश्च समाप्तः ॥

---

देवतायाः भावात् इत्यर्थकस्य देवताभावपदस्य दर्शनात् ।

सू० २० (१) चेदन्तमुत्तरेणैकं य ।

सू० २१ (१) वतात्वा इति बृ-ल ।

अधि० ७ विकृतानामैन्द्राग्नादीनां सद्यस्कालता इति म-सा-वि-भाट्ट-शा-बिन्दु-ल । विकृतीनामैन्द्राग्नादीनां सद्यस्कालता इति भा । वैकृतानामैन्द्राग्नादीनां सद्यस्कालता इति बृ । तत्र विकृतीनामिति सरलः पन्थाः । वैकृतानामिति वक्रम् । विकृतानां इति तु 'यद्यपि शुद्धं लोकविरुद्धं नाकरणीयं नाचरणीयम्' ।

सू० २२ (१) रा तति इति सोम-बृ-ल-य ।

सू० २३ (१) द्वैयह्ने वा य इति य । द्व्यहे भवं द्वैयह्न्यम् । द्व्यहकाले भवं द्वैयहकाल्यम् ।

अधि० ८ सांनाय्याग्नीषोमीयविकाराणां सोमोत्तरकालता इति भा । सोमात् सांनाय्यविकारादीनामुत्कर्षः इति म-सा-वि-भाट्ट-बृ-ल । सोमात् सांनाय्यादीनामुत्कर्षः इति बिन्दुः । सोमात् उत्कर्षः इत्यनेन विपरीतार्थबोधसंभवात् अयुक्तमिदं शीर्षकद्वयम् । सोमादुत्तरं इति वक्तव्यम् ।

सू० २५ (१) रादूर्ध्वं इति ल-पाठोऽशुद्धः । रास्तूर्ध्वं इति रत्न ।

अधि० ९ सोमविकाराणां दर्शपूर्णमासात् पूर्वं कर्तव्यता इति म-सा । सोमविकाराणां दर्शपूर्णमासात् प्राक् कर्तव्यता इति बिन्दुः । नितान्तमशुद्धं शीर्षकद्वयमिदम् । दर्शपूर्णमासात् इत्येकवचनं तावदशुद्धं, पूर्वं इति द्वितीयं महदशुद्धम् । दर्शपूर्णमासाभ्यामूर्ध्वं इति तु आवश्यकम् । सोमविकाराणां दर्शपूर्णमासात् प्रागकर्तव्यता इति वि-भाट्ट-शा । अत्रापि दर्शपूर्णमासात् इत्येकवचनमशुद्धमेव । प्रागकर्तव्यता इति तु शुद्धमपि न हृद्यम् । सूत्रभाष्ययोर्हि ऊर्ध्वं कर्तव्यं इति प्रातिपादितम् । सोमविकाराणां दर्शपूर्णमासाभ्यामूर्ध्वं कर्तव्यत्वं इति बृ । सोमविकाराणां दर्शपूर्णमासोत्तरकालता इति भा ।

सू० २६ (१) कारो द इति य ।

## ॥ अथ षष्ठोऽध्यायः ॥

॥ अथ षष्ठाध्यायस्य प्रथमः पादः ॥

अधि० १.

१ द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः।

२ असाधकं तु तादर्थ्यात्।

३ प्रत्यर्थं वाऽभिसंयोगात् कर्मतो ह्यभिसंबन्धस्तस्मात् कर्मोपदेशः स्यात्।

अधि० २.

४ फलार्थत्वात् कर्मणः, शास्त्रं सर्वाधिकारं स्यात्। २ बिन्दुः.

५ कर्तुर्वा श्रुतिसंयोगाद् विधिः कार्त्स्न्येन गम्यते।

अधि० ३. (सू० ६ तः १६, १९ तः२१).

६ लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः। ८ य, ३ बिन्दुः.

७ तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते। ९ य.

८ जातिं तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्। १० य.

---

अधि० (१) अधिकारन्यायः इति म–सा–वि–भाट्ट । यागादिकर्मणां स्वर्गादिफलसाधनता इति भा–बिन्दु–भिन्नाः । यागादिक्रियाणां स्वर्गफलसाधनता इति–बिन्दुः । स्वर्गकाम इति भा ।

सू० ३ (१) प्रत्यर्थं चाभि इति प्रायः सर्वे परंतु प्रत्यर्थं वाभि इति रत्न-पाठो युक्तो भाति । 'इदानीं तु यदुक्तं तत्परिहाराय ' इत्याद्युक्तेः रत्न–मूलमत्रानुकूलम् ।

अधि० २ अशक्तानामधिकारनिराकरणं इति वि–शा–ल । तिर्यक् इति भा । यागादिषु मनुष्यस्यैवाधिकारः इति म–सा । यागादिषु मनुष्याणामेवाधिकार इति भाट्ट । यागादिषु मनुष्याणामेवाधिकार इति भाट्ट । यागादिषु समर्थमनुष्यस्यैवाधिकार इति बिन्दु–वृ । म–सा–भाट्टशीर्षकं शिथिलम् । बिन्दु–वृशीर्षकं तु साधीयः ।

सू० ४ (१) फलार्थित्वात् इति य–यक्ष ।

सू० ५ (१) गम्येत इति य–यक्ष–टुप्–टी रत्न । कर्तुर्वा इति पञ्चमसूत्रोत्तरं य–यक्षपुस्तकयोः ' न देवतानां देवतान्तराभावात् । ६, नर्षीणामार्षेयाभावात् । ७ । इति सूत्रद्वयमधिकमुपलभ्यते । शाबरभाष्येऽपि एते पठिते एव, परंतु तयोः भाष्यपङ्क्तित्वमेव सिध्यति न सूत्रत्वं पञ्चमसूत्रस्थभाष्यसंदृष्टत्वात् तयोः । तत्रापि ' न देवाना देवतान्तराभावात् ' ' न ऋषीणामार्षेयाभावात् ' इति पाठः शाबरे भाष्ये । अत्र १।३।६ इति ब्रह्मसूत्रस्थं शाङ्करं भाष्यं "यदपि कर्मसु अनधिकारकारणमुक्तं ' न देवानां देवतान्तराभावात् ' ' न ऋषीणामार्षेयान्तराभावात् ' इति न तद् विद्यास्वस्ति " इति । रत्नप्रभान्यायनिर्णययोश्च ' प्रथमं सूत्रं, द्वितीयं सूत्रं ' इत्युक्तम् ।

अधि० ३ अत्र षष्ठादिषोडशान्तैः एकोनविंशाद्येकविंशान्तसूत्रैश्च एकमधिकरणं, सप्तदशाष्टादशाभ्यां च सूत्राभ्यां अन्तरागर्भिणीरूपं चतुर्थमधिकरणं इति भाष्ये स्पष्टम् । म–सा–वि–भाट्ट–शा–वृ–लग्रन्थसंपादकैस्तु चतुर्थाधिकरणत्वेनैव सप्तदशाद्येकविंशान्तसूत्राण्युपन्यस्तानि । तदयुक्तम् । क्रतुषु स्त्रिया अप्यधिकारः इति भा । यागादिषु मिलितयोः स्त्रीपुंसोरधिकार इति बिन्दुः । अत्र स्त्रीपुंसोः इत्यशुद्धं अचतुरविचतुरेत्यनेनाजन्तत्वेन निपातनात् । यागादिषु स्त्रीपुंसयोरुभयोराधिकारः इति म–सा–वृ । स्त्रिया अनधिकारनिराकरणं इति वि–भाट्ट–शा–ल ।

सू० ६ (१) लिङ्गनि इति टी ।

सू० ७ (१) ज्ञाने इति वृ–ल ।

सू० ८ एतत्सूत्रोत्तरं ' विभक्त्येति चेन्न ' इत्यधिकं शङ्कासूत्रं वृ–ल । तत्समाधानं च चोदितत्वादित्यादिसूत्रेणेति व्यवस्था वृत्तौ । भाष्ये तु ' जातिं तु ' इति सूत्रीयविवरणे एव ' विभक्त्येति चेत् ' इति शङ्कामुपन्यस्य ' तन्न । कस्मात् । पुंवचनत्वात्

९ चोदितत्वाद् यथाश्रुति। ११य, १० वृ—ल.
१० द्रव्यवत्त्वात्तु पुंसां स्याद् द्रव्यसंयुक्तं, क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां, द्रव्यैः समानयोगित्वात्। १२ य, ११ वृ—ल.
११ तथा चान्यार्थदर्शनम्। १३य, १२ वृ—ल.
१२ तादर्थ्यात् कर्मतादर्थ्यम्। १४ य, १३ वृ—ल.
१३ फलोत्साहाविशेषात्तु। १५ य, १४ वृ—ल.
१४ अर्थेन च समवेतत्वात्। १६ य, १५ वृ—ल.
१५ क्रयस्य धर्ममात्रत्वम्। १७य, १६ वृ—ल.
१६ स्ववत्तामपि दर्शयति। १८ य, १७ वृ—ल.

अधि० ४ (अन्तरागार्भिणी)

१७ स्ववतोस्तु वचनादैककर्म्यं स्यात्। १९ य, ४ बिन्दुः.
१८ लिङ्गदर्शनाच्च। २० य.

(तृतीयाधिकरणशेषः)

१९ क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते। २१ य.
२० फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः।
२१ फलवत्तां च दर्शयति। २२ य.

अधि० ५.

२२ द्व्याधानं च द्वियज्ञवत्। २३य,५बिन्दुः.
२३ गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात्। २४ य.

अधि० ६.

२४ तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्। २५ य, ६ बिन्दुः.

अधि० ७.

२५ चातुर्वर्ण्यमविशेषात्। २६ य, ७ बिन्दुः.
२६ निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसंबन्धः क्रतुषु ब्राह्मणश्रुतेरित्यात्रेयः। २७ य.

---

स्त्रीनिवृत्तावशक्तिः' इत्यादिना समाहितम्। 'अथ यदुक्तं' इत्यादिना च पुनराशङ्क्य 'तत् परिहर्तव्यमत्रोच्यते' इत्यादिना 'चोदितत्वाद्यथाश्रुति' इति सूत्रेण समाहितम्।

सू० ९ (१) यथा श्रुतिः इति चौ-पाठस्तु अशुद्ध एव।

सू० १० (१) वत्त्वात् पुंसां इति वृ।

सू० १३ (१) तु-शब्दो नास्ति वृ-ल।

सू० १६ (१) वत्तां चापि इति य। इदं सूत्रं नास्ति वृ-ल। 'इदं सूत्रं नास्ति क्वचित्' इति म-टि।

अधि० ४ कर्मसु दंपत्योः सहाधिकारः इति भा। दंपत्योः सहाधिकारः इति भाट्ट। यागे दंपत्योः सहाधिकारः इति भा-भाट्टभिन्नाः।

सू० २० नास्तीदं सूत्रं य।

सू० २१ (१) च-शब्दो नास्ति शा-चौ। 'इदं सूत्रं क्वचित् सूत्रतया नाधारि' इति मटि।

अधि० ५ आधाने पुरुषद्वयकर्तृकतानिराकरणं इति वि-भाट्ट-शा। परंतु कर्तृकता इति भाट्ट, कर्तृकत्वं इति वि-शा। आधाने पुरुषद्वयादिकर्तृत्वनिराकरणं इति ल। नेदं युक्तम्। एकस्य पुंस एवाधानेऽधिकार इति बिन्दुशीर्षकमयुक्तम्। एकस्यैव पुंस आधानाधिकारः इति म-सा। इदमपि न साधु। एकस्यैव पुंस आधानेऽधिकार इति वृ। इदमपि न साधु। एकस्यैव पुरुषस्य स्त्रीसद्वितीयस्याधानेऽधिकार इति भा-शीर्षकं तु साधीयः।

सू० २२ (१) च शब्दो नास्ति य।

सू० २३ (१) पत्न्यां द्वि इति मटि-टी-रत्न।

अधि० ६ पत्न्या यावदुक्ताशीर्ब्रह्मचर्यादावेवाधिकारः इति म-सा-वृ। पुंस एवोपस्थानाद्यधिकारः इति वि-शा ल। पुरुषस्यैवोपस्थानाद्यधिकारः इति भाट्ट। याजमानमिति समाख्यातानां पत्नीकर्तृकत्वाभावः इति भा। अत्र भा-शीर्षकं पूर्वपक्षनिराकरणसूचकं, म-सा-बिन्दु-वृशीर्षकं तु सिद्धान्तप्रतिपादकमिति विशेषः।

अधि० ७ अपशूद्राधिकरणं इति भा। यागे शूद्रस्यानधिकारः इति म-सा-बिन्दु-वृ। शूद्रस्यानधिकारः इति वि-भाट्ट-शा-लशीर्षकं शिथिलम्।

सू० २६ (१) निर्देशमात्राद्वा इति मटि। (२) ये सं इति ल। येऽसं इति वृ। येऽप्यसं इति य। (३) बन्धात् क इति य।

२७ निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारं स्यात्। २८ य.

२८ अपिवाऽन्यार्थदर्शनाद् यथाश्रुति प्रतीयेत। २९ य.

२९ निर्देशात्तु पक्षे स्यात्। ३० य.

३० वैगुण्यान्नेति चेत्।

३१ न काम्यत्वात्।

३२ संस्कारे च तत्प्रधानत्वात्। ३१ य.

३३ अपिवा वेदनिर्देशादपशूद्राणां प्रतीयेत। ३२ य.

३४ गुणार्थित्वान्नेति चेत्। ३३ य.

३५ संस्कारस्य तदर्थत्वाद् विद्यायां पुरुषश्रुतिः। ३३ य.

३६ विद्यानिर्देशान्नेति चेत्। ३४ य.

३७ अवैद्यत्वादभावः कर्मणि स्यात्। ३४य.

३८ तथा चान्यार्थदर्शनम्। ३५ य.

अधि० ८.

३९ त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धत्वात्। ३६ य, ८ बिन्दुः.

४० अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः। ३७ य.

अधि० ९.

४१ अङ्गहीनश्च तद्धर्मा। ३८ य, ९ बिन्दुः.

अधि० १०, ९ भाट्ट.

४२ उत्पत्तौ नित्यसंयोगात्। ३९ य, १० बिन्दुः.

अधि० ११, १० भाट्ट.

४३ अत्र्यार्षेयस्य हानं स्यात्। ४० य, ११ बिन्दुः.

---

सू० २७ (१) र्थे च बा इति वृ–ल। (२) कारः स्यात् इति वृ–ल–चौ–रत्न।

सू० २८ (१) श्रुतिः प्र इति चौ–पाठो न शुद्धः।

सू० २९ (१) स्युः इति य।

सू० ३० (१) इदमुत्तरं चेति द्वे सूत्रे न स्तः य।

सू० ३३ (१) शूद्रं प्र इति य। (२) तीयते इति शा।

सू० ३४ (१) गुणार्थत्वा इति वृ–य–टुप्–टी रत्न। भाष्ये तु गुणार्थित्वादित्येव। (२) चेदन्तमुत्तरेणैकं य।

सू० ३६ (१) चेदन्तमुत्तरेणैकं य।

सू० ३८ (१) दर्शने इति य। यक्ष-पुस्तकेऽपि दर्शने इत्येव प्रथमतो लिखितमासीत्, पश्चात्तु केन चित् हरितालेन मात्रां निरस्यानुस्वारः प्रदत्तः।

अधि० ८ अद्रव्यस्याप्यधिकारः इति भा। निर्धनस्याप्यधिकारः इति भाट्ट। निर्धनाधिकारः इति वि–शा–ल। यागे निर्धनस्याधिकारः इति सा। धनवतस्तर्हि नैवाधिकारो वा ? शीर्षकद्वयमिदमशुद्धम्। यागे निर्धनस्याप्यधिकारः इति म–बिन्दु–वृ। इदं तु सर्वतः साधीयः।

सू० ३९ (१) कर्मणा इति रत्न–पाठस्तु हस्तदोषः। (२) सिद्धित्वात् इति य–रत्नभिन्नाः सर्वे। द्रव्यसिद्धित्वात् इति प्रतीकं गृहीत्वा द्रव्यसाध्यत्वात् इति व्याख्यातं सुबोधिनीवृत्तौ। द्रव्येण सिद्धिर्यस्य इति व्यधिकरणबहुव्रीह्यपेक्षया 'कर्मणः द्रव्येण सिद्धत्वात्' इति तत्पुरुषे लाघवात् द्रव्यसिद्धत्वात् इति य–रत्नपाठमेव साधीयांसं मन्यामहे। यक्ष-पुस्तके तु सिद्धत्वादित्यस्य स्थाने सिद्धित्वात् इति विपरिवर्तितं पश्चात् केन चित्।

सू० ४० (१) अर्थाद्धि द्रव्यसंयोगः इति सूत्रांशः टी–रत्नयोर्नास्ति, वा–टुप्पुस्तकयोस्तु अस्त्येव। अर्थाच्च द्रव्यसंयोगः इति भाष्यम्।

अधि० ९ अङ्गहीनस्यापि यागेऽधिकार इति बिन्दु–वृ। अङ्गहीनस्याप्यधिकार इति भाट्ट। अङ्गहीनाधिकार इति वि–शा–ल। तर्हि किं साङ्गस्य नैवाधिकारः ? प्रतिसमाधेयाङ्गवैकल्याधिकारः इति भा। अत्र अपिशब्द उपसंख्यातव्यः। अङ्गहीनस्याप्यधिकार इति म–सा।

अधि० १० अचिकित्स्याङ्गवैकल्यस्य यागानधिकार इति म–सा–बिन्दु–वृ। अचिकित्स्याङ्गवैकल्यस्यानधिकार इति वि–भाट्ट–शा–ल। अप्रतिसमाधेयाङ्गवैकल्यस्य कर्मानधिकार इति भा।

अधि० ११ दर्शपूर्णमासयोः त्र्यार्षेयस्यैवाधिकारः इति सर्वे।

अधि० १२, ११ भाट्ट.

४४ वचनाद् रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात्। ४१ य, १२ बिन्दुः.

४५ न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात्। ४२ य.

४६ अकर्मत्वात्तु नैवं स्यात्। ४३ य.

४७ आनर्थक्यं च संयोगात्। ४४ य.

४८ गुणार्थेनेति चेत्। ४५ य.

४९ उक्तमनिमित्तत्वम्। ४५ य.

५० सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन्। ४६ य.

अधि० १३, १२ भाट्ट.

५१ स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्। ४७ य, १३ बिन्दुः.

५२ लिङ्गदर्शनाच्च। ४८ य.

॥ न्यायाः पादे त्रयोदश ॥

द्रव्याणां चोदितत्वात् क्रीतत्वात् संस्कारे वचनादष्टाचत्वारिंशत् ॥

॥ इति षष्ठाध्यायस्य प्रथमः पादः ॥

* * * *

॥ अथ षष्ठाध्यायस्य द्वितीयः पादः ॥

अधि० १.

१ पुरुषार्थैकसिद्धित्वात् तस्यतस्याधिकारः स्यात्।

२ अपिचोत्पत्तिसंयोगाद् यथा स्यात् सत्त्वदर्शनं तथाभावोऽविभागे स्यात्।

अधि० २.

३ प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात्। २ बिन्दुः.

४ प्रत्यर्थं श्रुतिभाव इति चेत्।

---

अधि० १२ चातुर्वर्ण्यातिरिक्तस्य रथकारस्याधानेऽधिकार इति म-सा-वृ। रथकार इति भा-म-सा-भाट्ट-ल। रथकारस्याधानाधिकार इति बिन्दुः। रथकाराधिकार इति वि-भाट्ट-शा।

सू० ४४ (१) धाने स इति वृ-ल-रत्न। धानस्य स इति बिन्दु-य। धानस्यास इति मटि-शापाठस्तु न युक्तः।

सू० ४५ (१) न्यायो वा इति ल-य।

सू० ४८ (१) गुणार्थमिति इति वृ-ल। (२) चेदन्तमुत्तरेणैकं य।

अधि० १३ त्रैवर्णिकभिन्नस्य निषादस्य रौद्रयागेऽधिकारः इति म-सा-वृ। त्रैवर्णिकभिन्नस्य रौद्रयागेऽधिकार इति बिन्दुः। निषादशब्द आवश्यक एवात्र, त्रैवर्णिकशब्दस्तु भवतु वा मा वा। निषादस्थपतिन्याय इति भा-म-सा-वि-शा-ल। निषादस्थपत्यधिकार इति भाट्ट।

सू० ५१ (१) निषादं इति बिन्दु-पाठस्तु अशुद्ध एव।

अधि० १ प्रत्येकस्य सत्रिणः फलसंबन्धः इति ल। सत्रे प्रत्येकं कृत्स्नफलभोक्तॄणामधिकारः इति भा। सत्रे प्रत्येकस्य फलसंबन्धः इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ।

सू० १ (१) सिद्धत्वात् इति शा।

सू० २ (१) अपिवोत्प इति वृ-ल। अपि चोत्प इत्येव तु युक्तम्। (२) योगो य इति म-सा-वि-भाट्ट-शा-चौ। (३) स्यात् सावद इति वृ-सूत्रे, वृ-मूले च, परंतु तदशुद्धमेव। सर्वद इति ल-पाठोपि अशुद्धः। (४) भावो वि इति अकारप्रश्लेषशून्यता म-सा-भाट्ट-वृ-ल-चौ। भावो विकल्पे स्यात् इति वि-शा। भावे भागः स्यात् इति य।

अधि० २ दर्शपूर्णमासादीनां नियतैककर्तृकत्वं इति भा। दर्शादौ कर्त्रैक्यनियमः इति म-सा-वि-भाट्ट-शा-बिन्दु-वृ। दर्शादौ कर्त्रैक्यनियमः इति ल।

सू० ३ (१) गेऽपु, गे पु, इति च द्वेधा पाठो वार्तिके। तथा च वार्तिकं 'प्रयोगे पुरुषस्याश्रवणादित्यर्थः। अथवा प्रयोगे पुरुषश्रुतेः प्रयोगे पुरुषं श्रावयित्वा कृतार्थः शब्दः' इति। (२) याथाकामी इति वृ-सूत्रे, यथाकामी इति तु वृ-मूले। याथाकामी इति य। यथाकामि इति शा-सोम।

सू० ४ (१) प्रत्यर्थश्रु इति टी। (२) चेदन्तमुत्तरेणैकं य।

५ तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् । ४ य.
६ चोदनैकत्वात् । ५ य.
७ अपिवा कामसंयोगे संबन्धात् प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् । ६ वृ–लभिन्न.
८ अन्यस्य स्यादिति चेत् । ७ वृ–लभिन्न.
९ अन्यार्थेनाभिसंबन्धः । ८ वृ–ल–भिन्न, ७ य.
१० फलकामो निमित्तमिति चेत् । ९ वृ–ल–भिन्न, ८ य.
११ न नित्यत्वात् । १० वृ–लभिन्न, ८ य.
१२ कर्म तथेति चेत् । ११ वृ–लभिन्न, ९ य.
१३ न समवायात् । १२ वृ–लभिन्न, ९ य.

अधि० ३.

१४ प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वात् । १३ वृ–लभिन्न, १० य, ३ बिन्दुः.
१५ फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते । १४ वृ–लभिन्न, ११ य.
१६ नियमो वा तन्निमित्तत्वात् कर्तुस्तत् कारणं स्यात् । १५ वृ–लभिन्न, १२ य.

अधि० ४.

१७ लोके कर्माणि वेदवत् ततोऽधिपुरुषज्ञानम् । १६ वृ–लभिन्न, १३ य, ४ बिन्दुः.
१८ अपराधेऽपि च तैः शास्त्रम् । १७ वृ–लभिन्नः, १४ य.

---

सू० ५ (१) तादर्थ्येन इति तृतीयान्तता चौ । तादर्थ्यानुगुणार्थता नानुक्तेऽर्थो इति रत्न ।

सू० ६ इदं सूत्रं वृ–ल–य–पुस्तकेषु वर्तते । भाष्येपि इदं सूत्रं तद्व्याख्या च वियत एव पूर्वसूत्रभाष्याद्विभक्तता च स्पष्टा । तथापि संशोधकैः सूत्रत्वेन तत् कुतो न गृहीतमिति न ज्ञायते । अस्माभिस्तु गृहीतं तत् ।

सू० ७ (१) प्रयोगोऽपदि इति वि–शा पाठो न युक्तः । (२) विषाणवत् इति भाट्ट–य–रत्न । परंतु श्रुतौ 'कृष्णविषाणया कण्डूयते' इति स्त्रीलिङ्ग एव प्रयुक्त इत्यत्रापि तथैव पाठो युक्तः ।

सू० ८ (१) अन्यः स्या इति मटि–य–रत्न । 'अन्यस्यापीति चेन्न' इति सूत्रपाठः वृ–ल–टुप् । (२) चेदन्तमुत्तरेणैकं य ।

सू० ९ (१) अर्थेनाभिसंबन्धः इति य–पाठे अन्यशब्दो नास्ति ।

सू० १० (१) चेदन्तमुत्तरेणैकं य ।

सू० १२ (१) चेदन्तमुत्तरेणैकं य ।

अधि० ३ आरब्धकाम्यकर्मणोऽपि समाप्तिनियमः इति भा–भिन्नाः । प्रारब्धकाम्यकर्मणः समाप्तिनियमः इति भा ।

सू० १४ (१) ताऽसंभवस्य इति चौ । (२) स्य क्रियानियम्यत्वात् इति भा । परंतु सर्वत्र भा–भिन्ने क्रियानिमित्तत्वात् इत्येव पाठः । भाष्यमूलेपि 'क्रियाया हि निमित्तमारम्भः' इत्येव ।

सू० १५ (१) द्वा नि इत्यवग्रहमदत्वा भित्त्वा च मुद्रितं वृ–सूत्रे, वृ–मूले तु अनियमः इत्येव व्याख्यातम् । वृ–सूत्रवत् टुप् ।

सू० १६ (१) वा कर्मनिमि इति य ।

अधि० ४ आरब्धलौकिककर्मणः समाप्तेरनियमः इति म–सा । आरब्धलौकिककर्मणः समाप्त्यनियमः इति बिन्दु–वृ । प्रारब्धलौकिककर्मसमाप्तेरनियमः इति भा । लौकिककर्मणि आरब्धेऽपि समाप्त्यनियमः इति ल । लौकिककर्मणि समाप्त्यनियमः इति वि–भाट्ट–शा । तृतीयेऽधिकरणे 'प्रारब्धकर्मणः समाप्तिनियमः' इति भा–शीर्षकं, चतुर्थेऽधिकरणे च 'प्रारब्धलौकिककर्मसमाप्तेरनियमः' इति पूर्वत्र समाप्तेर्विधेयकोटौ प्रवेशः कृतः उत्तरत्र तु समाप्तिः उद्देश्यकोटौ प्रवेशिता । बीजाभावात्तु एवंविधं वैरूप्यमयुक्तम् ।

सू० १७ (१) कर्माणि इति वृ–ल ।

सू० १८ (१) धे च इति मटि–य । तत्र अपिशब्दो नास्ति ।

१९ अशास्त्रा[1]तूपसंप्राप्तिः, शास्त्रं स्यान्न[2] प्रकल्पकं, तस्मादर्थेन गम्येताप्राप्ते वा शा[3]स्त्रमर्थवत्। १८ वृ–लभिन्न, १५ य.

अधि० ५.

२० प्रतिषेधेष्व[1]कर्मत्वात् क्रिया स्यात् प्रतिषिद्धा[2]नां, विभक्तत्वादकर्मणाम्।
२१वृ–ल, १९भा–म–सा–वि–भाट्ट–शा चौ, १६ य, ५ बिन्दुः.

२१ शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो[1] विधीयेते[2] तयोरसमवायित्वात् तादर्थ्ये[3] विध्यतिक्रमः। २२ वृ–ल, २० भा–म–सा–वि–भाट्ट–शा–चौ, १७ य.

अधि० ६.

२२ तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्। २३ वृ–ल, २१ भा–म–सा–वि–भाट्ट–सा–चौ, १८ य, ६ बिन्दुः.

२३ अपिवा वेदतुल्यत्वादुपायेन प्रवर्तेरन्। २४ वृ–ल, २२ भा–म–सा–वि–भाट्ट शा–चौ, १९ य.

अधि० ७.

२४ अभ्यासो[1]ऽकर्मशेषत्वात् पुरुषार्थो[2] विधीयते। २५ वृ–ल, २३ भा–म सा–वि–भाट्ट–शा–चौ, २० य, ७ बिन्दुः.

२५ तस्मिन्नसंभवन्नर्थात्[1] [2] । २६ वृ–ल, २४ भा–म–सा–वि–भाट्ट–शा–चौ, २१य.

२६ न[1] कालेभ्य उपदिश्यन्ते। २७ वृ–ल, २५ भा-म–सा-वि-भाट्ट-शा-चौ, २२ य.

---

सू० १९ (१) स्त्रात्तूप इति भाट्ट–वृ–ल–य। वृ–मूले तु ‘ अशास्त्रा निर्मूला ’ इत्येव (२) स्यादप्र इति य। (३) प्ते शा इति म–वि–शा–वृ–ल–य।

एतत्सूत्रोत्तरं ‘ देवताश्रये च ’ इत्यधिकं सूत्रं वृ–ल। भाष्येऽपि वर्तत एवेदं परंतु तद् भाष्यमेवेति भाति न सूत्रं नाम। तथा च पङ्क्तिः “ शास्त्रोक्ते च सामिकृते त्यक्ते, अत्यन्तं शिष्टा गर्हन्ते देवताश्रये च। ननु अत्रापि देवताः परिगृहीताः ‘ अस्यां दिशीयं देवता यक्ष्यते, अस्यामियं ’ इति। उच्यते। पुरुषमनु देवताः शिष्टाः स्मर्यन्ते, न गृहमनु। तस्माददोष इति ” इति। अत्र निर्णयन्तु विद्वांसः।

अधि० ५ कलञ्जन्यायः इति म–सा–भाट्ट। निषेधातिक्रमे पुरुषप्रत्यवायः इति भा। पुरुषस्य प्रत्यवाय इत्येव वक्तव्यं, समासोऽत्र न युक्तः। नह्यत्र निषेधातिक्रममुद्दिश्य पुरुषप्रत्यवायो विधीयते किंतु पुरुषकृतविध्यतिक्रममुद्दिश्य प्रत्यवायमात्रं विधीयते। प्रतिषिद्धकर्मणामनुष्ठाने अनिष्टप्राप्तिः इति वृ। प्रतिषिद्धकर्मणामनुष्ठाने अनिष्टापातः इति म–सा–वि–शा। प्रतिषिद्धकर्मणामनुष्ठाने अनिष्टाप्राप्तिः इति ल–शीर्षकं विपरीतार्थकम्। प्रतिषिद्धकर्मानुष्ठाने अनिष्टप्राप्तिः इति बिन्दुः। प्रतिषिद्धानुष्ठाने अनिष्टापातः इति भाट्ट।

सू० २० (१) धे त्वक इति वि। (२) प्रतिषेधानां इति य।

सू० २१ (१) षार्थौ विधीयन्ते इति रत्न। (२) धीयेत इति वृ–सूत्रे, धीयते इति वृ–मूले। धीयेत इति ल। (३) दर्थ्येन वि इति य।

अधि० ६ गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यता इति भा–भिन्नाः। स्मार्तादीनामपि उपनयनोत्तरकालकर्तव्यत्वं इति भा।

अधि० ७ अग्निहोत्रन्याय इति म–सा–वि–भाट्ट। अग्निहोत्रादिकर्मणां विहितकालकर्तव्यत्वं इति भा। अग्निहोत्रादियावज्जीवकर्मणां स्वकालमात्रकर्तव्यता इति म–सा–वि–भाट्ट–शा–बिन्दु–वृ–ल।

सू० २४ (१) सो वा क इति शा। ‘ वाशब्दो निषेधे। नायमभ्यासः अकर्मत्वात् ’ इति सोमनाथेन व्याख्यातत्वात् शा–पाठो न युक्तः। सोवाक इति य। अभ्यासे क इति चौ पाठस्तु नैव विचार्यः चौपाठत्वादेव। नानाविधापपाठप्रदर्शनार्थमेव हि चौखम्बासंशोधकैर्मुद्रितोऽयं सूत्रपाठः। (२) षार्थोऽभिधी- इति मटि।

सू० २५ (१) एतस्मिन्न इति वृ–ल। (२) वन्नार्थात् इति य।

सू० २६ (१) न शब्दो नास्ति ‘ कालो ह्युपदिश्यते ’ इत्येव सूत्रं य।

२७ दर्शनात् काललिङ्गानां कालविधानम् । २८ वृ-ल, २६ भा-म-सा-वि-भाट्ट-शा, २६-२७ चौ, २३ य.

अधि० ८.

२८ तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत । २९ वृ-ल, २७ भा-म-सा-वि-भाट्ट-शा, २४ य, ८ बिन्दुः.

२९ तथाहि लिङ्गदर्शनम् । ३० वृ-ल, २८ भा-म-सा-वि-भाट्ट-शा, २५ य.

अधि० ९.

३० तथाऽन्तःक्रतुप्रयुक्तानि । ३१ वृ-ल, २९ भा-म-सा-वि-भाट्ट-शा, २६ य, ९ बिन्दुः.

अधि० १०.

३१ आचाराद् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् । ३२ वृ-ल, ३० भा-म सा-वि-भाट्ट-शा-चौ, २७ य, १० बिन्दुः.

अधि० ११, ११ तः १२ मण्डनः.

३२ ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् । ३३ वृ-ल, ३१भा-म-सा-वि-भाट्ट-शा-चौ, २८ य, ११ बिन्दुः.

षष्ठस्य पादे कथिता द्वितीये न्याया इह द्वादश नीतिविद्भिः ॥
पुरुष फलार्थि तस्मिन्नष्टाविंशतिः ॥

॥ इति षष्ठाध्यायस्य द्वितीयः पादः ॥

* * * *

॥ अथ षष्ठाध्यायस्य तृतीयः पादः ॥

अधि० १.

---

सू० २७ (१) लिङ्गानां इत्यन्तमेव सूत्रं 'कालविधानं' इति पदं नास्त्येव य-पुस्तके । चौ-पुस्तके तु " दर्शनात् काललिङ्मानाम् ॥२६॥ कालविधानम् ॥ २७ " इति मुद्रितम् ।

अधि० ८ अग्निहोत्रादिकर्मणां निमित्तानुरोधेनावृत्तिः इति भा । अग्निहोत्रादीनां स्वकालावृत्त्या आवृत्तिः इति म-सा-वि-शा-बिन्दु-वृ-ल । तेषां स्वकालावृत्त्या आवृत्तिः इति भाट्ट । भाट्टसंपादकसंपादितायां अधिकरणनामधेयानुक्रमणिकायां किल शीर्षकाणि ऊर्ध्वाधोभावेन लिखितानि तथा सति भाट्ट-शीर्षकस्थस्य 'तेषां' इति पदस्य अर्थः, ऊर्ध्वलिखितं पदं दृष्ट्वा 'अग्निहोत्रादियावज्जीवकर्मणां' इति भवतीति निश्चेतुं शक्यमिति विचार्य 'अग्निहोत्रादियावज्जीवकर्मणां स्वकालावृत्त्या आवृत्तिः' इति मुद्रणेन जनिष्यमाणां पुनरुक्तिं परिजहार भाट्ट-संपादकः । सत्यमिदं, तथापि नैतन्मनः संतोषयति ।

सू० २८ (१) तैरन् इति य ।

सू० २९ (१) तथा च लि इति य ।

अधि० ९ क्रत्वर्थनैमित्तिकानां निमित्ताऽऽवृत्तौ आवृत्तिः इति भा । दर्शादौ भेदादिनिमित्तावृत्त्या आवृत्तिः इति वृ । दर्शादौ भेदादिनिमित्तावृत्त्या होमावृत्तिः इति ल । दर्शादौ भेदाद्यावृत्त्या होमावृत्तिः इति म-सा-वि-भाट्ट-शा-बिन्दुः ।

सू० ३० (१) क्रतुयुक्तानि इति वृ-ल । क्रतुसंयुक्तानि इति शा-बिन्दु-य । इदमुत्तरं चेति सूत्रद्वयं मिलित्वा एकमेव त्रिंशं सूत्रं चौ-पुस्तके । चौ-पाठस्याविचार्यता प्रागुक्तैव ।

अधि० १० गुर्वनुगमनादीनां निमित्तावृत्तौ आवृत्तिः इति भा । गुर्वनुगमादीनां प्रतिनिमित्तमावृत्तिः इति भा-भिन्नाः ।

अधि० ११ ऋणत्रयापाकरणस्य ब्राह्मणक्षत्रियवैश्यानां नित्यता इति म-सा-वि-शा-वृ । ऋणत्रयापाकरणस्य त्रैवर्णिकनित्यत्वं इति भाट्ट । ऋणत्रयापाकरणस्य त्रैवर्ण्यानां नित्यता इति ल । त्रैवर्ण्यस्य इत्येव वक्तव्यम् । ज्योतिष्टोमादीनां त्रैवर्णिकस्य नित्यता इति भा । द्विजानां ऋणत्रयापाकरणस्य नित्यता इति बिन्दुः ।

अत्र भाष्ये वर्णकद्वयं कृतम् । तदेव चाधिकरणद्वयत्वेन स्वीकृतं मण्डनेन । 'यज्ञः प्रजा चाध्ययनं च नित्यं' इत्येकादशं, 'वर्णत्रये नित्यमिदं त्रयं स्यात्' इति द्वादशं इति ।

अधि० १ नित्ये यथाशक्त्याङ्गानुष्ठानं इति भा भाट्टभिन्नाः । नित्ये यथाशक्त्यनुष्ठातुरपि अधिकारः इति भा । नित्ये यथाशक्त्यनुष्ठानं इति भाट्ट ।

१ सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात् ।
२ अपिवाऽप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत् तदर्थत्वात् ।
३ तदकर्मणि च दोषस्तस्मात् ततो विशेषः स्यात् प्रधानेनाभिसंबन्धात् ।
४ कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यात् ।
५ अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद् यथा क्रत्वन्तरेषु ।
६ विध्यपराधे च दर्शनात् समाप्तेः ।
७ प्रायश्चित्तविधानाच्च ।

अधि० २.

८ काम्येषु चैवमार्थित्वात् । २ बिन्दुः.
९ असंयोगात्तु नैवं स्याद् विधेः शब्दप्रमाणत्वात् ।
१० अकर्मणि चाप्रत्यवायात् ।

अधि० ३.

११ क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात् । १० य, ३ बिन्दुः.
१२ अपिवाऽव्यतिरेकाद् रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् । ११ य.

अधि० ४.

१३ श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात् । १२ य, ४ बिन्दुः.
१४ क्वचिद्विधानाच्च । १३ य.
१५ आगमो वा चोदनाऽर्थाविशेषात् ।१४य.

---

सू० २ ( १ ) देशः स्यात् इति य । ( २ ) नेऽप्यर्थ इति टुप् । ने ह्यर्थनिवृत्तिः इति ल-य । ( ३ ) रत्र त इति श्र-ल ।

सू० ३ ( १ ) षस्ततो इति य । ( २ ) बन्धः इति रत्न ।

सू० ४ ( १ ) स्यादिति इति श्र-ल-य भिन्नेषु । तन्त्ररत्नेऽपि इति शब्दो नास्ति ।

सू० ५ ( १ ) अर्थव्य इति य । सर्वस्य इति शा-चौ ।

अधि० २ अङ्गवैकल्ये कामस्य निष्फलत्वं इति भा-भाट्टभिन्नेषु । काम्यस्याङ्गवैकल्ये निष्फलत्वं इति भाट्ट । काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारः इति भा ।

सू० १० ( १ ) नास्तीदं सूत्रं य ।

अधि० ३ द्रव्यभेदेपि कर्माभेदः इति भा-भिन्नेषु । द्रव्यभेदेऽपि यागाभेदः इति भा ।

सू० ११ ( १ ) माश्रयत्वा इति बिन्दुः ।

सू० १२ ( १ ) वा व्य इति टुप्पाठो । न युक्तः । ( २ ) कादप इति टी-पाठोऽपि अयुक्तः । ( ३ ) गाद्वा गोत्व इति वार्तिके (२।३। २६ सूत्रे ) । च सत्त्वव इति य ।

अधि० ४ द्रव्यापचारे प्रतिनिधिना समापनं इति वि-शा-ल । नित्यकर्मणः अनित्यप्रारब्धकर्मणश्च द्रव्यापचारे प्रतिनिधिना समापनं इति म-सा श्र । अत्रैव श्रुतद्रव्यापचारे इति विशेषः बिन्दौ । श्रुतद्रव्यापचारे नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनं इति भा ।

इत आरभ्य आपादसमाप्तेः 'प्रतिनिधिपेटिका' नाम ग्रन्थविभागः । तत्र प्रतिनिधेर्विचारात् ।

सू० १३ ( १ ) वे नाग इति म-सा-भाट्ट-शा । वे नाऽऽग इति भा-वि । अत्र भाष्यसूत्रपाठे भाष्यमूले च 'नाऽऽगमो' इति मुद्रितम् । तथा सति न आगमः इति पदच्छेदः स्यात् । म-सा पुस्तकयोर्भाष्ये च 'न आगमः' इत्येव स्पष्टं पदच्छेदो दर्शितोऽपि । तन्त्ररत्ने तु 'तदुक्तमनागमोन्यस्याशिष्टत्वात्' इत्युक्तं, तेन अनागमः इत्येव पदच्छेदो युक्तः । अत एव सिद्धान्तसूत्रे 'आगमो वा' इति युज्यते । अनागमः पूर्वः पक्षः, आगमः सिद्धान्तः । भा-संपादकास्तु म-सापाठेन विप्रलब्धाः ।

१६ नियमार्थः क्वचिद्विधिः । १५ य.
१७ तन्नित्यं तच्चिकीर्षा हि । १६ य.
अधि० ५.
१८ न देवताऽग्निशब्दक्रियमन्यार्थसंयोगात् । १७ य, ५ बिन्दुः.
१९ देवतायां च तदर्थत्वात् । १८ य.
२० प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः । १९ य, ६ बिन्दुः.
अधि० ७.
२१ तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् । २० य, ७ बिन्दुः.
अधि० ८.
२२ बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् । २१ य, ८ बिन्दुः.
अधि० ९.
२३ स स्वामी स्यात् तत्संयोगात् । २२ य, ९ बिन्दुः.
२४ कर्मकरो वा भृतत्वात् । २३ य.

---

सू० १६ ( १ ) मार्थे क्व इति रत्न ।

अधि० ५ देवताऽग्निमन्त्रक्रियाणामपचारे प्रतिनिध्यभावः इति बिन्दुः । देवताऽग्निशब्दक्रियाणामपचारे प्रतिनिध्यभावः इति भा । सूत्रस्थं शब्दशब्दं त्यक्त्वा मन्त्रशब्दः प्रयुक्तः । देवतामन्त्रक्रियाणामपचारे प्रतिनिध्यभावः इति म–सा–वृ । देवतामन्त्रक्रियापचारे प्रतिनिध्यभावः इति वि–भाट्ट–शा–ल । अन्तिमयोः शीर्षकयोः अग्निशब्दः कुतस्त्यक्तः ? सोऽपि आवश्यक एव ।

सू० १८ (१)तद्देव इति टी–पाठस्तु हस्तदोषः ।

सू० १९ ( १ ) देवता च इति य । वस्तुतस्तु देवताशब्दः षष्ठ्यन्तो वा प्रथमान्तो वा युक्तः पठितुम् । ' देवताग्निशब्दक्रियाणां ' इति पूर्वभाष्यानुसारात् ' स्वामिनः ' इत्युत्तरसूत्रानुसाराच्च षष्ठी स्यात् ।देवतायाः प्रतिनिधिर्नास्तीत्यर्थः । ' क्रियाऽपचारे न क्रियान्तरं प्रतिनिदध्यात् ' इति पूर्वभाष्यानुसारात् देवता न देवान्तरं प्रतिनिदध्यात् ' इति वाऽर्थः । परंतु पूर्वसूत्रान्ते भाष्यं ' तस्मात् क्रियायां न प्रतिनिधिरिति ' । ' देवतायां च तदर्थत्वात् ' इति सूत्रं, ' देवतायामपरो विशेषः ' इति च पुनरुपक्रमभाष्यम् । तेन देवतायां इति सप्तम्यन्तता दृश्यते । तत्त्वं तु सूत्रकार एव जानीयात् ।

अधि० ६ निषिद्धद्रव्यस्य प्रतिनिधित्वाभावः इति बिन्दुः । प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावः इति भा–बिन्दुभिन्नेषु । प्रतिषिद्धमाषादेः प्रतिनिधित्वाभावः इति भा ।

अधि० ७ स्वामिनः प्रतिनिधित्वाभावः इति बिन्दुरशुद्धः । स्वामिनः प्रतिनिध्यभावः इति बिन्दुभिन्नेषु ।

सू० २१ ( १ ) तथाशब्दो नास्ति, स्वामिनः इत्यारभ्य सूत्रं वि ।

अधि० ८ कस्य चित् स्वामिनोऽपचारे प्रतिनिध्यादानं इति ल । सत्रन्यायः इति म–सा–वि । ' सत्रे कस्य चित् स्वामिनोऽपचारे ' इति समाने सति ' प्रतिनिधिस्वीकारः इति बिन्दुः, प्रतिनिध्यादानं इति म–सा–वि–शा–वृ । सत्रे कस्य चित् स्वामिनो मरणे प्रतिनिध्युपादानं इति भा । सत्रे स्वामिनोपि कस्य चित् प्रतिनिधिः इति भाट्ट । अत्र ल–शीर्षकं शिथिलम् । भाट्ट–शीर्षके अपिशब्दो व्यर्थः ।

सू० २२ ( १ ) वृत्तावन्य इति वृ–ल–टुप् ।

अधि० ९ सत्रे प्रतिनिहितस्यास्वामित्वं इति म सा–वृ । प्रतिनिहितस्यास्वामित्वं इति वि–शा–ल । अत्र सत्रे इति पदं कुतः परित्यक्तम् । तथा प्रतिनिहितस्यास्वामित्वं इति भाट्ट । तथा नाम कथं ? व्यर्थमेव ' तथा ' पदम् । सत्रे प्रतिनिधेरस्वामिता इति बिन्दुः । सत्रे प्रतिनिहितस्य स्वामित्वाभावः इति भा ।

सू० २३ ( १ ) स्वस्वामी इति य–पाठो लेखकप्रमादात् । स स्वामी इत्येव तु यक्षपाठः । ( २ ) स्यात् सं इति ल–टी ।

सू० २४ ( १ ) वा कृत इति मटि–य । वा क्रीत इति वृ–ल । य–पाठोपि क्रीत इत्येव स्यात् । वा भूत इति चौ–पाठस्तु वाचनदोषात् ।

२५ तस्मिंश्च फलदर्शनात् । २४ य.

अधि० १०.

२६ स[1] तद्धर्मा स्यात्[2] कर्मसंयोगात् । २५ य, १० बिन्दुः.

अधि० ११.

२७ सामान्यं तच्चिकीर्षा हि । २६ य, ११ बिन्दुः.

अधि० १२.

२८ निर्देशात्तु विकल्पे यत् प्रवृत्तम् । २७ य, १२ बिन्दुः.

२९ अशब्द[1]मिति चेत्[2] । २८ य.

३० नानङ्गत्वात् । २८ य.

अधि० १३.

३१ वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य । ३२ वृ, ल, २९ य, १३ बिन्दुः.

अधि० १४, १३ भाट्ट.

३२ न प्रतिनिधौ समत्वात् । ३३ वृ–ल, ३० य, १४ बिन्दुः.

---

अधि० १० सत्रे प्रतिनिहितस्य यजमानधर्मग्राहिता इति म–सा–वि–शा–वृ–ल । तथा प्रतिनिहितस्य यजमानधर्मग्राहिता इति भाट्ट । अत्र तथाशब्दोऽनर्थकः सत्रे इत्येव वक्तव्यम् । सत्रे प्रतिनिधेर्यजमानधर्मग्राहिता इति बिन्दुः । सत्रे प्रतिनिहितस्य स्वामिधर्मत्वं इति भा ।

सू० २६ (१) स इति पदं नास्ति शा । (२) स्यात् तत्संयो इति शा–य । स्यात् तत्कर्मसं इति शाटि–वृ–ल–बिन्दु–यक्ष ।

अधि० ११ श्रुतद्रव्यापचारे तत्सदृशस्यैव इति समाने सति, 'प्रतिनिधित्वं' इति भा–भिन्नेषु, 'प्रातीनिधिनियमः' इति भा । तत्र भा–शीर्षके प्रतिनिधित्वनियम इत्येवावश्यकम् ।

अधि०१२ द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानं इति बिन्दु–वृभिन्नेषु । परिगृहीतद्रव्यापचारे तत्सदृशस्यैवोपादानं न तु वैकल्पिकद्रव्यान्तरस्य इति वृ । श्रुतद्रव्यापचारे वैकल्पिकानुपादानं इति बिन्दुः । परिगृहीतद्रव्यापचारे इत्येव सर्वत्र वक्तुं युक्तं वृ–वत् । अत एव भाष्ये 'कदाचित् खादिरगुणके प्रयोगे आरब्धे खदिरो विनष्टः तत्र संदेहः' इत्युपक्रान्तम् । व्रीह्यारब्धप्रयोगे तदपचारे इति च बिन्दौ ।

सू० २९ (१) अशब्दमपीति इति य । (२) चेदन्तमुत्तरेणैकं य ।

सू० ३० एतत्सूत्रोत्तरं 'संस्काराश्च खादिरे कर्तव्याः ॥ ३१ ॥ इत्यधिकं सूत्रं वृ–ल । परंतु नैतत् सूत्रच्छायां वहति । भाष्यमूले तु 'संस्काराश्च खादिरे कर्तव्याः, खदिरसदृशे तद्–बुद्ध्या गृह्यमाणे श्रुतबुद्ध्या कृता भवन्ति' इति । तेन भाष्यमेवेदं न सूत्रं, न च य–पुस्तकेऽस्ति ।

अधि० १३ पूतीकस्य सोमप्रतिनिधित्वं इति भा–भिन्नेषु । पूतीकानां सोमप्रतिनिधित्वं इति भा–शीर्षके 'पूतीकानभिषुणुयात्' इतिश्रुत्यनुसारि बहुवचनम् ।

अधि० १४ अत्र भाष्यादौ एकत्रिंशेन सूत्रेण त्रयोदशमधिकरणं द्वात्रिंशेन चतुर्दशं त्रयस्त्रिंशचतुस्त्रिंशाभ्यां पञ्चदशम् । भाट्टे तु एकत्रिंशादिचतुस्त्रिंशान्तैरेकमेव त्रयोदशमधिकरणं स्वीकृतम् । प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य पुनः प्रतिनिधित्वं इति म–सा–वि–शा–ल । प्रतिनिधिनाशे उपात्तसदृशस्याप्रतिनिधित्वं इति बिन्दुः । प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य प्रतिनिधित्वं इति वृ । प्रतिनिध्यपचारे श्रुतद्रव्यसदृशस्यैव प्रतिनित्वं इति भा । प्रतिनिधेर्गृहीतस्यापि नाशे पुनः प्रतिनिधेः प्रतिनिधिर्न ग्राह्यः किंतु मुख्यसदृशं प्रतिनिध्यन्तरं ग्राह्यं इति सिद्धान्तितम् । बिन्दु–शीर्षकं यद्यपि नाशुद्धं तथापि निषेधरूपापेक्षया विधिरूपं 'मुख्यसदृशस्यैव प्रतिनिधित्वं' इत्येव वक्तुं युक्तम् । भा–शीर्षकेऽपि श्रुतशब्दापेक्षया मुख्यशब्दः साधीयान् ।

अधि० १५, १३ भाट्ट.

३३ स्याच्छ्रुतिलक्षणे नियतत्वात् । ३४ वृ-ल, ३१ य, १५ बिन्दुः.

३४ न तदीप्सा हि । ३५ वृ-ल, ३२ य.

अधि० १६, १४ भाट्ट.

३५ मुख्याधिगमे मुख्यमागमो हि तदभावात् । ३६ वृ-ल, ३३ य, १६ बिन्दुः.

अधि० १७, १४ भाट्ट .

अधि० १५ श्रुतस्यापि प्रतिनिधेरपचारे उपात्तसदृशस्य पुनः प्रतिनिधित्वं इति म-सा-वि-शा-ल। अत्र उपात्तसदृशस्य इत्यशुद्धम् । मुख्यसदृशस्य इति वक्तव्यम् । पूतीकापचारे पूतीकसदृशं न ग्राह्यं, किंतु सोमसदृशमेवेति सिद्धान्तितं मूले । श्रुतप्रतिनिधिविनाशे मुख्यसदृशस्यैव प्रतिनिधित्वं इति बिन्दुः । श्रुतस्यापि प्रतिनिधेरभावे मुख्यसदृशस्यैव प्रतिनिधित्वं इति वृ । श्रुतप्रतिनिध्यपचारे मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वं इति भा ।

सू० ३३ ( १ ) नियतत्वात् इति पदं नास्ति य । भाष्यमूलेऽपि नियतत्वादिति पदं नैव दृश्यते, परंतु नैतावता निर्णयः, भूयांसि हि सौत्रपदानि भाष्ये न दृश्यन्ते तत्र तत्र ।

अधि० १६ अत्र भाष्ये पञ्चत्रिंशसूत्रेण षोडशमधिकरणं, षट्त्रिंशसप्तत्रिंशाभ्यां च सप्तदशमधिकरणम् । भाट्टे तु पञ्चत्रिंशमारभ्य सप्तत्रिंशान्तैरेकमेव चतुर्दशमधिकरणं स्वीकृतम् ।

मुख्यापचारे तत्प्राप्तौ तस्यैवोपादानं इति म-सा-वि-भाट्ट-शा । मुख्यनाशे पुनस्तत्प्राप्तौ तस्यैव स्वीकारः इति बिन्दुः । मुख्यापचारे पुनस्तत्प्राप्तौ तस्यैवोपादानं इति वृ-ल । मुख्यापचारे पुनर्मुख्यप्राप्तौ तस्यैवोपादानं इति भा ।

अधि० १७ प्रवृत्तेऽपीति चेत् इत्यस्य चेदन्तत्वात् पूर्वपक्षसूत्रत्वम् । मुख्यपदस्यानुवृत्तस्य सप्तम्या विपरिणामेनान्वयः । प्रतिनिधिना इति प्रकरणाल्लभ्यते । तथा च प्रतिनिधिना मुख्ये प्रवृत्तेऽपि प्रधाने निष्पन्नेऽपि मुख्याधिगमे मुख्यं, इति सूत्रान्वयार्थः । नानर्थकत्वात्, न मुख्यं प्रधानोत्तरं तस्यानर्थकत्वात् । तस्मात् प्रतिनिधिनैव समापनं इति सिद्धान्तः । इति सूत्रार्थः स्वारसिकः । अत एव वार्तिकं, ' अथवा प्रवृत्तेपीतिचेत् । कृते प्रयोजने श्रुतमागमयितव्यमिति । एतस्योत्तरं नानर्थकत्वात इति ' इति । एवं च सूत्रद्वयात्मकमधिकरणम् । एवमेव च भा-म-सा-वृपुस्तकेषु निवेशितम् ।

अत्र वार्तिकं " प्रवृत्तेपीति चेत् । केषुचित् संस्कारेषु, अनभिनिर्वृत्ते प्रयोजने श्रुतमेवोपादातव्यं न संस्काराणामनुरोधः द्रव्यगुणत्वात् । तस्माद्येऽभिनिर्वृत्ताः तेषामावृत्तिः स्यात् । एवमिदं सिद्धान्तसूत्रं भवति । पूर्वपक्षस्तु उत्प्रेक्ष्यः ॥ ३६ ॥ नानर्थकत्वात् । एतदपि सिद्धान्तसूत्रं उत्प्रेक्ष्यपूर्वपक्षकम् । " इति । एवं सति प्रतिसूत्रं पृथगधिकरणम् । सेयं रीतिः वि-शा-बिन्दु-लपुस्तकेषु स्वीकृता ।

भाष्यग्रन्थनिवेशस्तु सूत्रद्वयात्मकैकाधिकरणपक्षानुसारेण विद्यमानो दृश्यते, यथाश्रुतं भाष्यं तु एकाधिकरणत्वेन योजयितुमेव न शक्यते । तस्मादत्र भाष्यग्रन्थो लिखितोऽपि परिभ्रष्ट इति कल्पयामः । तत्र प्रथमसूत्रीयभाष्यग्रन्थान्ते सिद्धान्तग्रन्थः, द्वितीयसूत्रीयभाष्यादौ च पूर्वपक्षग्रन्थः परिभ्रष्ट इति । वार्तिककारेण च यत्सूत्रद्वयविषये उक्तं तदेव भाष्यविषयेऽप्युक्तमिति मन्यामहे । तथा च भाष्यग्रन्थानुसारेणापि प्रतिसूत्रमधिकरणभेद इत्येव सिध्यतीति नो मतिः ।

मण्डनेन ' प्रवृत्ते न पुनर्मुख्यं ' इत्युक्तम् । तत्तु ' प्रवृत्ते प्रधानकार्ये निष्पन्ने सति, मुख्यलाभेपि पुनर्मुख्यं न ग्राह्यं ' इति योजनीयं न तु श्रीमता गंगानाथझाशर्मणा प्रतिपादितं स्वीकार्यम् ।

अथ शीर्षकविचारः । प्रतिनिधिना प्रारब्धे कर्मणि श्रुतद्रव्यलाभेऽपि प्रतिनिधिनैव समापनं इति म-सा-ल शीर्षकं अपसिद्धान्तबोधकम् । ' प्रारब्धे कर्मणि ' इति प्रारब्धशब्दप्रयोगात् ' प्रधान-

३६ प्रवृत्तेऽपीति चेत्। ३७ वृ–ल, ३४ य, १७ बिन्दुः.

( अधि० १८ वि–शा–बिन्दु–ल, १४ भाट्ट. )

३७ नानर्थकत्वात्। ३८ वृ–ल, ३४ य, १८ बिन्दुः.

अधि० १८ भा–म–सा–वृ–मण्डनः, १९ वि–शा–बिन्दु–ल, १५ भाट्ट.

३८ द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात्। ३९ वृ–ल, ३५ य, १९ बिन्दुः.

अधि० १९ भा–म–सा–वृ–मण्डनः, २० वि–शा–बिन्दु–ल, १५ भाट्ट.

३९ अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात्। ४० वृ–ल, ३६ य, २० बिन्दुः.

अधि० २० भा–म–सा–वृ–मण्डनः, २१ वि–शा–बिन्दु–ल, १६ भाट्ट.

---

कार्ये अनिष्पन्ने सति ' इति पूरणं विवक्षितमेवेति वक्तव्यं, तथा सति ' प्रतिनिधिनैव समापनं ' इत्यपसिद्धान्तः। ' प्रतिनिधिना प्रधानकार्ये निष्पादिते श्रुतद्रव्यलाभेपि प्रतिनिधिनैव समापनं इति वा वक्तव्यम्। प्रतिनिधिना प्रारब्धे कर्मणि श्रुतद्रव्यलाभे श्रुतद्रव्येणैव समापनं इति वि–शाशीर्षकं साधीय एव। प्रतिनिधिना प्रारब्धे कर्मणि पुनर्मुख्यलाभेऽपि प्रतिनिधिनैव कर्मसमापनं इति बिन्दु–शीर्षकं म–सा–लवत् अपसिद्धान्तबोधकम्। प्रतिनिधिना प्रारब्धे कर्मणि मुख्यलाभेऽपि प्रतिनिधिनैव समापनं इति वृ–शीर्षकमपि म–सा–लवत्। प्रतिनिधिना कृते च कार्ये श्रुतद्रव्यलाभेऽपि तदनुपादानं इति भा शीर्षकं, ' कृते च कार्ये ' इत्यस्य ' कृते प्रधानकार्ये ' इत्यर्थं स्वीकृत्य युक्तमिति मन्तव्यम्।

सू० ३६ ( १ ) चेदन्तमुत्तरेणैकं य।

( अधि० १८ वि–शा–बिन्दु–ल ) प्रतिनिधौ पशौ नियुक्ते श्रुतद्रव्यलाभेऽपि प्रतिनिधिनैव समापनं इति वि–शा–ल। यूपप्रतिनिधौ पशुनियोजने खदिरलाभेऽपि प्रतिनिधावेव नियोजनं इति बिन्दु–शीर्षकं न सामञ्जस्येनार्थबोधकम्।

अधि० १८ सत्यपि संस्कारयोग्ये अमुख्ये मुख्यस्यैवोपादानं इति म–सा। संस्कारायोग्यस्यापि मुख्यस्यैवोपादानं इति वि–भाट्ट–शा–ल। संस्कारयोग्येऽपि अमुख्ये मुख्यस्यैवोपादानं इति बिन्दुः। अमुख्ये संस्कारयोग्येऽपि मुख्यस्यैवोपादानं इति वृ। द्रव्यसंस्कारविरोधे द्रव्यस्यैवोपादानं इति भा।

अधि० १९ प्रयोजनायोग्यस्य मुख्यस्य सत्त्वेपि प्रतिनिध्यादानं इति म–सा–वृ। मुख्यस्य कर्मासाधकत्वे प्रतिनिधेरेवोपादेयता इति वि–शा–ल। प्रयोजनायोग्यमुख्यसत्त्वेऽपि प्रतिनिध्यादानं इति बिन्दुः। कार्यासमर्थे मुख्यद्रव्ये प्रतिनिधेरेवोपादानं इति भा।

सू० ३९ ( १ ) त्पत्तिर्द्र इति शा–बिन्दु–य।

अत्र भाष्ये ' अर्थद्रव्यविरोधे अर्थं प्रत्यादर्तव्यं इत्युक्तं ' न तु ' अर्थ आदर्तव्यः' इति। तेन सूत्रे अर्थशब्दो द्वितीयान्तः स्यादिति भाति। एवं ' द्रव्याभावे हि तदुत्पत्तिः प्रतिनिधेरुत्पत्तिरुक्ता ' इति भाष्यात् तदुत्पत्तिशब्दः प्रथमान्तः स्यादिति भाति। उक्ता इति पदाध्याहारेण वाक्यस्य योजितत्वात्। सूत्रस्वारस्याभावात्तु नास्माभिः सूत्राक्षराणि विपरिवार्तितानि।

अधि० २० प्रधाननिर्वाहकत्वे अङ्गनिर्वाहापर्याप्तस्यापि मुख्यस्योपादानं इति म–सा–वि–शा–ल। अङ्गनिर्वाहापर्याप्तस्यापि प्रधाननिर्वाहकस्य मुख्यस्यैवोपादानम् इति भाट्ट। अङ्गानिर्वाहकप्रधाननिर्वाहकमुख्योपादानं इति बिन्दुः। तर्हि किं अङ्गनिर्वाहकं सत् यत् प्रधाननिर्वाहकं तादृशं मुख्यं न ग्राह्यं? अयुक्तमेव बिन्दु–शीर्षकम्। अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहकस्य मुख्यस्योपादानं इति वृ। अन्यत्र अशुद्धमपि म–साशीर्षकं स्वीक्रियते। अत्र तु शुद्धमपि म–साशीर्षकं भाट्ट–बिन्दु–वृसंपादकैर्विपरिवर्तितं इति नमस्तेभ्यः। प्रधानमात्र-

४० विधिरप्येकदेशे स्यात् । ४१ वृ-ल, ३७ य, २१ बिन्दुः.

४१ अपिवाऽर्थस्य शक्यत्वादेकदेशे न निर्वर्त्येतार्थानामविभक्तत्वाद् गुणमात्रमितरत् तदर्थत्वात् ।४२ वृ-ल, ३८ य.

४२ तथा चान्यार्थदर्शनम् । ३९ य.

॥ पादेऽस्मिन् विंशतिर्न्याया भाष्यकारेण वर्णिताः ॥

॥ सर्वशक्तौ अपिवा बहूनां स्यात् नवत्रिंशत् ॥

॥ इति षष्ठाध्यायस्य तृतीयः पादः ॥

* * * *

॥ अथ षष्ठाध्यायस्य चतुर्थः पादः ॥

अधि० १.

१ शेषाद् द्व्यवदाननाशे स्यात् तदर्थत्वात् ।

२ निर्देशाद्वाऽन्यदागमयेत् ।

अधि० २.

३ अपिवा शेषभाजां स्याद् विशिष्टकारणत्वात् । २ बिन्दुः.

अधि० ३.

४ निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् । ३ बिन्दुः.

५ सर्वैर्वा समवायात् स्यात् ।

६ निर्देशस्य गुणार्थत्वम् ।

७ प्रधाने श्रुतिलक्षणम् ।

८ अश्ववदिति चेत् ।

---

समर्थमुख्यद्रव्यलाभे तस्यैवोपादानं इति भा । तथा सति प्रधानाङ्गोभयसमर्थमुख्यद्रव्यलाभे किं मुख्यं नोपादेयं ? अशुद्धमेवेदं भा-शीर्षकमपि ।

सू० ४० ( १ ) देशः स्यात् इति य ।

सू०४१(१)न वर्तेता इति य । न निर्वर्त्येता इति वृ-ल । न निर्वर्तेता इति वृ-ल भिन्नेषु । अत्र भाष्यं 'एकदेशेन व्रीहीणां प्रधानमात्रं निर्वर्तयितव्यम्' इति तेन 'निर्वर्त्येत' इति कर्मणि लिङेव सूत्रे युक्तो न तु निर्वर्तेत इति कर्तरि लिङ् इति निश्चयात् तथैव पाठो गृहीतोऽस्माभिः ।

सू० ४२ तथा चान्यार्थदर्शनं इत्यधिकं सूत्रं य । भाष्येपि 'तथा चान्यार्थदर्शनमपि भवति तदेव यादृक् तादृक् होतव्यमिति' इत्युक्तत्वात् भाष्यसंमतमेवेदं सूत्रमिति स्वीकृतमस्माभिः सूत्रपाठे ।

अधि०१ अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानं इति भा-भिन्नाः । उत्पन्नहविर्नाशे हविरन्तरोपादानं इति भा-शीर्षकमनुपयुक्तम् । उत्पन्नस्य हविषो नाशे हविरन्तरोपादानस्य संशयातीतत्वेन अधिकरणानारम्भप्रसङ्गात् । भाष्याद्यनुसारेण तु भा-भिन्नशीर्षकमेव साधु ।

सू० १ ( १ ) शेषादव इति य ।

सू० २ ( १ ) शेषनिर्देशा इति प्राचीनभाष्यपाठः शबराचार्यैरुक्तः ।

अधि०२ स्विष्टकृदर्थस्यावत्तस्य नाशे अपुनरवदानं इति म-सा । स्विष्टकृदर्थावत्तनाशे पुनरवदाननिराकरणं इति वि-भाट्ट-शा-ल । अधिकरणेन निराकरणस्य कृतत्वेपि निराकरणपदघटितं शीर्षकं अधिकरणनामधेयतां न प्रपद्यते । निराकरणपदस्य अधिकरणपदेन सामानाधिकरण्यायोगात् । तथाचायुक्तं शीर्षकम् । स्विष्टकृदर्थावत्तनाशे पुनरवदानाभावः इति बिन्दु-वृशीर्षकं साधीयः । शेषकार्यार्थं अवत्तद्रव्यनाशे शेषकार्यलोपः इति भा ।

सू० ३ ( १ ) कारणात् इति वि-ल ।

अधि० ३ ऋत्विजामेव शेषभक्षणं इति म-सा-वि-भाट्ट-शा-वृ-ल । ऋत्विजामेव शेषभक्षः इति बिन्दुः । शेषभक्षणे ऋत्विङ्नियमः इति भा ।

सू० ४ ( १ ) भक्षोऽन्यः प्र इति टुप्-पाठो हस्तदोषात् ।

सू० ५ ( १ ) सर्वं वा इति य-यक्ष ।

सू० ६ ( १ ) शगु इति य ।

सू० ८ ( १ ) पूर्वव इति य । अर्थव इति भा-म-सा-वि-भाट्ट-शा । अश्वव इति वृ-ल । अत्र

९ न चोदनाविरोधात्। ८ य.

अधि० ४.

१० अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि। ९ य, ४ बिन्दुः.

११ न त्वशेषे वैगुण्यात् तदर्थं हि। १० य.

१२ स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्नहि तस्य गुणार्थेनानित्यत्वात्। ११ य.

१३ गुणानां च परार्थत्वाद् वचनाद् व्यपाश्रयः स्यात्। १२ य.

१४ भेदनार्थमिति चेत्। १५ वृ, १३ य.

१५ नाशेषभूतत्वात्। १६ वृ, १३ य.

१६ अनर्थकश्च सर्वनाशे स्यात्। १७ वृ, १४ य.

अधि० ५.

१७ क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात्। १८ वृ, १५ य, ५ बिन्दुः.

१८ दर्शनाद् वैकदेशे स्यात्। १९ वृ, १६ य.

१९ अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः। २० वृ, १७ य.

२० तद्धविःशब्दान्नेति चेत्। २१ वृ, १८ य.

२१ स्यादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात्। २२ वृ, १८ य.

---

भाष्यं 'अथ यदुक्तं अश्वमेधे विरोधः स्यात् बहुत्वाद्भक्षाणामिति। तत्परिहर्तव्यम्' इति। उत्तरसूत्रे च 'अश्वमेधे न सर्वं भक्षयिष्यन्ति' इति। तेन अश्ववत् इत्येव भाष्यसंमतः पाठः इति निश्चिनुमः। (२) चेदन्तमुत्तरेणैकं य।

अधि० ४ कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानं इति भा-भिन्नाः। अस्पष्टार्थकमिदम्। कृत्स्नभेदे वा एकदेशभेदे वा प्रायश्चित्तं इति विवक्षितोऽर्थः। परंतु एकदेशभेदात् पृथक् कृत्स्नभेदो ज्ञातुमशक्य एव। एकदेशभेदनादावपि प्रायश्चित्तं इति भा।

सू० ११ (१) त्वशेषवै इति य। (२) ण्यात्तु त इति टी। (३) दर्थे हि इति चौ।

सू० १२ (१) प्राप्तिनि इति वि-शा। (२) त्वान्न त इति य-टुप्। (३) गात् संनिहितस्य गुणार्थे नित्यत्वात् इति टुप्-पाठो न समीचीनः। (४) तत्र गु इति य। (५) णार्थत्वेना इति वृ-ल।

सू०१३ एतत्सूत्रोत्तरं 'वचनाद् विकल्प इति चेन्न निमित्तार्थेन संभवात्॥ १४॥' इत्यधिकं सूत्रं वृ-ल। वृत्तिपाठेऽप्यत्र सूत्रद्वयं स्वीकार्यं तत्र चेदन्तं प्रथमम्। प्रायः सर्वत्र चेदन्तस्य पृथक्सूत्रत्वस्वीकारात्। तथा च सूत्रद्वयमधिकमिति स्वीकर्तव्यम्। भाष्येऽपि 'वचनाद्विकल्प इति चेन्न। निमित्तत्वेन संभवात्। होमस्य च श्रुत्या विहितत्वात्' इति पङ्क्तिरुपलभ्यते. परंतु भाष्यपङ्क्तिस्वरसो न तस्य सूत्रत्वे किंतु भाष्यत्व एव।

सू० १४ (१) भेदार्थ इति य-भिन्नाः सर्वे भादयः। भेदनार्थ इति य-यक्ष। पूर्वोत्तरसूत्रीयभाष्यमूलेऽपि सर्वत्र भेदनशब्दस्यैव प्रयोगो, न भेदशब्दस्येति य-पाठ एव भाष्यसंमत इति तर्कयामहे। (२) चेदन्तमुत्तरेणैकं य।

सू० १५ (१) शेषभूतत्वात् इत्येव सूत्रं म-सा-वि-भाट्ट-शा-चौ। परंतु न भाष्यसंमतोऽयं पाठः।

सू० १६ (१) र्थकं च स इति वृ। 'अनर्थकश्च संस्कारः' इति तु भा-मूलम्। अनर्थकं अग्निमवचनं इति तु वृ-मूलम्।

अधि० ५ क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानं इति म-सा-वि-शा-बिन्दु-वृ-ल। क्षामे सर्वदाहप्रायश्चित्तं इति भाट्ट-शीर्षकं न कं चिदर्थं बोधयितुमलम्। सर्वपुरोडाशक्षामे प्रायश्चित्तं इति भा। क्षामेष्टिन्यायः इति म-सा-वि-भाट्ट-क।

सू० १८ (१) नादेक इति वृ-ल।

सू० २० (१) चेदन्तमुत्तरेणैकं य।

सू० २१ (१) स्यादन्यायत्वादिज्या इति भा-म-सा-वि-भाट्ट-शा-य। स्यादिज्या इति वृ-ल।

अधि० ६.

२२ यथाश्रुतीति चेत्। २३ वृ, १९ य, ६ बिन्दुः.

२३ न तल्लक्षणत्वादुपपातो हि कारणम्। २४ वृ, १९ य.

अधि० ७.

२४ होमाभिषवभक्षणं च तद्वत्। २५ वृ, २० य, ७ बिन्दुः.

२५ उभाभ्यां वा नहि तयोर्धर्मशास्त्रम्। २६ वृ, २१ य.

अधि० ८.

२६ पुनराधेयमोदनवत्। २७ वृ, २२ य, ८ बिन्दुः.

२७ द्रव्योत्पत्तेर्वोभयोः स्यात्। २८ वृ, २३ य.

अधि० ९.

२८ पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात्। २९ वृ, २४ य, ९ बिन्दुः.

२९ चोदना वा द्रव्यदेवताविधेरवाच्ये हि। ३० वृ, २५ य.

अधि० १०.

३० स प्रत्यामनेत् स्थानात्। ३१ वृ, २६ य, १० बिन्दुः.

३१ अङ्गविधिर्वा निमित्तसंयोगात्। ३२ वृ, २७ य.

---

भाष्यमूले अन्यायत्वात् इत्यस्य कथमप्यव्याख्यानात् इतरेषां च सर्वपदानां प्रतिपदं स्पष्टं व्याख्यानात् भाष्यसंमतो वृ-लपाठ एवेति मन्यामहे।

अधि० ६ एकहविरार्तावपि पञ्चशरावनिर्वाप इति भा-लभिन्नाः। एकहविरार्तावपि पञ्चशरावे निर्वाप इति ल-शीर्षकमशुद्धम्। हविरार्तिन्यायः इति भा।

सू० २२ (१) चेदन्तमुत्तरेणैकं य।

सू० २३ (१) न-शब्दो नास्ति ल। तत्तु अनवधानात्।

अधि० ७ होमाभिषवोभयकर्तुरेव भक्षणं इति भा-भाट्ट भिन्नाः। होमाभिषवोभयकर्तुरेव भक्ष इति भाट्ट। होमाभिषवोभयकर्तुर्भक्षणं इति भा।

अधि० ८ पुनराधानं प्रति वह्न्यनुगमद्वयस्य निमित्तता इति म-सा-वि-वृ। पुनराधाननिमित्तं वह्न्यनुगमद्वयं इति भाट्ट। पुनराधेयं प्रति वह्न्यनुगमद्वयस्य निमित्तता इति शा। पुनराधानं प्रति वह्निद्वयानुगतस्य निमित्तता इति बिन्दुः। वह्निद्वयानुगतस्य इत्यस्य कोऽर्थः? । एतदधिकारणार्थो ज्ञातो नवा संपादकमहाशयेनेत्येव संशयो जायते। पुनराधानं प्रति वह्निद्वयस्य निमित्तता इति ल। किं तत् वह्निद्वयं, यन्निमित्तं पुनराधानस्य? अशुद्धमिदम्। उभयाग्निनाशे पुनराधानरूपप्रायश्चित्तं इति भा। अस्मिन्नधिकरणे गार्हपत्यस्याहवनीयस्य चेति उभयोरपि नाशे पुनराधानं कार्यं, नैकस्यैव नाशे इति प्रतिपादितम्।

सू० २७ (१) त्पत्तेर्वोभ इति भा-म-सा-वि-भाट्ट-शा-य। त्पत्तेश्चोभ इति वृ-ल। त्पत्तिर्वोभ इति टुप्। अत्र भाष्यं 'द्रव्ये विनष्टे तस्यैव द्रव्यस्योत्पत्तिरत्र प्रायश्चित्तं' इति। इति टुप्-पाठ एव भाष्यसंमत इति मन्यामहे।

अधि० ९ पञ्चशरावनिर्वापस्य कर्मान्तरता इति म-सा-वि-शा-बिन्दु-वृ-ल। पञ्चशरावयागः कर्मान्तरं इति भाट्ट। हविरार्तौ कर्मान्तरविधानं इति भा-शीर्षकात् इतरच्छीर्षकमेव स्पष्टार्थकत्वात् साधीयः।

सू० २९ (१) वा कर्मदे इति य। अत्र पाठे कर्मपदं पृथक् स्यादिति भाति। (२) विधिर इति भाटि-म-सा-वि-भाट्ट-शा-वृ-ल-चौ-टुप। भाष्यमूले तु 'निमित्ते वा कर्माङ्गभूतं कर्मान्तरं यजतिः द्रव्यदेवताविधेः' इति पञ्चम्यन्त एव विधिशब्दः पठितः।

अधि० १० पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गता इति भा-भाट्टभिन्नाः। पञ्चशरावयागो नैमित्तिकदर्शयागाङ्गं इति भाट्ट। नैमित्तिकपञ्चशराव-

अधि० ११.

३२ विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् । ३३ वृ, २८ य, ११ बिन्दुः.

३३ निष्क्रयवादाच्च । ३४ वृ, २९ य.

अधि० १२.

३४ वत्ससंयोगे व्रतचोदना स्यात् । ३५ वृ, ३० य, १२ बिन्दुः.

३५ कालो वोत्पन्नसंयोगाद् यथोक्तस्य । ३६ वृ, ३१ य.

३६ अर्थापरिमाणाच्च । ३७ वृ, ३२ य.

३७ वत्सस्तु श्रुतिसंयोगात् तदङ्गं स्यात् । ३८ वृ, ३३ य.

३८ कालस्तु स्यादचोदना । ३९ वृ, ३४ य.

३९ अनर्थकस्य कर्मसंयोगे । ४० वृ, ३५ य.

४० अवचनाच्च स्वशब्दस्य ४१ वृ, ३६ य.

अधि० १३.

---

यागस्य दर्शाङ्गता इति भा। अत्र भा-शीर्षकेण नैमित्तिकत्वं पञ्चशरावयागस्योक्तं, इतरशीर्षकाभ्यां तु नैमित्तिकत्वं दर्शयागस्योक्तं तदयुक्तम् । 'स एष नैमित्तिको यागः, किममावास्यां प्रत्यामनेनेति' इति च भाष्यमूलम् । तथा च नैमित्तिकत्वं पञ्चशरावस्यैव न दर्शस्येति ज्ञेयम् ।

अधि० ११ सत्राय आगूर्य अप्रवृत्तस्य विश्वाजिदावश्यकता इति भा-भिन्नाः । सत्रसंकल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया विश्वजिद्विधानं इति भा । अत्र सत्रं संकल्प्य तदकुर्वता विश्वाजिदतिरात्रः कर्तव्य इति सर्वसंमतम् । तस्य फलं प्रति तु मतभेदः । तत्र भाष्यं 'यः सत्रं करिष्यामीत्येवमागुरते स विश्वजिता यागेन साधयेदिति । यदर्थमसौ सत्रं कर्तुमिच्छति तदर्थमिति गम्यते' इति । तेन सत्रफललाभार्थमेव विश्वजित् इति सिध्यति । "यः सत्रायागुरते' इति निमित्तत्वेनोपन्यासात् संकल्प्य यदि सत्रं नानुतिष्ठते तदा प्रायश्चित्तार्थं विश्वजियागं कुर्यादिति राद्धान्तः" इति विस्तरः । "सत्रफलप्राप्तये प्रारब्धाकरणदोषपरिहाराय च साधनमपेक्षमाणस्य विश्वजिद्विधानं अपेक्षितार्थं भवति तस्मात् सत्रमागूर्याकुर्वतः प्रायश्चित्तमिदं' इति शास्त्रदीपिका । अत्र प्रायश्चित्ते निर्भरो दृश्यते । सोमनाथेन तु 'प्रारब्धाकरणदोषपरिहारः आनुषङ्गिकं फलं' इत्युक्तम् । बिन्दौ तु 'सत्रफलाप्तये प्रारब्धाकरणदोषहानाय वा' इत्युक्तम् । सुबोधिनीवृत्तिस्तु सत्रफलार्थो विश्वजित् इति भावत् । प्रायश्चित्तार्थमेव विश्वजित् इति तु भाट्ट । एवं च भा-भिन्नेषु सत्रफलार्थं, सत्रफलार्थं प्रायश्चित्तार्थं च, सत्रफलार्थं प्रायश्चित्तार्थं वा, प्रायश्चित्तार्थमेव विश्वजित् इति चत्वारि मतानि एवं सति भा-भिन्नशीर्षकं युक्तमेव।

सू० ३२ (१) जिदप्र इति वृ-ल । (२) त्तेर्भावः इति बिन्दुपाठो न शुद्धः । त्तेऽभा इति टीपाठोऽपि न ग्राह्यः ।

अधि० १२ बर्हिषेत्यादिश्रुतेर्व्रतकालविधानार्थता इति म-सा-बिन्दु-वृ । बर्हिर्वत्सयोः कालोपलक्षकता इति वि-भाट्ट-शा-ल । व्रतस्य वत्साद्युपलक्षितकालविधानं इति भा ।

सू० ३५ (१) यथोक्तस्य इति पदं नास्त्येव वि-शा । भाष्ये तु व्याख्यातम् ।

सू० ३८ (१) दनात् इति वृ-ल-य ।

सू० ३९ (१) कर्मसंयोगात् इति य ।

अधि० १३ बर्हिषेत्याद्युक्तकालस्य सन्नयदसन्नयदुभयसाधारणत्वं इति म-सा-वृ । वत्सापाकरणकालस्य संनयदसंनयदुभयसाधारणता इति वि-शा । बर्हिषेत्याद्युक्तकालस्य सन्नयदसन्नयदुभयसाधारण्यं इति बिन्दुः । वत्सापाकरणस्य सन्नयदसन्नयदुभयसाधारणता इति ल। सांनाय्ये अप्रवृत्तस्यापि व्रतनियमः इति भा । अत्र म-सा-वृ-बिन्दु-ल शीर्षकेषु 'सन्नयदसन्नयदुभय' इति मुद्रितम् । तत्र 'सन्नयत्' पदे 'सम्, नयत्' इति वा घटके पदे, 'सत्, नयत्' इति वा इति संशयः । व्याकरणेन तु उभयथापि स्वीकारे समानः संधिः । तथापि मन्यामहे एतादृशस्थले यरोऽनुनासिकेऽनुनासिको वा इत्यनुनासिककरणमयुक्तम् । यथा सति संभवे घटकं

४१ कालश्चेत् संनयत्पक्षे तल्लिङ्गसंयोगात् । ४२ वृ, ३७ य, १३ बिन्दुः.

४२ कालार्थत्वाद् वोभयोः प्रतीयेत । ४३ वृ, ३८ य.

४३ असंनयतोऽपि कालाह्वानात् । ३९ य. अधि० १४, १३ भाट्ट.

४४ प्रस्तरेऽपि शाखां श्रयणवत् । ४३ भा–म –सा–वि–भाट्ट–शा–ल । ४० य, १४ बिन्दुः.

४५ कालविधिर्वोभयोर्विद्यमानत्वात् । ४४ भा–म–सा–वि भाट्ट–शा–ल । ४१ य.

४६ अतत्संस्कारार्थत्वाच्च । ४५ भा–म–सा वि–भाट्ट–शा–ल । ४२ य.

४७ तस्माच्च विप्रयोगे स्यात् । ४६ भा–म–सा–वि–भाट्ट–शा–ल । ४३ य.

४८ उपवेषश्च पक्षे स्यात् । ४७ भा–म–सा –वि–भाट्ट–शा–ल, ४४ य ।

॥ षष्ठस्य पादे कथिताश्चतुर्थे न्यायाः समीक्ष्यात्र चतुर्दशैव ॥

॥ शेषात् स्यात् उभाभ्यां कालोवा कालविधिश्चतुश्चत्वारिंशत् ॥

॥ इति षष्ठाध्यायस्य चतुर्थः पादः ॥

*  *  *  *

॥ अथ षष्ठाध्यायस्य पञ्चमः पादः ॥

अधि० १.

१ अभ्युदये कालापराधादिज्याचोदना स्याद् यथा पञ्चशरावे ।

२ अपनयो वा विद्यमानत्वात् ।

३ तद्रूपत्वाच्च शब्दानाम् ।

४ आतञ्चनाभ्यासस्य च दर्शनात् ।

५ अपूर्वत्वाद् विधानं स्यात् ।

---

पदं स्पष्टं ज्ञायेत तथैव संधिः कर्तव्यः । सत्+नयत् इत्यादौ अनुनासिकः कर्तव्य एव सन्नयदिति । सम्+नयत् इत्यादौ तु यत्र 'वा पदान्तस्य' इति पदान्तस्यानुस्वारस्य परसवर्णो विकल्पेन विहितः तत्र नैव कर्तव्यः परसवर्णः सम्+नयत्=संनयत् इति । तथा सति उभयत्रापि पदस्वरूपं स्पष्टं च स्यात् न च व्याकरणविरोधः । विस्तरसंशोधकैः स्वीकृतैवेयमेव पद्धतिः साधीयसी ।

सू० ४१ ( १ ) कालः सं न इति य ।

अत्र भाट्टे, विद्यमानेऽपि भिन्नेऽधिकरणे, संपादकैः अधिकरणाङ्को न दत्तः, न च शीर्षकमप्यारचितम् । उत्तराधिकरणे एव च १३ इत्यधिकरणाङ्को मुद्रित इति महद्देवाशुद्धं संपादितम् ।

अत्र 'असंनयतोऽपि कालाह्वानात्' इत्यधिकं सूत्रं य । अन्यत्र तु नैतत् दृश्यते । परंतु भाष्ये 'कालार्थत्वाद्वोभयोः प्रतीयेत' इति सूत्रव्याख्यां समाप्य 'यत्तूक्तं तल्लिङ्गसंयोगात् संनयत्पक्ष एवेति । तत्र । असंनयतोऽपि कालाह्वानात् ।' इति सूत्रमवतार्य 'यस्यापि न सांनाय्यं' इत्यादिना आसमाप्ति व्याख्यातम् । तेन सूत्रमिदं भाष्येऽस्तीति निश्चिनुमः । भा-संशोधकैः कुतो न सूत्रत्वेन संगृहीतमिति त एव प्रष्टव्याः ।

अधि० १४ सहशाखयेत्यस्य कालविधानार्थता इति म–सा–भाट्ट–वृ । सांनाय्यरहितस्य शाखाऽऽहरणनिराकरणं इति वि-शा-ल । प्रस्तरप्रहरणकाले शाखाप्रहरणं इति भा ।

सू० ४४ ( १ ) खाश्र इत्यैकपद्ये मुद्रितं भाट्ट –ल–बिन्दु । वस्तुतस्तु भिन्नमेव तत् पदद्वयम् ।

सू० ४६ ( १ ) राच्च इति य ।

अधि० १ दर्शेऽभ्युदयेष्टौ नैमित्तिकदेवताऽपनयः इति भा-भिन्नाः । अभ्युदितेष्टिः इति भा ।

सू० ३ ( १ ) शब्दाभ्यां इति य ।

सू० ४ ( १ ) स्य च द इति वृ–ल–य । भा- मूलेऽपि 'आतञ्चनाभ्यासं च दर्शयति' इति व्याख्यानात् सूत्रे च-शब्द आवश्यकः । स्य द इति वृ–ल–यभिन्नाः ।

६ पयोदोषात् पञ्चशरावेऽदुष्टंहीतरत् ।
७ सांनाय्येऽपि तथेति चेत् ।
८ न तस्यां दुष्टत्वादविशिष्टं हि कारणम् । ७ य.
९ लक्षणार्था शृतश्रुतिः । ८ य.

अधि० २.

१० उपांशुयाजेऽवचनाद् यथाप्रकृति । ९ य, २ बिन्दुः.
११ अपनयो वा प्रवृत्त्या यथेतरेषाम् । १० य.

अधि० ३.

१२ निरुप्ते स्यात् तत्संयोगात् । ११ य, ३ बिन्दुः.
१३ प्रवृत्ते वा प्रापणान्निमित्तस्य । १२य.
१४ लक्षणमात्रमितरत् । १३ य.
१५ तथा चान्यार्थदर्शनम् १४ य.

अधि० ४.

१६ अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् । १५ य, ४ बिन्दुः.
१७ व्यूर्ध्वभाग्भ्यस्त्वालेखनस्तत्कारित्वाद् देवतापनयस्य । १६ य.

अधि० ५.

१८ विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् । १७ य, ५ बिन्दुः.
१९ अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् । १८ य.
२० अभावाच्चेतरस्य स्यात् । १९ य.

अधि० ६.

२१ सांनाय्यसंयोगान्नासंनयतः स्यात् । २० य, ६ बिन्दुः.
२२ औषधसंयोगाद् वोभयोः । २१ य.
२३ वैगुण्यान्नेति चेत् । २२ य.

---

सू० ६ ( १ ) पयोदोषात् इति पदं नास्ति य । ( २ ) वेऽदृष्टं इति भाट्ट । भाष्ये तु ' इतरदिह द्रव्यमदुष्टं ' इत्येव ।

सू० ७ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ८ ( १ ) स्यादष्ट इति भाट्ट । भा-मूलं तु ' न दुष्टं ' इत्येव ।

अधि० २ उपांशुयागेपि देवताऽपनयः इति भा-भिन्नाः । उपांशुयाजेपि देवतापनयः इति भा ।

सू० १० ( १ ) यागेऽव इति वि-शा-ल-चौ । वि-शामूलेऽपि उपांशुयाजशब्दस्यैव पाठात् कुत्वमयुक्तम् । ( २ ) यथा प्रकृति इति भित्त्वा मुद्रितं भाट्ट । तत्तु न युक्तम् । यथाप्रकृतिः इति चौ-पाठोऽपि न युक्तः । यथाप्रकृति वा इति ल । यथा प्रकृतौ इति शाटि ।

अधि० ३ अनिरुप्तेऽपि अभ्युदयेष्टिः इति भा-भिन्नेषु । अनिरुप्तेऽपि अभ्युदितेष्टयनुष्ठानं इति भा ।

सू० १३ (१) प्रवृत्तौ वा इति य । प्रवृत्ते प्रा इति वृ-ल । भा-मूले तु ' वा-शब्दः पक्षं व्यावर्तयति ' इत्युक्तम् ।

सू० १७

अधि० ४ अनिरुप्ते अभ्युदये वैकृतीभ्यो निर्वापः इति भा-भिन्नेषु । अनिरुप्तेऽपि अभ्युदये वैकृतीभ्य एव निर्वापः इति भा । उभयत्रापि ' वैकृतीभ्यो देवताभ्यः ' इति आवश्यकम् ।

अधि० ५ किंचिन्निरुप्ते अभ्युदये अवशिष्टस्य तूष्णीं निर्वापः इति भा-भिन्नेषु । अर्धनिरुप्ते चन्द्राभ्युदये तूष्णीमवशिष्टनिर्वापः इति भा ।

सू० १८ ( १ ) विनिरुप्तेन इति तृतीयान्तः चौ-पाठः, स चायुक्तः । विनिरुप्ते चतुर्मुष्टीनामनप इति य । विनिरुप्ते न चतुर्मुष्टीनामप इति बिन्दुः ।

सू० १९ ( १ ) अप्रकृ इति य ।

सू० २० ( १ ) स्तात् इति ल-पाठो न युक्तः । नह्यत्राशीर्वादः कश्चित् ।

अधि० ६ संनयदसंनयदुभयस्यैवाभ्युदये प्रायश्चित्तं इति भा-भिन्नेषु । असंनयतोऽपि अभ्युदये प्रायश्चित्तं इति भा ।

सू० २१ ( १ ) गात् सं इति ल ।

सू० २२ ( १ ) ओषधिसं इति वृ-ल ।

सू० २३ ( १ ) चेदन्तमुत्तरेणैकं य ।

२४ नातत्संस्कारत्वात् । २२ य.

अधि० ७.

२५ साम्युत्थान विश्वजित् क्रीते स्यात् । २३ य, ७ बिन्दुः.

२६ प्रवृत्ते वा प्रापणान्निमित्तस्य । २४ य.

२७ आदेशार्थेतरा श्रुतिः । २५ य.

अधि० ८.

२८ दीक्षापरिमाणे यथाकाम्यविशेषात् । २६ य, ८ बिन्दुः.

( अधि० ९ वार्तिक-वि-भाट्ट-शा-ल-बिन्दु-मण्डनाः. )

२९ द्वादशाहस्तु लिङ्गात् स्यात् । २७ य, ९बिन्दुः.

अधि० ९ भा-म-सा-वृ । १० वि-भाट्ट-शा-ल-बिन्दु-मण्डनाः ।

३० पौर्णमास्यामनियमोऽविशेषात् । २८ य, १० बिन्दुः.

३१ आनन्तर्यात्तु चैत्री स्यात् । २९ य.

३२ माघी वैकाष्टकाश्रुतेः । ३० य.

३३ अन्या अपीति चेत् । ३१ य.

३४ न भक्तित्वादेषा हि लोके । ३१ य.

३५ दीक्षाऽपराधे चानुग्रहात् । ३२ य.

३६ उत्थाने चानुप्ररोहात् । ३३ य.

३७ अस्यां च सर्वलिङ्गानि । ३४ य.

---

अधि० ७ सत्राय प्रवृत्तमात्रस्य विश्वजित् इति भा-भिन्नेषु शीर्षकं विपरीतबुद्धिजनकम् । सत्राय प्रवृत्तः सन् यदि सत्रं त्यजेत् ततस्तस्य विश्वजित् इति हि सिद्धान्तो न तु प्रवृत्तमात्रस्य । सत्राय प्रवृत्तमात्रस्य व्युत्थाने विश्वजिद्विधानं इति भा ।

सू० २५ ( १ ) साम्युद्धाते विश्वजिति क्रीते इति टी ।

सू० २६ ( १ ) प्रवृत्तौ वा इति य ।

अधि० ८ दीक्षापरिमाणस्य द्वादशाहत्वनियमः इति म-सा-बिन्दु-वृ । ज्योतिष्टोमे दीक्षापरिमाणानां वैकल्पिकत्वं इति वि-शा-ल । दीक्षापरिमाणविचारः इति भाट्ट ज्योतिष्टोमस्य (द्वादशाहस्य) द्वादशदीक्षानियमः इति भा ।

(अधि० ९ वि-भाट्ट । द्वादशाहे दीक्षापरिमाणनियमः इति वि-शा-ल । द्वादशाहदीक्षापरिमाणनियमः इति भाट्ट । द्वादशाहस्य द्वादश दीक्षाः इति बिन्दुः ।)

अत्र भाष्यकारैः सूत्रद्वयात्मकमेकमधिकरणं गृहीतम् । ज्योतिष्टोमे द्वादशदीक्षापक्षस्य नियमः सिद्धान्तितश्च । वार्तिककारैस्तु तत् खण्डितम् । अधिकरणद्वयं च पृथक् स्वीकृतम् । तत्र प्रथमे, ज्योतिष्टोमे दीक्षापरिमाणपक्षेषु याथाकाम्यं सिद्धान्तितम् । द्वितीये द्वादशाहाख्ये सत्रेऽहीने वा, द्वादशैव दीक्षाः इति सिद्धान्तितम् । तदेव च वि-भाट्ट-शा-बिन्दु-मण्डनमूलकारैः स्वीकृतम् । तेनात्र भाष्यापेक्षया अधिकरणाङ्काधिक्यं संजातम् । वृत्तिश्च भाष्यानुसारिणी ।

सू० २८ ( १ ) यथाकाम्यमवि इति बिन्दु-पाठो न शुद्धः । याथाकाम्यविशेषात् इति वृ । याथाकाम्यमवि इति य । अत्र यथाकामी इतिपाठः शुद्ध एव, यजमानो यथाकामी स्यात्, यथा कामयते तथा कर्तव्यमित्यर्थः । याथाकाम्यं इत्यपि शुद्धमेव । याथाकामी इति स्त्रीलिङ्गपाठोपि शुद्ध इति स्वीकार्यं वार्तिककारैः साधितत्वात् इति ३।४।४६ सूत्रे प्रागुक्तमेव ।

अधि० ९ गवामयने माघपौर्णमास्याः पुरस्ताद्दीक्षा इति भा-भिन्नेषु । माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गावामयनिकदीक्षाविधानं इति भा ।

सू० ३३ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ३४ (१) भक्तत्वा इति य । भाक्तत्वा इति यक्ष । भक्तत्वादेषां हि इति वृ-ल ।

सू० ३५ ( १ ) दीक्षापराधे इति अवग्रहराहित्येन मुद्रणेऽपि अर्थज्ञानं न प्रतिबध्यते तथापि स्पष्टतायै अवग्रहलेखनं युक्तम् । अनिरुप्तेऽभ्युदिते ६।५।१६ इत्यादौ यथा ।

सू० ३७ ( १ ) तस्यां इति य ।

अधि० १० भा–म–सा–वृ । ११–वि–भाट्ट–शा–ल–बिन्दु–मण्डनाः ।

३८ दीक्षाकालस्य शिष्टत्वादतिक्रमे नियताानामनुत्कर्षः प्राप्तकालत्वात् । ३५ य, ११ बिन्दुः.

अधि० ११ भा–म–सा–वृ । १२ वि–भाट्ट–शा–ल–बिन्दु–मण्डनाः ।

३९ उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् । ३६ य, १२ बिन्दुः.

४० तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् । ३७ य.

४१ कालप्राधान्याच्च । ३८ य.

अधि० १२ भा–म–सा–वृ । १३ वि–भाट्ट–शा–ल–बिन्दु–मण्डनाः ।

४२ प्रतिषेधाच्चोर्ध्वमवभृथादेष्टेः । ३९ य, १३ बिन्दुः.

अधि० १३ भा–म–सा–वृ । १४ वि–भाट्ट–शा–ल–बिन्दु–मण्डनाः ।

४३ प्रतिहोमश्चेत् सायममिहोत्रप्रभृतीनि हूयेरन् । ४० य, १४ बिन्दुः.

---

अधि० १० दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षः इति भा–भिन्नेषु । दीक्षाकालोत्कर्षे अग्निहोत्रादीनामुत्कर्षः इति भा ।

सू० ३८ ( १ ) नियमाना इति बिन्दुः.

अधि० ११ ज्योतिष्टोमोत्कर्षे प्रतिहोमानुष्ठानं इति भा–म–सा–भाट्ट–वृ । दीक्षानुवृत्तौ प्रतिहोमनिराकरणं इति वि–शा–ल । ज्योतिष्टोमोत्कर्षे प्रतिहोमानामननुष्ठानं इति बिन्दुः ।

सू० ४० ( १ ) यथापू इति संहत्य मुद्रणं बिन्दौ, तन्न युक्तम् ।

अधि० १२ उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानं इति भा–म–सा–वृ । उदवसानीयोत्कर्षेऽपि प्रतिहोमनिराकरणं इति वि–शा–ल । उदवसानीयोत्कर्षे प्रतिहोमाननुष्ठानं इति भाट्ट । उदवसानीयोत्कर्षेऽपि प्रतिहोमानामननुष्ठानं इति बिन्दुः ।

सू० ४२ ( १ ) प्रतिहोमश्चोर्ध्वं इति बिन्दुः । प्रतिषिद्धश्चोर्ध्वं इति वृ । प्रतिषिद्धाश्चो इति ल । एतेषु बिन्दु–लपाठौ न ग्राह्यौ । ( २ ) थादिष्टेः इति भा–सा भाट्ट–शा । थादेष्टेः इति म–वि–चौ–य । अत्र भाष्यं " ऊर्ध्वमवभृथात् आ उदवसानीयाया इष्टेः ये होमाः " इत्यादि । तेन सूत्रे ' आ ' इति स्यादेव पदम् । तच्च ' अवभृथात् आ इष्टेः इत्यत्रैव संभवति नान्यत्र । तथाच आ+इष्टेः=एष्टेः =अवभृथादेष्टेः ' इत्येव भाष्यसंमतः सूत्रपाठः । ' अवभृथादूर्ध्वं इष्टेः प्राक् न होमाः ' इति सोमनाथी । सूत्रे तु प्राक्–शब्दो नास्ति, नाप्यध्याहारकल्पना साधीयसी, तेन ' आ ' इत्येव प्राक्–पदेन व्याख्यातमिति मन्यामहे । एतेन ' ऊर्ध्वमवभृथादुदवसानीयेष्टयाः प्राक् लुप्तानां न प्रतिहोमः ' इति वृ–मूलमपि व्याख्यातम् । एवं सति अवभृथादिष्टेः इति भा–सा–शा–वृपाठो मूलदर्शनाभावहेतुक एव ।

अधि० १३ प्रतिहोमे सायममिहोत्रप्रभृत्यारम्भः इति भा–भिन्नाः । प्रतिहोमपक्षे सायमग्निहोत्रप्रभृत्यारभ्यानुष्ठानं इति भा । अत्र पक्ष-पदनिवेश आवश्यक एव कृतः । प्रभृति-शब्दस्य प्रयोगे सति आरम्भशब्दस्तु पुनरुक्तः । प्रतिहोमपक्षे सायमग्निहोत्रमारभ्यानुष्ठानं इति तु युक्तम् ।

सू० ४३ ( १ ) होमाश्चेत् इति य । होमश्चेत् इति य–भिन्नेषु । ' होमाश्चेत् सायमादितः ' इति मण्डनपद्यम् । तेन प्रतिहोमाश्चेत् इति बहुवचनान्तः सूत्रे पाठ इति सिध्यति । इदं तु बोध्यं, ' प्रतिहोमे न चोत्कर्षे होमाश्चेत् सायमादितः । प्रातराद्याः षोडशिनि ' । इति मण्डनपद्यस्य पादत्रयम् । तत्र च क्वचिदेकवचनं क्वचित्तु बहुवचनमेकस्मिन्नेव विषये इति न युज्यते । मण्डनाचार्यो हि श्लोककर्ता, न काश्चिदितरोऽजाविपालः । तेन सर्वत्रैव बहुवचनं वा स्यात् सर्वत्रैव एकवचनं वा स्यात् विनैव च्छन्दोभङ्गं इति कल्पयामः । किंचान्यत् । 'प्रतिहोमो न चोत्कर्षे होमाश्चेत् सायमादितः । प्रातराद्याः षोडशिनी प्रकृते स्याद् भिदाहुतिः ॥ ' इति

अधि० १४, १५ बिन्दु-मण्डनौ, चतुर्दशशेषः वि-भाट्ट-शा-ल ।

४४ प्रातस्तु षोडशिनि । ४१ य, १५बिन्दुः.

अधि० १५, १६ बिन्दु-मण्डनौ.

४५ प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् । ४२ य, १६ बिन्दुः.

४६ प्रकरणे वा शब्दहेतुत्वात् । ४३ य.

४७ अतद्विकारश्च । ४४ य.

अधि० १६, १७ बिन्दु-मण्डनौ.

४८ व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत् प्रतीयेत । ४५ य, १७ बिन्दुः.

अधि० १७, १८ बिन्दु-मण्डनौ.

४९ विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते । ४६ य, १८ बिन्दुः.

५० स्याद्वा प्राप्तनिमित्तत्वात् कालमात्रमेकम् । ४७ य.

अधि० १८, १९ बिन्दु-मण्डनौ.

५१ तत्र विप्रतिषेधाद् विकल्पः स्यात् । ४८ य, १९ बिन्दुः.

---

पद्यं मण्डनाचार्यप्रणीतं मीमांसानुक्रमणिकास्थं निवेशितं महामहोपाध्यायैर्गङ्गानाथझाशर्मभिः । चतुर्थचरणश्च तत्रत्यः-षोडशिनी षोडश्यतिपातनिमित्तकप्रतिहोमः, प्रातराद्या प्रातर्होम आद्यो यस्याः सा तथाभूता, कार्या इति शेषः-इति व्याख्यातः । अधिकरणविषयनिदर्शनावसरे च 'अग्निष्टोमसंस्थानन्तरं षोडशिसंस्था यदा परित्यज्यते' इत्युपक्रान्तम् । तथाच मण्डनश्लोके प्रातराद्या इति टाबन्तं प्रथमैकवचनं, षोडशिनी इति तु ऋन्नेभ्यो ङीप् इति ङीबन्तं प्रथमैकवचनं इति महामहोपाध्याया मन्यन्ते । परंतु 'तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावघातिनः' 'प्रातराद्याः षोडशिनि' इत्येव श्लोकपाठोऽत्र स्यान्मण्डनाचार्यप्रणीतः । प्रातराद्याः इति पुंलिङ्गं प्रथमाबहुवचनं षोडशिनि इति तु सूत्रे इव पुंलिङ्गं सप्तम्येकवचनं इति ज्ञेयम् ।

अधि० १४ षोडशिसंस्थे प्रातरग्निहोत्रप्रभृति अनुष्ठानं इति इति म-सा-बिन्दु-वृ । षोडशिसंस्थे प्रातरग्निहोत्रप्रभृति प्रतिहोमानुष्ठानं इति भा । षोडशिसंस्थे इति केवलविशेषणपदप्रयोगः सर्वत्र क्रियमाणोऽपि 'ज्योतिष्टोमे' इति विशेष्यपदमाकाङ्क्षते तेन 'षोडशिसंस्थे ज्योतिष्टोमे प्रात० इति शीर्षकमावश्यकम् । वि-भाट्ट-शा-मूलकारैस्तु एकसूत्रात्मकमिदमधिकरणं पूर्वाधिकरणे एवान्तर्भावितम् ।

अधि० १५ भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गता इति भा-भिन्नेषु । भेदनादिनिमित्तकहोमानां दर्शपूर्णमासाङ्गता इति भा ।

सू० ४७ ( १ ) काराच्च इति वृ-ल-य ।

अधि० १६ व्यापन्नशब्दार्थनिर्णयः इति सर्वत्र ।

सू० ४८ ( १ ) प्सुत्हृतौ य इति य-पाठः । परंतु 'व्यापन्नमप्सु प्रहरति' इति श्रुत्यनुसारात् 'प्रहृतौ' इति युक्तं पठितुम् ।

अधि० १७ अपच्छेदयौगपद्येऽपि प्रायश्चित्तं इति भा-भिन्नेषु । अपच्छेदयौगपद्येऽपि प्रायश्चित्तविधानं इति भा ।

सू० ५० ( १ ) स्याद्वा प्रतिनि इति य । भाष्यान्तरगतपाठोऽयम् । शाबरानुसारी तु प्राप्तनिमित्तत्वादित्येव पाठः 'प्राप्तं हि निमित्तमपच्छेदः' इत्युक्तत्वात् ।

अधि० १८ यौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्यविकल्प इति म-सा-वि-शा-ल ।०दाक्षिण्ययोर्विकल्प इति भाट्ट । अत्रोभयत्रापि अपच्छेदयौगपद्ये इति वक्तव्यमवश्यम् । अन्यथा हि सापेक्षत्वापत्तिः । युगपदपच्छेदे अदक्षिणत्वसर्वस्वदक्षिणत्वयोर्विकल्प इति बिन्दुः । अपच्छेदयौगपद्ये इति आदौ एव विशेषः, शेषो बिन्दुवत् वृ । अपच्छेदयौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्प इति भा ।

सू० ५१ ( १ ) तत्र प्र इति बिन्दु-पाठो न युक्तः, विप्रतिषेधस्यैवात्र हेतुत्वात्, विप्रतिषेधस्य च प्रतिषेधाद् भिन्नत्वात् ।

५२ प्रयोगान्तरे वोभयानुग्रहः स्यात् ।४९य.
५३ न वैकसंयोगात् । ५० य.

अधि० १९, २० बिन्दु-मण्डनौ.

५४ पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् । ५१ य , २० बिन्दुः.

अधि० २०, २१ बिन्दु-मण्डनौ.

५५ यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद् यथेतरस्मिन् । ५२ य, २१ बिन्दुः.

अधि० २१, २२ बिन्दु-मण्डनौ.

५६ अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् । ५३ य, २२ बिन्दुः.

॥ पादे द्वाविंशतिर्न्याया न्यायविद्भिः समीरिताः ॥

॥ अभ्युदये निरुप्तेस्यात् औषध अन्यापि प्रातः पौर्वे त्रिपञ्चाशत् ॥

॥ इति षष्ठाध्यायस्य पञ्चमः पादः ॥

* * * *

॥ अथ षष्ठाध्यायस्य षष्ठः पादः ॥

अधि० १.

१ संनिपातेऽवैगुण्यात् प्रकृतिवत् तुल्यकल्पा यजेरन् ।
२ वचनाद्वा शिरोवत् स्यात् ।
३ न वाऽनारभ्यवादत्वात् ।
४ स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ।
५ न तत्प्रधानत्वात् ।
६ औदुम्बर्याः परार्थत्वात् कपालवत् ।
७ अन्येनापीति चेत् ।
८ नैकत्वात् तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् । ७ य.
९ संनिपातात्तु निमित्तविघातः स्याद् बृहद्रथंतरवद् विभक्तशिष्टत्वाद् वसिष्ठनिर्वर्त्ये । ८ य.

---

सू० ५२ ( १ ) रेण वो इति य ।

सू० ५३ ( १ ) न वैक इति य । य-भिन्नेषु तु नचैक इत्येव । परंतु वृ-मूलेऽस्य सूत्रस्य ' इमं पक्षं दूषयति ' इत्यवतरणम् । तथा सति भाष्यमूलादावपि 'नवैतदेवं' इत्येव पाठः स्यात् । तस्मात् ' न वैकसंयोगात् ' इत्येव सूत्रं मन्यामहे ।

अधि० १९ आनुपूर्व्येणापच्छेदे उत्तरापच्छेदनिमित्तप्रायश्चित्तानुष्ठानं इति म-सा-वि-शा-ल । अपच्छेदन्यायः इति, क्रमेणापच्छेदे उत्तरापच्छेद प्राबल्यं इति च भाट्ट । क्रमेणावच्छेदे उत्तरापच्छेदनिमित्तकप्रायश्चित्तानुष्ठानं इति बिन्दुः । अपच्छेदे इत्यत्र पकारस्य स्थाने वकारो हस्तदोषात् । अनुक्रमेणापच्छेदे उत्तरापच्छेदनिमित्तकप्रायश्चित्तं इति वृ । अपच्छेदपौर्वापर्ये परनिमित्तकप्रायश्चित्तानुष्ठानं इति भा ।

अधि० २० उद्गातुरुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानं इति म-सा-भाट्ट-बिन्दु-वृ । उद्गात्रुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानं इति वि-शा । उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानं इति भा-शीर्षकमेव युक्तम् । इतरत्तु न्यूनार्थकम् ।

अधि० २१ अहर्गणेऽपच्छेदे न सर्वेषामावर्तनं इति म-सा-बिन्दु-वृ । अहर्गणेऽपच्छेदे सर्वावृत्तिनिराकरणं इति वि-भाट्ट-शा । शीर्षकद्वयमिदं शुद्धमपि पूर्वपक्षनिराकरणबोधकमेव, न सिद्धान्तबोधकम् । सिद्धान्तबोधनमेव हि प्रधानम् । अहर्गणे उद्गातुरपच्छेदवदहरावृत्तिः इति भा । अहर्गणे उद्गात्रपच्छेदविशिष्टस्याह्न एवावृत्तिः इति तु शीर्षकमावश्यकम् ।

अधि० १ सत्रेषु समानकल्पानां सहाधिकारः इति भा-भिन्नेषु । सत्रेषु समानकल्पानामेवाधिकारः इति भा ।

सू० २ ( १ ) वचनाद्वाऽऽशिरवत् स्यात् इति पाठान्तरं भा-मूले ।

सू० ४ ( १ ) स्याद्वा परार्थत्वा इति वृ । वृ-सूत्रे औदुम्बरिवत् इति ह्रस्वस्तु हस्तदोषः ।

सू० ६ ( १ ) म्बर्यां प इति य ।

सू० ७ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ९ ( १ ) घाताद् बृ इति वृ-सूत्रे । वृ-मूले तु विघातः स्यात् इत्येव । ( २ ) वसिष्ठनिर्वर्त्ये इति पदं नास्त्येव य ।

१० अपिवा कृत्स्नसंयोगादविघातः प्रतीयेत स्वामित्वेनाभिसंबन्धात् । ९ य.

११ साम्नोः कर्मवृद्धयैकदेशेन संयोगे गुणत्वेनाभिसंबन्धस्तस्मात् तत्र विघातः स्यात् । १० य.

अधि० २.

१२ वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणिवत् । ११ य, २ बिन्दुः.

१३ अर्थाभावात्तु नैवं स्यात् । १२ य.

१४ अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः । १३ य.

१५ पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत । १४ य.

अधि० ३.

१६ सत्राणि सर्ववर्णानामविशेषात् । १५ य, ३ बिन्दुः.

१७ लिङ्गदर्शनाच्च । १६ य.

१८ ब्राह्मणानां वेतरयोरार्त्विज्याभावात् । १७ य.

१९ वचनादिति चेत् । १८ य.

२० न स्वामित्वं हि विधीयते । १८ य.

२१ गार्हपते वा स्यातामविप्रतिषेधात् ।१९य.

२२ न वा कल्पविरोधात् । २० य.

२३ स्वामित्वादितरेषामहीने लिङ्गदर्शनम् । २१ य.

अधि० ४.

---

सू० १० ( १ ) विभागः प्र इति वृ-ल । ( २ ) तीयते इति केवलं भा-पाठ एव । अन्यत्र तु सर्वत्र तीयेत इत्येव । इति स एवास्माभिः सूत्रपाठे स्वीकृतः । भा-शुद्धिपत्रे च नास्तीदम् ।

सू० ११ ( १ ) कर्मवदेक इति वृ-ल । कर्मवृद्धिरेक इति य । (२) संयोगो गुण इति वृ-ल-य ।

अधि० २ भिन्नकल्पयोरपि राज्ञः पुरोहितस्य च कुलाययज्ञेऽधिकारः इति म-सा-वृ । भिन्नकल्पयोरपि राजपुरोहितयोः कुलाययज्ञेऽधिकारः इति वि-भाट्ट-शा-ल । भिन्नकल्पयोरपि राजपुरोहितयोः कुलाययज्ञे सहाधिकारः इति बिन्दुः । कुलाययज्ञे भिन्नकल्पयोरप्यधिकारः इति भा ।

अत्र म-साशीर्षकमेव साधीयः तत्रापि सहाधिकारः इति वक्तव्यमेव । राज्ञः पुरोहितौ, तयोः इति पूर्वः पक्षः, राजा च पुरोहितश्च तयोः इति सिद्धान्तः । भिन्नकल्पयोरपि इति तु वार्तिककारैरुक्तम् । सोमनाथेनापि तद् विवृतम् । परंतु यजमानस्य च पुरोहितस्य च भिन्नकल्पत्वं कथं संभवतीति नास्माकं शंका निरस्ता भवति । भाष्ये तु कल्पस्य नामापि न श्रूयतेऽत्र ।

सू० १२ ( १ ) नात्तु सं इति य । ( २ ) योगात् तस्मा इति टुप् । ( ३ ) पाणिवत् इति बिन्दु-वृ-ल-य । पाणित्वं इत्यन्यत्र । " यथा वचनेन ' अञ्जलिना जुहोति ' इत्येकस्यैव द्वौ पाणी भवतः " इति भाष्यात् पाणिवत् इत्येव भाष्यसंमतं पाठं मन्यामहे ।

सू० १४ ( १ ) नां वि इति य । ( २ ) त्वादतश्च तेन इति य ।

अधि० ३ सत्रे ब्राह्मणमात्रस्याधिकारः इति भा-भिन्नेषु । सत्रेषु ब्राह्मणानामेवाधिकारः इति भा-शीर्षकमेव साधीयः । इतरशीर्षके तु मात्र-शब्दः कात्स्न्यार्थको वा अवधारणार्थो वेति संशयः ।

सू० १९ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० २१ ( १ ) गार्हपत्ये वा इति भाट्टि-य । ( २ ) स्यान्नामावि इति वृ-ल सूत्रे, स्यादवि इति तु वृ-मूले ।

अधि० ४ सत्रे विश्वामित्रतत्समानकल्पानामेवाधिकारः इति म-सा । विश्वामित्रतत्समानकल्पानामेवाधिकारः इति वि-शा-बिन्दु-ल । अत्राधिकारः क्वेति नोक्तमिति न्यूनता । सत्रे विश्वामित्रसमानकल्पानामेवाधिकार इति भाट्ट । सत्रे विश्वामित्रतत्समानकल्पानामधिकार इति वृ । सत्रे वैश्वामित्रतत्समानकल्पानामधिकार इति वृ । सत्रे वैश्वामित्रतत्समानकल्पानामेवाधिकार इति भा ।

२४ वासिष्ठानां वा ब्रह्मत्वनियमात्[1] । २२ य. ४ बिन्दुः.

२५ सर्वेषां वा प्रतिप्रसवात् ।२३ य.

२६ वैश्वामित्रस्य[1] हौत्रनियमाद् भृगुशुनकवसिष्ठानामनधिकारः । २४ य.

अधि० ५.

२७ विहारस्य प्रभुत्वादनग्नीनामपि स्यात् । २५ य, ५ बिन्दुः.

२८ सारस्वते च दर्शनात् । २६ य.

२९ प्रायश्चित्तविधानाच्च । २७ य.

३० साग्नीनां वेष्टिपूर्वत्वात् । २८ य.

३१ स्वार्थेन च प्रयुक्तत्वात् । २९ य.

३२ संनिवापं[1] च दर्शयति । ३० य.

अधि० ६ ( अन्तरागर्भिणी )

३३ जुह्वादीनामप्रयुक्तत्वात्[1] संदेहे यथाकामी[2] प्रतीयेत[3]। ३१ य, ६ बिन्दुः.

३४ अपिवा[1]ऽन्यानि पात्राणि साधारणानि कुर्वीरन् विप्रतिषेधाच्छास्त्रकृतत्वात्[2] । ३२ य.

( पञ्चमाधिकरणशेषः )

३५ प्रायश्चित्तमापदि स्यात् । ३३ य.

अधि० ७

३६ पुरुषकल्पेन वा[1] विकृतौ कर्तृनियमः स्याद् यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकेस्मिन्[2]नधिकारः स्यात् । ३४ य, ७ बिन्दुः.

३७ लिङ्गाद्वेज्याविशेषवत् । ३५ य.

३८ न[1] वा संयोगपृथक्त्वाद् गुणस्येज्याप्रधानत्वादसंयुक्ता हि[2] चोदना । ३६ य.

३९ इज्यायां तद्[1]गुणत्वाद् विशेषेण नियम्येत । ३७ य.

---

सू० २४ ( १ ) त्वस्य नि इति शा-बिन्दु-य ।

सू० २६ ( १ ) वैश्वा इति ल-य । विश्वा इति तु अन्यत्र । परंतु भाष्ये ' वैश्वामित्रस्य हौत्रं नियम्यते ' इत्युक्तत्वात् वैश्वामित्रस्य इत्येव भाष्यसंमतः सूत्रपाठ इति निश्चिनुमः ।

अधि० ५ सत्रे आहिताग्नेरेवाधिकार इति मा-भिन्नेषु । सारस्वतभिन्नसत्रेषु आहिताग्नीनामेवाधिकार इति भा-शीर्षकमेव साधीयो नेतरत् । अत्र सप्तविंशादिभिर्द्वात्रिंशान्तैः पञ्चत्रिंशेन चेति सप्तभिः सूत्रैः पञ्चममधिकरणं, ३३-३४ सूत्राभ्यां तु अन्तरागर्भिणीरूपमधिकरणान्तरम् ।

सू० ३२ ( १ ) संनिपातं च इति य ।

अधि० ६ जुह्वादीनां साधारण्यं इति म-सा-वि-शा-ल । सत्रे जुह्वादीनां साधारण्यं इति भाट्ट । जुह्वादीनां साधारणता इति बिन्दुः । सत्रे जुह्वादीनां सर्वसाधारण्यं इति वृ । सत्रे साधारणपात्राणामधिकारः इति भा । साधारणपात्रैः सत्रे प्रयोग इति तु युक्तं शीर्षकम् ।

सू० ३३ ( १ ) त्वायथा इति बिन्दुः त्वाद्याथा इति य । ( २ ) याथा इति वृ । ( ३ ) तीयते इति वृ-ल ।

सू० ३४ ( १ ) अपि चान्या इति मटि-पाठो न युक्तः । ( २ ) त्वाच्च इति यपाठो युक्तः ।

अधि० ७ विकृतसप्तदशसामिधेनीषु वर्णत्रयाधिकारः इति भा-वृभिन्नेषु । विकृतिसप्तदशसामिधेनीषु वर्णत्रयाधिकारः इति वृ । शीर्षकाभ्यामाभ्यां संपादकानां मीमांसाऽनभिज्ञता भाति । श्रुतसाप्तदश्यासु विकृतिषु वर्णत्रयाधिकारः इति भा । श्रुतसप्तदशसामिधेनीकासु विकृतिषु वर्णत्रयस्याप्यधिकार इति तु युक्तम् ।

सू ३६ ( १ ) ल्पेन वि इति बिन्दु-वृ-ल-य-टुप्-टी । ( २ ) प्रत्येतस्मिन् विधिकात्स्न्यात् इति य । प्रत्येकस्मिन्नधिकारकात्स्न्यात् इति मटि-टी ।

सू० ३८ ( १ ) स वा इति टी । ( २ ) हि-शब्दो नास्ति टुप्-टी ।

सू० ३९ ( १ ) तद्ग्रहण इति य ।

॥ न्यायास्तु सहैव भवन्ति पादे ॥
संनिपाते वचनात्तु स्वामित्वात् जुह्वादीनां सप्तत्रिंशत् ॥
॥ इति षष्ठाध्यायस्य षष्ठः पादः ॥

* * * *

॥ अथ षष्ठाध्यायस्य सप्तमः पादः ॥

अधि० १.

१ स्वदाने सर्वमविशेषात् ।

२ यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् ।

अधि० २.

३ न भूमिः स्यात् सर्वान् प्रत्यविशिष्टत्वात्। २ बिन्दुः.

अधि० ३.

४ अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् । ३ बिन्दुः.

अधि० ४.

५ नित्यत्वाच्चानित्यैर्नास्ति संबन्धः । ४ बिन्दुः.

अधि० ५.

६ शूद्रश्च धर्मशास्त्रत्वात् । ५ बिन्दुः.

अधि० ६.

७ दक्षिणाकाले यत् स्वं तत् प्रतीयेत, तद्दानसंयोगात् । ६ बिन्दुः.

अधि० ७.

८ अशेषत्वात् तदन्तः स्यात्, कर्मणो द्रव्यसिद्धित्वात् । ७ बिन्दुः.

---

अधि० १ विश्वजिति पित्रादीनामदेयत्वं इति भा-भिन्नेषु । विश्वजिति सर्वस्वदाने पित्रादीनामदेयता इति भा ।

सू० २ ( १ ) भुः स्वमित इति य ।

अधि० २ विश्वजिति पृथिव्या अदेयता इति म-सा-भाट्ट-वृ । विश्वजिति भूमेरदेयत्वं इति वि-शा-ल-भा । विश्वजिति महाभूमेरदेयत्वं इति बिन्दुः । वि-शादिशीर्षकेऽपि महाभूमेः इति पदमावश्यकम् ।

अधि० ३ विश्वजिति अश्वादीनामदेयता इति सर्वे ।

सू० ४ (१) विशेषात् इत्यन्तं सूत्रं, स्यात्-पदं नास्ति बिन्दुः ।

अधि० ४ विश्वजिति विद्यमानानामेव सर्वस्वानां दानं इति म-सा-बिन्दु-वृ । विश्वजिति अविद्यमानसर्वस्वदाननिराकरणं इति वि-शा-ल । अयुक्तमिदं शीर्षकम् । अविद्यमानस्य कथं स्वत्वं, कथं वा तद्दातुं शक्यते, निराकरणमपि नैव कर्तव्यमप्राप्तत्वात् । विश्वजिति विद्यमानसर्वस्वानां देयता इति भाट्ट । विश्वजिति विद्यमानस्यैव स्वत्ववतः सर्वस्य दानं इति भा ।

अधि० ५ विश्वजिति धर्मार्थसेवकशूद्रस्यादेयता इति सर्वे ।

सू० ६ ( १ ) श्च तद्धर्मा इति य ।

अधि० ६ विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानां देयता इति म-सा-वि-शा-बिन्दु-वृ-ल । विश्वजिति दक्षिणाकाले विद्यमानानामेव देयता इति भाट्ट । विश्वजिति दक्षिणाकाले विद्यमानस्वत्ववतामेव देयता इति भा ।

सू० ७ ( १ ) स्वं प्र इति वृ ।

अधि० ७ विश्वजिति दक्षिणादानोत्तराङ्गानामनुष्ठानं इति म-सा-वि-भाट्ट-शा-ल । विश्व०-गानामप्यनुष्ठानं इति बिन्दु-वृ । अतीवानुचितमिदं शीर्षकद्वयम् । दक्षिणार्थादितरदपि सर्वं धनं चेद्दीयते उत्तराङ्गानामप्यनुष्ठानं कर्तुं न शक्येत इति ' दाक्षिणार्थं यन्निर्दिष्टं तदेव सर्वं देयं ' इत्येव सर्वग्रन्थेषु सिद्धान्तः । बिन्दुसंशोधकाः किल प्राचीनशीर्षके कस्यचित् पदस्याक्षरस्यापि वा परिवर्तने सदा बद्धपरिकराः सन्तः प्रकृतादिस्थले अन्धपरंपरान्यायमेवानुसरन्तीति महदाश्चर्यम् । विश्वजिति दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य देयता इति भा ।

सू० ८ ( १ ) दङ्गं स्यात् इति य । ( २ ) सिद्धत्वात् इति भाटि-भाट्ट ।

९ अपिवा शेषकर्म स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ।
१० तथा चान्यार्थदर्शनम् ।
११ अशेषं तु समञ्जसाऽऽदानेन शेषकर्म स्यात् ।
१२ नाऽऽदानस्यानित्यत्वात् ।
१३ दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधः स्यात् ।

अधि० ८.

१४ अहर्गणे च तद्धर्मः स्यात् सर्वेषामविशेषात् । ८ बिन्दुः.
१५ द्वादशशतं वा प्रकृतिवत् ।
१६ अतद्गुणात्तु नैवं स्यात् ।
१७ लिङ्गदर्शनाच्च ।

अधि० ९.

१८ विकारः सन्नुभयतोऽविशेषात् । ९बिन्दुः.
१९ अधिकं वा प्रतिप्रसवात् ।
२० अनुग्रहाच्च पादवत् ।

अधि० १०.

२१ अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात् । १० बिन्दुः.
२२ कल्पान्तरं वा तुल्यवत् प्रसंख्यानात् ।

अधि० ११. ( १० एव भाट्ट-बिन्दुः. )

२३ अनियमोऽविशेषात् ।
२४ अधिकं वा स्याद् बह्वर्थत्वादितरैः संनिधानात् ।

---

सू० ९ ( १ ) अपिवाऽशे इति वृ ।

सू० ११ ( १ ) अशेने तु इति य । ( २ ) ञ्जसमादा इति वृ-ल-य ।

सू० १२ ( १ ) नस्यानि इति वृ-ल-य । नस्य नि इत्यन्यत्र । भाष्ये तु ' आदानं तु आनित्यम् । नित्यं च शेषकर्म ' इत्युक्तत्वात् ' नादानस्यानित्यत्वात् ' इत्येव सूत्रपाठो भाष्यसंमत इति सिध्यति ।

सू० १३ ( १ ) सु वि इति वृ-ल । ( २ ) दक्रत्वर्थत्वेन इति य । दद्रव्यत्वाच्च सं इति मटि ।

अधि० ८ अहर्गणस्थेऽपि विश्वजिति सर्वस्वदानं इति भा-भाट्टभिन्नेषु । विश्वजिति अहर्गणे सर्वस्वदानं इति भाट्ट । अष्टरात्रान्तर्गते विश्वजिति सर्वस्वदानं इति भा ।

सू० १४ ( १ ) तद्धर्मा स्यात् इति वृ-ल-यभिन्नेषु । तद्धर्मा स इति य । तद्धर्मः स्यात् इति वृ-ल । अत्र भाष्यमूलं ' य एव प्रकृतौ विश्वजितो धर्मः स एव अस्य भविष्यति ' इति । तेन तत्पुरुष एवात्र न बहुव्रीहिः । तथा च ' तद्धर्मः ' इत्येव भाष्यसंमतं सूत्रपदम् ।

अधि० ९ विश्वजिति द्वादशशतन्यूनधनस्यानधिकारः इति बिन्दु-भिन्नेषु । ०धनस्यानधिकारिता इति बिन्दुः ।

सू० १८

अधि० १० आधाने अपरिमितं देयं इत्यनेन संख्यान्तरविधानं इति म-सा-वृ । अपरिमितशब्दस्य संख्यान्तरत्वं इति वि-शा-ल । आधाने अपरिमितशब्दस्य संख्यान्तरत्वं इति भाट्ट । किं भोः ' अपरिमितं ' इति यः शब्दः, स एव संख्यान्तरम् ? शब्द एव कथं संख्या स्यात् ? संख्यान्तरं तु अपरिमितशब्देन प्रतिपादयितुं शक्यते । परंतु शब्द एव संख्यान्तरतां वर्षशतेनापि न प्राप्नुयात् । आधाने अपरिमितशब्देन संख्यान्तरविधानं इति बिन्दुः । आधाने अपरिमितवाक्येन संख्यान्तरसाधनकदानविधानं इति भा । अत्र दानस्य साधनं संख्यान्तरं इत्युक्तम् । परंतु दानस्य साधनं संख्यान्तरं कथं स्यादिति भा-संपादका एव जानीयुः ।

सू० २१ ( १ ) अपरिमिते सं इति वृ । अपरिमाणे शि इति शा-बिन्दु-य । अपरिमाणे चाशि इति उपक्रमपराक्रमः ।

अधि० ११ अपरिमितशब्देन सहस्राधिकस्य ग्रहणं इति म-सा-वृ । अपरिमितशब्देन सहस्राधिकग्रहणं इति वि-शा-ल । आधाने सहस्राधिकस्यापरिमितत्वं इति भा ।

सू० २४ ( १ ) दितरैः सं इति वृ-ल-य-उपक्रमपराक्रमाः । ' इतरैः संनिधानात् ' इति लिखि-

२५ अर्थवादश्च तद्वत् ।

अधि० १२, ११ भाट्ट-बिन्दुः.

२६ परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् । ११ बिन्दुः.

२७ तद्युक्ते च प्रतिषेधात् ।

२८ निर्देशाद्वा तद्धर्मः स्यात् पञ्चावत्तवत् ।

२९ विधौ तु वेदसंयोगादुपदेशः स्यात् ।

३० अर्थवादो वा विधिशेषत्वात् तस्मान्नित्यानुवादः स्यात् ।

अधि० १३, १२ भाट्ट-बिन्दुः.

३१ सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु । १२ बिन्दुः.

३२ अपिवा तदधिकारान्मनुष्यधर्मः स्यात् । ३३ वृ-ल.

३३ नासामर्थ्यात् । ३४ वृ-ल.

३४ संबन्धादर्शनात् । ३५ वृ-ल.

३५ स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात् । ३६ वृ-ल, ३४ य.

३६ अपिवा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् । ३७ वृ-ल, ३५ य.

३७ विप्रतिषेधात्तु गौणोऽन्यतरः स्यादिति लावुकायनः ३८ वृ-ल, ३६ य.

३८ संवत्सरो विचालित्वात् । ३९ वृ-ल, ३७ य.

३९ मासाः प्रकृतिः स्यादधिकारात् । ४० वृ-ल, ३८ य.

---

तपुस्तकेषु पाठो दृश्यते इति टिप्पण्यां भा-संशोधकाः। इतरेषां सं इति वृ-ल-यभिन्नेषु ।

सू० २५ ( १ ) तदर्थवत् इति मटि-वृ-ल-य। तदर्थत्वात् इति मटि ।

अधि० १२ भाट्ट-बिन्दुमूलकारैः एकविंशादिभिः पञ्चविंशान्तैः सूत्रैरेकमेव दशममधिकरणं स्वीकृतमिति तन्मतेनेदमेकादशमाधिकरणम् । एवमुत्तरत्रापि ज्ञेयम् । इति ह्यस्माद्येत्यादिपरकृतिपुराकल्पानामर्थवादता इति म-सा-ल । इतिह्यस्माद्येत्यादि० इति वि-शा-वृ-बिन्दुः । परकृतिपुराकल्पानामर्थवादता इति भा-भाट्ट।

सू० २६ ( १ ) ल्पं म-इति य ।

सू० २७ ( १ ) यद्युक्ते इति य।

सू० ३० ( १ ) त्वान्नित्या इति य । त्वात्तस्मिन्नित्या इति मटि ।

अधि० १३ सहस्रसंवत्सरशब्दस्य सहस्रदिनपरता इति भा-भाट्टभिन्नेषु । सहस्रसंवत्सरशब्दार्थः इति भाट्ट । विश्वसृजामयने संवत्सरशब्दस्य दिवसपरत्वेन मनुष्याधिकारः इति भा ।

सू० ३१ एतत्सूत्रोत्तरं ' उपचारोऽन्यार्थदर्शनम् ३२ ' इत्यधिकं सूत्रं वृ-ल । भाष्येऽपि 'उपचारोऽन्यार्थदर्शनं च 'इत्युक्त्वा ' प्रजापतिं वै ' इत्यादिश्रुतिरुपन्यस्ता । तथापि तत् भाष्यमेव वा सूत्रं वेति न निर्णयोऽस्माकम् ।

सू० ३२ ( १ ) रात् स मनु इति य ।

सू० ३४ नास्तीदं सूत्रं य ।

सू० ३५ ( १ ) सकुल्यः स्या इति वृ-ल ।

सू० ३६ ( १ ) संयोगात् इत्यन्तमेव सूत्रं य ।

सू० ३७ ( १ ) तु गुण्यन्य इति य-भिन्नेषु सर्वत्र । तु गुणादन्य इति मटि । तु गौणोऽन्य इति य । अत्र भाष्यं 'अन्यतरोऽत्र गौणः शब्दः स्यात्' इति । ' तस्माद्विरोधात् अन्यतरद्वचनं गौणं ' इति च । इति य-पाठ एव भाष्यसंमत इति स्पष्टम् । न च गौणत्वार्थे ' गुणी ' इति शब्दः स्वारसिकः ।

सू० ३८ ( १ ) त्सरो वा वि इति वृ-ल ।

सू० ३९ ( १ ) स प्र इति वृ । सा प्र इति वृ-यभिन्नाः । स प्रकृतः स्या इति य ।

अत्र भाष्यं " गवामयने मासाः प्रकृताः मासेषु च संवत्सरशब्द उक्तः 'यो मासः स संवत्सरः' इति । तस्मात् पञ्चपञ्चाशतो मासाः इति " इति । तेन ' मासाः प्रकृतिः ' इत्येव भाष्यसंमतः सूत्रपाठ इति निश्चिनुमः ।

४० अहानि वाऽभिसंख्यत्वात् । ४१ वृ–ल, ३९ य.

॥ न्यायाः पादे त्रयोदश ॥

स्वदाने अशेषे अपरिमाणे सहस्र नवात्रिंशत्

॥ इति षष्ठाध्यायस्य सप्तमः पादः ॥

*  *  *  *

॥ अथ षष्ठाध्यायस्याष्टमः पादः ॥

अधि० १, १–२ मण्डनः.

१ इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ।

२ इष्टित्वेन तु संस्तवश्चतुर्होतृनसंस्कृतेषु दर्शयति ।

३ उपदेशस्त्वपूर्वत्वात् ।

४ स सर्वेषामविशेषात् ।

५ अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ।

६ जपो वाऽनग्निसंयोगात् ।

७ इष्टित्वेन तु संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ।

८ उभयोः पितृयज्ञवत् ।

९ निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् ।

१० पितृयज्ञे संयुक्तस्य पुनर्वचनम् ।

अधि० २, ३ मण्डनः.

---

सू० ४० ( १ ) संख्यास्वात् इति ल । संख्यानात् इति य ।

अधि० १ अत्र मण्डनाचार्येण ' चातुर्होत्रेऽनग्निरेवाधिकारी ' इति प्रथमाधिकरणमुक्त्वा ' क्रत्वर्थेऽस्मिन्नग्निमानेव कर्ता ' इति द्वितीयाधिकरणमुक्तम् । अत एव चान्ते एकादशाधिकरणान्येवात्र पादे प्रतिज्ञातानि । श्रीगंगानाथझाशर्मणोक्तमत्र ' पञ्चमसूत्रस्वरसादिदमधिकरणान्तरमत्र धृतं' इति । परंतु पञ्चमसूत्रस्वरसोऽत्र न कल्पयितुं शक्यते । उत्सूत्रमेव तु द्वितीयमधिकरणमारचितं स्यान्मण्डनाचार्येणेति । अनाहिताग्नेरेव चतुर्होतृहोमाधिकारः इति म-सा -बिन्दु-वृ । चतुर्होतृहोमे अनाहिताग्नेरेवाधिकारः इति-भाट्ट-शा-ल । चतुर्होतृहोमेषु अनाहिताग्नेरेवाधिकारः इति भा ।

अत्र सर्वाण्येव शीर्षकाणि न युक्तानि । तेभ्यो हि ' यथा अनाहिताग्नेर्न ज्योतिष्टोमाधिकारः किंतु आहिताग्नेरेव, यथा वा राजसूये ब्राह्मणस्य नाधिकारः किंतु क्षत्रियस्य राज्ञ एव तथा चतुर्होतृहोमेषु आहिताग्नेर्नाधिकारः किंतु अनाहिताग्नेरेव ' इति भाति । तत्तु न युक्तम् । आहिताग्निरपि स्मार्तेऽग्नौ सर्वथा लौकिके वाऽग्नौ चतुर्होतृहोमान् कुर्वन् किं प्रत्यवेयात् ?। वस्तुतस्तु चतुर्होतृहोमाः स्मार्ताग्नौ न कर्तव्याः किंतु ते लौकिकेऽग्नौ कर्तव्याः इत्येवाधिकरणसिद्धान्तः । ' चतुर्होतृहोमानां आहितेष्वग्निषु नानुष्ठानं ' इत्यादि रूपं तु शीर्षकमत्र देयम् ।

सू० १ ( १ ) शेषात् इति चौ पाठो न ग्राह्यः

सू० २ ( १ ) न सं इति वृ । ( २ ) संस्तुतिश्च इति य ।

सू० ४ ( १ ) स इति पदं नास्ति य ।

सू० ७ ( १ ) न सं इति वृ–ल । ( २ ) स्तुतो हो इति य ।

सू० ९ ( १ ) भ्याग्नेः सं इति य ।

सू० १० ( १ ) ज्ञे तु सं इति य ।

अधि० २ अनाहिताग्निषु उपनयनहोमः इति म-सा-वि-ल । अनाहितेग्नौ उपनयनहोमः इति भाट्ट । आहिताग्निषु उपनयनहोमः इति शा । अनाहितेष्वग्निषु उपनयनहोमः इति बिन्दुः । अनाहिताग्निषु उपनयनहोमाः इति वृ । उपनयनाङ्गहोमानां लौकिकाग्नौ अनुष्ठानं इति भा । अत्र अनाहिताग्निशब्दस्य बहुवचनं अनेकत्र प्रयुक्तं, तत्र पृच्छामः उपनयनहोमे कतीनामग्नीनामावश्यकता भवतीति वक्तव्यमिति । संशोधकमहाशयैः उपनयनहोमोऽपि न ज्ञायत इति मन्यामहे । शास्त्रदीपिकायां तु ' आहिताग्निषु ' इत्येवोक्तं, तत् किं शा-संपादकैः स्वपुत्राणामुपनयनं त्रेताग्नावेव संपादितम् ? किंच उपनयनहोमाः इति बहुवचनं वृ-संपादकैः

११ उपनयनादधीत होमसंयोगात् । २ बिन्दुः.

१२ स्थपतीष्टिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ।

१३ आधानं च भार्यासंयुक्तम् ।

१४ अकर्म चोर्ध्वमाधानात् तत्समवायो हि कर्मभिः ।

१५ श्राद्धवदिति चेत् । १६ वृ-ल.

१६ न श्रुतिविप्रतिषेधात् । १७ वृ-ल,१५य.

१७ सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् । १९ वृ-ल, १६ य.

१८ सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत । २० वृ-ल, १७ य.

१९ पितृयज्ञे तु दर्शनात् प्रागाधानात् प्रतीयेत । २१ वृ-ल, १८य.

अधि० ३, ४ मण्डनः.

२० स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत् तादर्थ्याच्चापवृज्येत । २२ वृ-ल, १९ य, ३ बिन्दुः.

---

प्रयुक्तं तदप्ययुक्तम् । नूनमाहुतयः सन्ति चतस्रो वा अधिका वा, परंतु उपनयनहोम इति नामधेयं न प्रत्येकमाहुतेः किंतु आहुतिसमुच्चयस्य साङ्गस्य । उपनयनाङ्गहोमानां इति भा । तत् किं उपनयनप्रधानहोमः आहिते्ऽग्नौ अङ्गहोमस्तु लौकिकेऽग्नौ इत्यभिप्रेतं श्रीमताम् ? । तस्मात् ' लौकिकेऽग्नौ उपनयनहोमः ' इति वक्तव्यम् ।

सू० १२ ( १ ) स्थपतिव इति मटि-वृ-ल-य ( २ ) वा स्याद् वि इति य । ( ३ ) पूर्व्यत्वात् इति य । एवं च ' स्थपतिवल्लौकिके वा स्याद् विद्याकर्मानुपूर्व्यत्वात् ' इति सूत्रं य ।

सू० १४ ( १ ) नात् सम इति य । ( २ ) एतत्सूत्रोत्तरं ' अकर्म च दारक्रियाऽऽधानोत्तरकाले ' इति अधिकं सूत्रं भाटि-वृ-ल । परंतु ' त्तरःकाले ' इति ल-पाठः, '०त्तरकालं ' इति भाटि-पाठ इति विशेषः । इदं भाष्यमूलेऽपि वर्तते परंतु चतुर्दशसूत्रव्याख्यानमेव तत् न सूत्रान्तरं इति भाति ।

सू० १५ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० १६ एतत्सूत्रोत्तरं ' अर्थादन्यदेवेति चेत् ' इत्यधिकं सूत्रं वृ-ल । भाष्यमूले ' अर्थादन्यदेवेदमिति चेत् ' इति पङ्क्तिरस्त्येव, परंतु न सूत्रमिव, ।

सू० १७ ( १ ) त्वादपु इति वृ ।

सू० १८ ( १ ) यद्यपि य-भिन्नेषु सर्वत्र उपयच्छेत् इति परस्मैपदप्रयोगो दृश्यते तथापि ' उपाद्यमः स्वकरणे ' इति व्याकरणात् आत्मनेपदप्रयोग एव शुद्धः, य-पुस्तकसंवादश्चात्रेति स एव सूत्रपाठेऽस्माभिः संगृहीतः ।

अधि० ३ अनाहितेऽग्नौ स्थपतीष्टिः इति म-सा-वि-भाट्ट-शा-बिन्दुः । अनाहिताग्नौ स्थपतीष्टिः इति वृ-ल । स्थपतीष्टेर्लौकिकाग्निषु अनुष्ठानं इति भा-शीर्षकमेव युक्तम् ।

अत्र विचार्यम् । लौकिकाग्निषु इति बहुवचनं भाष्यशीर्षके, इतरत्र तु अनाहितेऽग्नौ अनाहिताग्नौ इत्येकवचनम् । सिद्धान्तसूत्रे तावत् ' अपिवा लौकिकेऽग्नौ ' इत्येकवचनम् । सूत्रभाष्ये चानेकदा बहुवचनमेव, न च क्वाप्येकवचनम् । वि-शा-बिन्दुमूलग्रन्थेषु अग्निशब्दस्यैकवचनम् । भाट्ट-मूले ' यत्र क्व च होष्यन् स्यात् पञ्च भूसंस्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत् ' इति स्मृतिवचनेनाग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्निविधानात् तमेव तद्देशे स्थापयित्वा तेषु इष्टिः कार्या " इत्युक्तम् । तथाच मूलग्रन्थेष्वेव विरोधो भाति । वयं तु प्रतीमः भाट्टमूलानुसारेण लौकिकमग्निं गार्हपत्याहवनीयदक्षिणाग्निस्थानेषु स्थापयित्वा इष्टिं कुर्यात् इति । तथाच लौकिकाग्नेरेकत्वात् अग्नौ इत्येकवचनं एकस्यैवाग्नेस्त्रेधानिधानात् अग्निषु इति बहुवचनमपि संगच्छेतेति । स्थपतीष्टावपि दार्शिकाग्येव तन्त्रम् । अत एव सत्याषाढीये १५।४।२१ सूत्रे ' तत्र हविष्कृदाधावेति शूद्रस्य इत्यादि न विस्मर्तव्यं ' इति प्रयोगचन्द्रिकोक्तं संगच्छते ।

सू० २० ( १ ) र्थ्यादप इति टुप् ।

२१ आपिवा लौकिकेऽग्नौ स्यादाधानस्यासवशेषत्वात् । २३ वृ–ल, २० य.

अधि० ४, ५ मण्डनः.

२२ अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् । २४ वृ–ल, २१ य, ४ बिन्दुः.

अधि० ५, ६ मण्डनः.

२३ उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् । २५ वृ–ल, २२ य, ५ बिन्दुः.

२४ अहनि च कर्मसाकल्यम् । २६ वृ–ल, २३ य.

अधि० ६, ७ मण्डनः.

२५ इतरेषु तु पित्र्याणि । २७ वृ–ल, २४ य, ६ बिन्दुः.

अधि० ७, ८ मण्डनः, ६ भाट्ट–ल.

२६ याचूञाक्रयणमविद्यमाने लोकवत् । २८ वृ–ल, २५ य, ७ बिन्दुः.

२७ नियतं वाऽर्थवत्त्वात् स्यात् । २९ वृ–ल, २६ य.

अधि० ८, ९ मण्डनः, ७ वि–भाट्ट–ल,

२८ तथा भक्षप्रैषाऽऽच्छादनसंज्ञप्तहोमद्वेषम् । ३० वृ–ल, २७, य, ८ बिन्दुः.

अधि० ९, १० मण्डनः, ८ वि–भाट्ट–ल.

२९ अनर्थकं त्वनित्यं स्यात् । ३१ वृ–ल, २८ य, ९ बिन्दुः.

अधि० १०, ११ मण्डनः, ९ म–सा–वि–भाट्ट–ल ।

---

सू० २१ (१) के स्या इति टी। (२) नस्य स इति य ।

अधि० ४ अनाहितेऽग्नौ अवकीर्णिपश्वनुष्ठानं इति म–सा–वि–शा–वृ–ल । अनाहितेऽग्नौ अवकीर्णिपशुः इति भाट्ट । अनाहितेऽग्नौ अवकीर्णिपशोरनुष्ठानं इति बिन्दुः । लौकिकाग्नौ अवकीर्णिपशुयागानुष्ठानं इति भा । द्वितीयतृतीयचतुर्थाधिकरणशीर्षकेषु सर्वत्र अनहिताग्निशब्दस्य स्थाने लौकिकाग्निशब्दप्रयोग एव साधीयान् । त्रिष्वपि भा–शीर्षकेषु लौकिकाग्निशब्द एव प्रयुक्त इति युक्तमेव ।

सू० २२ कीर्णी पशु इति वृ-सूत्रे अशुद्धमेव मुद्रितम् । वृ-मूले तु नाशुद्धम् ।

अधि० ५ दैवकर्मणामुदगयनादिकालता इति म–सा–वि–शा–वृ–ल । उदगयनादिकालता दैवादिकर्मणां इति भाट्ट । दैवकर्मणामुदगयनकालता इति बिन्दुः । दैवकर्मणामुदगयनादिकालनियमः इति भा ।

अधि० ६ पित्र्यकर्मणोऽपरपक्षादिकालता इति म–सा–शा–वृ–ल । पित्र्यकर्मणामपरपक्षकालता इति बिन्दुः । पित्र्यकर्मणामपरपक्षादिकालनियमः इति भा । इदमधिकरणं पूर्वाधिकरण एवान्तर्भावितं भाट्ट–ल ।

सू० २५ इदं सूत्रं नैव मुद्रितं विस्तरे । परंतु विस्तरसंशोधकैः एतत्सूत्रीयपञ्चविंशोऽङ्कः परित्यक्त एव, उत्तरसूत्रे च षड्विंश एवाङ्को निवेशितः । तदिदं चमत्कारावहमेव ।

अधि० ७ ज्योतिष्टोमाङ्गयाचूञाक्रययोर्नित्यता इति भा–भिन्नेषु । ज्योतिष्टोमे भृतिवननसोमक्रययोर्नित्यता इति भा । अस्मिन्नप्यधिकरणे षष्ठमेवाङ्कं पुनर्मुद्रयित्वा उत्तराधिकरणेषु आपादसमाप्ति सप्ताद्या अङ्का मुद्रिता ल-पुस्तके ।

सू० २६ (१) नेऽलो इति बिन्दुः ।

सू० २७ (१) तं चार्थ इति टुप् ।

अधि० ८ ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यता इति म–सा–शा–ल–भा । अत्र अपिशब्दो व्यर्थ एव । यथा याचूञाक्रययोर्नित्यता तथा पयोव्रतादीनामपि इति हि पूर्वदृष्टान्तार्थोऽपि–शब्दः । स च शीर्षके न शोभते ।

अधि० ९ अपररात्रे व्रतस्यानियमः इति म–सा–भाट्ट–बिन्दु । अपररात्रे व्रतस्यानित्यता इति वि–शा–वृ–ल–भा ।

अधि० १० छागस्यैवाग्नीषोमीयपशुता इति भा–भिन्नेषु । अग्नीषोमीयपशुयागे छागवत एवाधिकारः

३० पशुचोदनायामनियमोऽविशेषात् । ३२ वृ–ल, २९ य, १० विन्दुः.

३१ छागो वा मन्त्रवर्णात् । ३३ वृ–ल, ३० य.

३२ न चोदनाविरोधात् । ३४ वृ–ल,३१ य.

३३ आर्षेयवदिति चेत् । ३५ वृ–ल, ३२ य.

३४ न तत्र ह्यचोदितत्वात् । ३६ वृ–ल, ३२ य.

३५ नियमो वैकार्थ्यं ह्यर्थभेदाद् भेदः पृथक्त्वेनाभिधानात् । ३७ वृ–ल,३३ य.

३६ अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् । ३८ वृ–ल, ३४य.

३७ न वा प्रयोगसमवायित्वात् । ३९ वृ, ३५ य.

३८ रूपाल्लिङ्गाच्च । ३९ ल, ३७ म–सा–वि–भाट्ट–शा–चौ.

३९ छागे न कर्माख्या रूपलिङ्गाभ्याम् । ४० वृ–ल, ३८ म–सा–वि–भाट्ट–शा–चौ, ३६ य.

४० रूपान्यत्वान्न जातिशब्दः स्यात् । ४१ वृ–ल, ३९ म–सा–वि–भाट्ट–शा–चौ, ३७ य.

४१ विकारो नौत्पत्तिकत्वात् । ४२ ल, ४० म–सा–वि–भाट्ट–शा–चौ, ३८ य.

४२ स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् । ४४ वृ, ४३ ल, ४१ म–सा–वि–भाट्ट–शा–चौ, ३९ य.

४३ जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् । ४५ वृ, ४४ ल, ४२ म–सा–वि–भाट्ट–शा–चौ, ४० य.

॥ न्यायाः पादे नूनमेकादशास्मिन् ॥

॥ इष्टि उपनयन् अवकीर्णि नचोदना चत्वारिंशत् ॥

॥ इति षष्ठाध्यायस्याष्टमः पादः अध्यायश्च समाप्तः ॥

---

इति भा । ननु छागवान् भवतु यजमानः तथापि अग्निषोमीयः पशुश्छाग एव कर्तव्य इत्यत्र किं नियामकम् ? यजमानो गृहवान् भवतीति किं गृहमेवालभ्यते । अग्नीषोमीयः पशुश्छाग एव नाश्वादिर्यः कोऽपि इति हि सिद्धान्तः ।

सू० ३३ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ३५ ( १ ) कार्थ्ये ह्य इति रत्न ।

सू० ३७ नास्तीदं सूत्रं म–सा–वि–भाट्ट–शा–ल–चौ । अत्र तन्त्ररत्नं " इदं सूत्रं भाष्यकारेणादृष्टत्वात् ' उत्सूत्रिका पक्षव्यावृत्तिः' इत्युक्तम् । वार्तिककारेण तु अनपभ्रष्टेषु पुस्तकेषु दृष्ट्वा पठितमिति वेदितव्यं " इति ।

सू० ३८ ( १ ) रूपालिङ्गाच्च इति शा–ल । नास्तीदं सूत्रं वृ–य ।

सू० ३९ ( १ ) छागेन इति तृतीयान्तं वृ–ल । गे क इति य ।

सू० ४१ ( १ ) विकार इति चेत् ४० मटि, ४२ वृ । नौत्पत्तिकत्वात् ४१ मटि, ४३ वृ " इति सूत्रद्वयम् । विकार इति चेन्नौत्पत्तिकत्वात् ३८ य । एकमेव सूत्रम् ।

सू ४२ ( १ ) तन्नैमि इति य ।

सू० ४३ ( १ ) ज्ञातेर्वा इति वि–शापाठो न युक्तः ।

*

# ॥ अथ सप्तमोऽध्यायः ॥

॥ अथ सप्तमाध्यायस्य प्रथमः पादः ॥

अधि० १.

१ श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे[1] यथाऽधिकारं[2] भावः स्यात्।

२ उत्पत्त्यर्थाविभागाद् वा सत्त्ववदैकधर्म्यं[2] स्यात्।

३ चोदनाशेषभावाद् वा तद्भेदाद्[2] व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात्।

४ सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत।

५ अविभागात्तु नैवं स्यात्।

६ व्यर्थत्वं च विप्रतिषिद्धम्।

७ उत्पत्तौ विध्यभावाद् वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात्।

८ यदि वाऽप्यभिधानवत्सामान्यात् सर्वधर्मः स्यात्।

९ अर्थस्य त्वविभक्तत्वात् तथा स्यादभिधानेषु, पूर्ववत्त्वात् प्रयोगस्य, कर्मणः शब्दभाव्यत्वाद्, विभागाच्छेषाणामप्रवृत्तिः स्यात्।

१० स्मृतिरिति चेत्।

११ न पूर्ववत्त्वात्। १० य.

१२ अर्थस्य शब्दभाव्यत्वात् प्रकरणं च निबन्धनाच्छब्दादेवान्यत्र भावः स्यात्। ११ य.

अधि० २.

---

अधि० १ प्रयाजादिधर्माणामपूर्वप्रयुक्तता इति भा-भिन्नेषु। प्रयाजादिधर्माणामुपदेशेन प्रकृतिमात्रार्थता इति भा।

सू० १ (१) मुखभेदे इति वि-लपाठः अशुद्धः। (२) कारभावः इति टी। कारभावात् इत्यन्तं सूत्रं य।

सू० २ (१) उत्पत्त्यार्था इति चौ-पाठो न ग्राह्यः। (२) ककर्म्यं इति टुप्-टी-रत्न।

सू० ३ (१) चोदनाभावशेषाद्वा इति य। (२) दादव्यति इति म-पाठो न शुद्धः।

सू० ४ (१) प्रतीयते इति य।

सू० ७ (१) कर्म भेदः इति भा-सूत्रे छित्त्वा मुद्रितं न युक्तम्। अन्यत्र तु ऐकपद्यमेव। धर्मभेदः इति य-पाठः।

सू० ८ (१) अभिधानवत्सामान्यात् इत्यत्र मतुब् वा वतिर्वा, पदभेदो वा पदैक्यं वेति विचारे वतिरेवायं पदैक्यं चेति सुबोधिनीवृत्तेर्निश्चिनुमः। सा चेत्थं "अभिधानं अपूर्वमिति नाम तद्वत्त्वेन सर्वापूर्वाणां तुल्यत्वात्" इति। भाष्यात्तु पदभेदोपि। (२) सर्वसिद्धिः इति वृ-सूत्रे पाठः। वृ-मूले तु सर्वधर्म इत्येव। सवधर्मः इति ल-पाठस्तु न ग्राह्यः।

सू० ९ (१) त्वाद् तद्विभा इति य।

सू० १० (१) स्मृतिरिति चेन्न इति दशमं, पूर्वत्वात् इत्येकादशं इति वृत्तौ सूत्रविभागः। चेदन्तमुत्तरेणैकं य।

सू० १२ (१) त्वात् प्रकरणनिब इति पाठो य-भिन्नेषु सर्वत्र भा-सूत्रेऽपि च। परंतु भा-मसापुस्तकेषु मूले "शब्दभाव्यत्वात् प्रतिप्रकरणं च निबन्धनाच्छब्दादेवान्यत्र भावः स्यात्" इति स्पष्ट एवाक्षरपाठः। इति तादृश एव सूत्रपाठो भाष्यसंमतः इत्येव स्वीकर्तुं युक्तम्। भा-संशोधकैस्तु अनवधानात्तथा न स्वीकृतमिति मन्यामहे। य-पाठे तु 'शब्दादन्यत्र' इत्येव लिखितं, तत्र एवकारो नास्तीति विशेषः।

अधि० २ इषौ श्येनीयविशेषधर्मातिदेशः इति वि-भाट्ट-शा-ल। इषौ श्येनीयवैशेषिकधर्मातिदेशः

१३ समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् । १२ य, २ बिन्दुः.

१४ श्येनस्येति चेत् । १३ य.

१५ नासंनिधानात् । १३ य.

१६ अपिवा यद्यपूर्वत्वादितरदधिकार्थे ज्योतिष्टोमिकाद् विधेस्तद्वाचकं समानं स्यात् । १४ य.

अधि० ३.

१७ पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् । १५ य, ३ बिन्दुः.

१८ सर्वस्य वैकशब्द्यात् । १६ य.

१९ लिङ्गदर्शनाच्च । १७ य.

२० विहिताम्नानान्नेति चेत् । १८ य.

२१ नेतरार्थत्वात् । १८ य.

अधि० ४.

२२ एककपालैन्द्राग्नौ च तद्वत् । १९ य, ४ बिन्दुः.

अधि० ५.

२३ एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्-द्व्यवदानस्य वचनात् । २० य, ५ बिन्दुः.

॥ पादे पञ्च नयाः स्मृताः ॥

॥ श्रुति अर्थस्य विंशतिः ॥

॥ इति सप्तमाध्यायस्य प्रथमः पादः ॥

---

इति भा । समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेषधर्मातिदेशः इति म-सा-बिन्दु-वृ ।

सू० १३ ( १ ) नेऽपू इति शा । अन्यत्र क्वापि अकारप्रश्लेषो नास्ति । सोमनाथेनापि पूर्ववत्त्वात् इत्येव व्याख्यातम् । तथा च अवग्रहमुद्रणं हस्तदोषः ।

सू० १४ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० १६ ( १ ) अपिवा पूर्व इति य । तत्र अकारप्रश्लेषः कर्तव्यः । यदि-शब्दो नास्ति य-पुस्तके । भाष्येऽपि नासौ दृश्यते । तन्त्ररत्ने तु " अपिवा यदि इति यदि अपिवा इति विपर्यस्य पक्षव्यावृत्तौ व्याख्येयं " इत्युक्तम् । तेन यदिशब्दस्य नास्त्युपयोग इत्येव सिध्यति ।

अधि० ३ एतद्-ब्राह्मणानीत्यादिना पञ्चहविष्षु सार्थवादविध्यतिदेशः इति म-सा । पञ्चहविष्षु सार्थवादविध्यतिदेशः इति वि-भाट्ट-शा-ल । पञ्चसु हविष्षु इति विशेषः शेषं म-सावत् बिन्दु-वृ । वारुणप्राघासिकपञ्चसंचरेषु वैश्वदेविकसार्थवादविधिकाण्डातिदेशः इति भा । अत्र वि-भाट्टादिशीर्षकमयुक्तं, पञ्चसंचरेषु इति वा पारिभाषिकः शब्दः प्रयोक्तव्यः, वारुणप्राघासिकेषु इति वा विशेषणं देयम् ।

सू० १८ ( १ ) स्य चैक/इति वृ । ( २ ) शब्दात् इति नौ ।

सू० २० ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० ४ अत्राधिकरणे महेशचन्द्रविद्यासागराभ्यां अनवधानात् पञ्चमोऽङ्क एव मुद्रितः उत्तराधिकरणे च षष्ठोऽङ्कः । अथ शीर्षकाणि । एतद्-ब्राह्मण इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशः इति म-सा-बिन्दु-वृ । एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशः इति वि-भाट्ट-शा-ल । साकमेधीयैन्द्राग्नैककपालयोः सार्थवादविधिकाण्डातिदेशः इति भा । भा-शीर्षकमेव युक्तं स्पष्टार्थत्वात् । इतरदयुक्तं न्यूनार्थकत्वात् ।

अधि० ५ साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्मातिदेशः इति भा । साकमेधे वारुणप्राघासिकैककपालातिदेशः इति म-सा । वि-भाट्टादौ इत्थमेव शीर्षकं परंतु वारुणप्रघासिक इति वि-शा-बिन्दु-वृ-ल, वरुणप्राघासिक इति भाट्ट । क्वचित् उभयपदवृद्धिः क्वचित् पूर्वपदवृद्धिः क्वचिच्च उत्तरपदवृद्धिः इत्यव्यवस्था संपादिता संपादकैः ।

सू० २३ ( १ ) विकप्र इति वृ-सूत्रे, वृ-मुलात्तु विकः प्र इत्येव पाठः सिध्यति । ( २ ) मापर्या॑वृ इति य । ( ३ ) नात्तद इति य ।

॥ अथ सप्तमाध्यायस्य द्वितीय पादः ॥

अधि० १.

१ साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद् यथाशिष्टम् ।

२ शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात् पृथग्भावात् क्रियायां ह्यभिसंबन्धः ।

३ स्वार्थे वा स्यात् प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ।

४ शब्दमात्रमिति चेत् ।

५ नौत्पत्तिकत्वात् । ४ य.

६ शास्त्रं चैवमनर्थकं स्यात् । ५ य.

७ स्वरस्येति चेत् । ६ य.

८ नार्थाभावाच्छ्रुतेरसंबन्धः । ६ य.

९ स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् । ७ य.

१० लिङ्गदर्शनाच्च । ८ य.

११ अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति । ९ य.

१२ शब्दानां चासामञ्जस्यम् । १० य.

१३ अपि तु कर्मशब्दः स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद् विकारो ह्यविशिष्टोऽन्यैः । ११ य.

१४ अद्रव्यं चापि दृश्यते । १२ य.

१५ तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासां न लौकिके विधानात् । १३ य.

१६ तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् । १४ य.

१७ योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते । १५ य.

१८ अयोनौ चापि दृश्यतेऽतथायोनि । १६ य.

१९ ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ।१७य.

२० स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके । १७य.

---

अत्र शाबरं भाष्यं " कथं ज्ञायते ? आग्रयणे सर्वहोमापरिवृत्तिदर्शनात् ( सूत्रप्रतीकमिदम् ) आग्रयणे द्यावापृथिवीयस्यैककपालस्य सर्वहोमं अपर्यावृत्तिं च दर्शयति । ··· हुतोहुतः पर्यावर्तते सा द्वितीया ( परिचक्षा ) इत्याज्यभागविधिपरे वाक्ये एककपालस्य सर्वहोमं अपर्यावृत्तिं च दर्शयति " इति । अत्र भाष्योदाहृतश्रुतौ 'पर्यावर्तते' इति शब्दप्रयोगात् सूत्रेऽपि अपर्यावृत्तिशब्दप्रयोग एव श्रेयान् ।

अधि० १ रथंतरादिशब्दस्य गानविशेषार्थता इति म–सा–बिन्दु–वृ । रथंतरादिशब्दानां गानविशेषार्थता इति वि–भाट्ट–शा–ल । रथंतरादिशब्दानां गीतिविशेषवाचित्वं इति भा ।

सू० २ ( १ ) यायां ह्य इति य ।

सू० ३ ( १ ) भावेनातिदि इति य । भावे नोप इति शा–पाठो न युक्तः ।

सू० ४ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ७ ( १ ) स्वरः स्यादिति इति य । ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० ८ ( १ ) तेर्न सं इति वृ ।

सू० १२ ( १ ञ्जस्यात् इति चौ ।

सू० १५ ( १ ) तस्य क्रि इति य । ( २ ) नार्थे वि इति चौ । ( ३ ) र्थोऽप्यासां न लौकिके वि इति य । र्थो ह्यासामलौकिको वि इति यभिन्नेषु सर्वत्र पाठः । परंतु " अर्थो ह्यासां रथंतरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः " इति भाष्यपङ्क्तिः, इति स एव पाठोऽस्माभिः स्वीकृतः ।

सू० १७ ( १ ) स्या च तु इति य । ( २ ) धीयते इति य ।

सू० १८ (१) अतथायोनि इति पदं नास्त्येव य ।

सू० १९ ( १ ) एकार्थे ना इति वृ । ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० २० ( १ ) था लोके इति वि–शा–ल ।

२१ शब्दानां च सामञ्जस्यम् । १८ य.

॥ एकमेवाधिकरणं पादेऽत्र परिकीर्तितम् ॥

॥ साम्नोऽपितु अष्टादश ॥

॥ इति सप्तमाध्यायस्य द्वितीयः पादः ॥

* * * *

॥ अथ सप्तमाध्यायस्य तृतीयः पादः ॥

अधि० १.

१ उक्तं क्रियाऽभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ।

२ अपूर्वे वाऽपि भागित्वात् ।

३ नाम्नस्त्वौत्पत्तिकत्वात् ।

४ प्रत्यक्षाद् गुणसंयोगात् क्रियाऽभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् ।

अधि० २.

५ अपिवा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् । २ बिन्दुः.

६ वाक्यशेषाच्च ।

अधि० ३.

७ विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः । ३ बिन्दुः.

८ षडहाद्वा तत्र हि चोदनाः ।

९ लिङ्गदर्शनाच्च ।

१० उत्पन्नाधिकारो ज्योतिष्टोमे । 

११ द्वयोर्विधिरिति चेत् ।

१२ न व्यर्थत्वात् सर्वशब्दस्य । ११ य.

अधि० ४.

---

अधि० १ अग्निहोत्रादिनाम्ना धर्मातिदेशः इति भा-भिन्नेषु । अग्निहोत्रादिनाम्नां धर्मातिदेशकत्वं इति भा ।

सू० १ ( १ ) उक्तं हि क्रि इति टुप् ।

सू० ३ ( १ ) नाम्नां त्वौत्प इति य ।

अधि० २ प्रायणीयेति नाम्ना धर्मानतिदेशः इति म-सा-बिन्दु-बृ । प्रायणीयनाम्ना धर्मानतिदेशः इति वि-भाट्ट शा-ल । प्रायणीयनाम्नः धर्मानतिदेशकत्वं इति भा ।

सू० ५ ( १ ) सर्वत्र क इति बृ-ल । सत्रकर्मणि इति भाट्ट-पाठो न ग्राह्यः । ( २ ) स्यात् पदं नास्ति चौ-बृमूले च ।

'वाक्यशेषाच' इत्यधिकं सूत्रं य पुस्तके । भाष्यमपि "वाक्यशेषश्चास्य एतमेवार्थमाह" इत्यादि विद्यत एव तेन भाष्यसंमतमेवेदं सूत्रमिति सिध्यति । तेन संगृहीतमस्माभिः सूत्रपाठे ।

अधि० ३ सर्वपृष्ठशब्देन षट्पृष्ठानामतिदेशः इति म-सा-वि-शा-ल । सर्वपृष्ठशब्देन षण्णां पृष्ठानामतिदेशः इति बिन्दु-बृ । विश्वजिति षाडहिकषट्पृष्ठातिदेशः इति भा । भा-शीर्षकं सर्वमधिकरणार्थं प्रायो व्यनक्ति । इतरत्तु शीर्षकं क्वातिदेशः कत्यानां चातिदेशः इति न व्यनक्ति । भा-शीर्षकेऽपि सर्वपृष्ठशब्देन इति पूरणमावश्यकमेव । एवं च विश्वजिति सर्वपृष्ठशब्देन षाडहिकषट्पृष्ठातिदेशः इति वक्तुं युक्तम् ।

सू० ७ ( १ ) जित्सर्वे इति शा ।

सू० ८ ( १ ) चोदना इत्येकवचनपाठः भाटि-टी-रत्न-य ।

सू० ९ ( १ ) लिङ्गाच्च इत्येव पाठः बृ-य-भिन्नेषु सर्वत्र । परंतु 'लिङ्गं चैतमर्थं दर्शयति' इति भाष्यात् लिङ्गदर्शनाच्च इत्येव पाठो निश्चीयते ।

सू० १० ( १ ) ष्टोमे इति य, अन्यत्र तु ष्टोमः इत्येव । सुबोधिन्यां वृत्तौ उत्पन्नाधिकारशब्दः ज्योतिष्टोमपदस्य विशेषणत्वेन व्याख्यातः । भाष्ये तु पृष्ठपदस्य विशेषणत्वेन । सूत्रानुसारादपि पृष्ठशब्दस्यैव उत्पन्नाधिकार इति पदं विशेषणं सिध्यति । तेन ज्योतिष्टोमे इति सप्तम्यन्त एव पाठः साधीयान् ।

सू० ११ ( १ ) द्वयोरिति इति बृ-य । ( २ ) चेदन्तमुत्तरेणैकं य ।

अधि० ४ अवभृथनाम्ना सौमिकधर्मातिदेशः इति भा-भिन्नेषु । अवभृथनाम्नः सौमिकावभृथधर्मातिदेशकत्वं इति भा । भा-शीर्षकमेव तु युक्तं नेतरत् ।

१३ तथाऽवभृथः सोमात् । १२ य,४ बिन्दुः.

१४ प्रकृतेरिति चेत् । १३ य.

१५ न भक्तित्वात् । १३ य.

१६ लिङ्गदर्शनाच्च । १४ य.

अधि० ५.

१७ द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ।

१५ य, ५ बिन्दुः.

अधि० ६, ५ भाट्ट.

१८ गुणविधिस्तु न गृह्णीयात् समत्वात् ।

१६ य, ६ बिन्दुः.

अधि० ७, ६ भाट्ट.

१९ निर्मन्थ्यादिषु चैवम् । १७ य,७ बिन्दुः.

अधि० ८, ७ भाट्ट.

---

सू० १४ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० ५ वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वं इति म-सा । वारुणप्रघासिक इति भेदेन तदेव शीर्षकं म-सा भिन्नेषु । सप्तमप्रथमस्य पञ्चमाधिकरणात् अत्र ठक्प्रत्ययनिमित्तकवृद्धिकरणे वैपरीत्यं संजातं म-साभिन्नेषु ।

सू० १७ इदं सूत्रं भाट्टदीपिकायां पूर्वाधिकरणे एव समावेशितम् । ( १ ) द्रव्यातिदे इति शा-पाठो न युक्तः आदेशातिदेशयोर्भेदात् , प्रकृते चातिदेशाभावात् । ( २ )द्रव्यश्रु इति भाट्ट-पाठोऽपि न युक्तः । द्रव्यं श्रु इति शा-य । अस्मिन् पाठे तद् द्रव्यं इति पदभेदः स्वीकार्यः । भाष्ये तु पदैक्यं, बहुव्रीहिणा अवभृथपदस्य विशेषणं चेति स्वीकृतम् ।

अधि० ६ भाट्टे तु पञ्चमेऽधिकरणे एवान्तर्भावितमिदम् ।

वैष्णवशब्दात् आतिथ्ये धर्मानतिदेशः इति म-सा-वि-भाट्ट-ल । वैष्णवशब्दादातिथ्यधर्मानतिदेशः इति शा । वैष्णवशब्दात् आतिथ्यायां धर्मानतिदेशः इति बिन्दु-न्नृ । आतिथ्यायामिष्टौ इत्यर्थः । आतिथ्यं हविः इति विशेषणभावस्वीकारेण आतिथ्यपदमपि इष्टौ इत्यर्थे स्वीकर्तुं शक्यम् । वैष्णवशब्दस्य सौमिकातिथ्येष्टिधर्मानतिदेशकत्वं इति भा ।

अत्र विचार्यते । वैष्णवशब्दः सोमगतातिथ्येष्टौ धर्मान्नातिदिशति इति भा-शाभिन्नशीर्षकार्थः । तथाच अतिथ्येष्टिगतो वैष्णवशब्दः राजसूयगतवैष्णवत्रिकपालधर्मान् आतिथ्ये हविषि नातिदिशति इति भा-शाभिन्नशीर्षकं दर्शयति । अथ वैष्णवशब्दः आतिथ्येष्टिधर्मान् नातिदिशति इति भा-शाशीर्षकार्थः । तथाच राजसूयस्थपूर्वत्रिकपालगतवैष्णवशब्दः सौमिकातिथ्येष्टिधर्मान् त्रिकपाले नातिदिशति इति भा-शाशीर्षकं दर्शयति । तेन महान् संघर्षः समुत्पद्यते । अथ भाष्ये " योऽयं त्रिसंयुक्ते वैष्णवस्त्रिकपाल इति वैष्णवशब्दः, अयं आतिथ्यधर्माणां ग्राहको नेति " इति संशयमुपन्यस्य " धर्माणा ग्राहकः " इति पूर्वपक्षयित्वा " नायं ग्राहकः" इति सिद्धान्तितम् । एवं च त्रिसंयुक्तगत-वैष्णवशब्दः सौमिकातिथ्याधर्मान् न गृह्णाति इति भाष्यस्य श्रौतोऽर्थः । विस्तरादिसर्वमूलग्रन्थप्रतिपाद्योर्थोऽपि राजसूयगतो वैष्णवशब्दः आतिथ्याधर्मान् नातिदिशति इत्येव शब्दान्तरेण भाष्यार्थेन समान एव । एवं सति म-सा-वि-भाट्ट-बिन्दु-न्नृ-लसंपादकैः सिद्धान्तविरुद्धमेव शीर्षकं संपादितमिति महान् प्रमादः । भा-शाशीर्षकं तु युक्तमेव ।

अधि० ७ निर्मन्थ्यादिशब्दैर्धर्मानतिदेशः इति भा-भिन्नेषु । निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वं इति भा ।

अधि० ८ द्वयोः प्रणयन्तीत्यनेन सौमिकधर्मानतिदेशः इति म-सा-बिन्दु-न्नृ । प्रणयनशब्देन सौमिकधर्मानतिदेशः इति वि-भाट्ट-शा-ल । प्रणयनशब्दस्य सौमिकप्रणयनधर्मानतिदेशकत्वं इति भा । अत्रान्तिमशीर्षकद्वये क्वत्यः प्रणयनशब्द इति न प्रदर्शितमिति अर्थन्यूनता । चातुर्मास्येषु इति वक्तव्यम् ।

२० सौमिकं तु प्रणयनमवाच्यं हीतरत् । १८ य, ८ बिन्दुः.

२१ उत्तरवेदिप्रतिषेधश्च तद्वत् ।१९ य.

२२ प्राकृतं वाऽनामत्वात् । २० य.

२३ परिसंख्यार्थं श्रवणं गुणार्थमर्थवादे वा । २१ य. .

अधि० ९.

२४ प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् । २२ य, ९ बिन्दुः.

२५ मध्यमयोर्वा गत्यर्थवादात् । २३ य.

२६ औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः । २४ य.

अधि० १०, ८ भाट्ट-टुप्.

---

सू० २० (१) प्रणयनं तु सौमिकमवाच्यं हीतरत् इति वर्णपरिपाटी म-सा-वि-भाट्ट-वृ-ल-भाटि । यद्यपि उभयत्र तान्येव पदानि तथापि उद्देश्यविधेयविपर्यासो भवति पदपरिपाटीभेदे । प्रणयनमेव तु उद्देश्यमत्र इति म-सा-दिपाठ एव श्रेयान् । भाष्यं तु न तथा ।

अधि० ९ भाष्यमतेनेदं पृथगधिकरणं, वार्तिकमतेन तु सौमिकं तु इत्यादिभिः सप्तभिः सूत्रैरेकमधिकरणम् । भाट्टदीपिकायां भाष्यमतमेव समर्थितं, वार्तिकमतमपि च व्याख्यातम् । तत्संपादकैश्च वार्तिकानुसारेण सप्तापि सूत्राणि अष्टमाधिकरणे एव समावेशितानि । मीमांसानुक्रमणिकायां तु अष्टमेऽधिकरणे १९-२० इति द्वावेव सूत्राङ्कौ प्रदाय नवमेऽधिकरणे २१-२५ इति सूत्राङ्का मुद्रितास्तदशुद्धम् । १९-२२ इत्यष्टमे, २३-२५ इति तु नवमे मुद्रणं युक्तम्

द्वयोः प्रणयन्तीत्यनेन मध्यमयोर्द्वयोः प्रणयनं मध्यमयोः प्रणयन्तीत्यनेन मध्यमयोर्द्वयोः प्रणयनं इति म-सा-बिन्दु-वृ । मध्यमयोर्द्वयोरेव प्रणयनं इति वि-शा-लशीर्षकमतिशिथिलं, क्वचये मध्यमे इत्यप्रतिपादनात् । मध्यमयोरेव पर्वणोः प्रणयननियमः इति भा । सर्वेष्वेव शीर्षकेषु पूर्वाधिकरण इवात्राधिकरणेऽपि चातुर्मास्यपदनिवेश आवश्यकः । अधिकरणार्थसूचकत्वाच्छीर्षकाणाम् ।

सू० २४ (१) दिविप्र इति चौपाठोऽशुद्धः ।

सू० २६ (१) को ना इत्यवग्रहशून्यश्छेदवाँश्च पाठः म-सा । स च ‘ अनारभ्य कं चित् पर्वविशेषं ’ इति मूलविरुद्धः ।

अधि० १० स्वरसामादिशब्देन धर्मातिदेशः इति भा-बिन्दु-भिन्नेषु । स्वरसामादिशब्दानां धर्मातिदेशकत्वं इति भा-बिन्दुः ।

अत्र स्वरसामैकसूत्रोत्तरं ‘ चोदनासामान्याद्वा ’ इति सूत्रं वृ-यपुस्तकयोर्नास्ति । इतरत्र तु सर्वत्र विद्यत एव । भाष्येऽपि आनन्दाश्रमीये तत्सूत्रं तदीयभाष्यत्वेन च कियाँश्चिद्ग्रन्थोपि मुद्रितः । तच्च सर्वं षड्विंशसूत्रीयभाष्येण च कियताचित् सह प्रदर्श्यतेऽस्माभिर्यथामुद्रितम् । “आह । लिङ्गमपदिष्टम् । कुतः प्राप्तिरिति । उच्यते । लक्षणया प्राप्तिः, लिङ्गात्तु लक्षणापरिग्रहः ॥ २६ ॥ चोदनासामान्याद्वा ॥२७॥ स्वरसामत्वसासामान्यात् , एककपालत्वसामान्यात्, आमिक्षासामान्याद्वा, यस्य लिङ्गमर्थसंयोगादित्यनेन प्राप्तिरिति ॥ २७ ॥ ” एवमेव म-सापुस्तकयोरपि । परंतु सूत्रीयभाष्यत्वेन मुद्रितो ग्रन्थो न कथं चिदपि सूत्रार्थेन संबध्यते । लिङ्गात्तु लक्षणापरिग्रहः स्वरसामत्वसामान्यात् इत्यादिरेकः सन् ग्रन्थः संशोधकैर्मध्य एव च्छेदितः । तदिदं सर्वमनवधानमूलकमिति मन्यामहे । नेदं सूत्रं भाष्येण व्याख्यातमिति च । वृ- यग्रन्थौ चात्रानुकूलौ । तथापि यस्य लिङ्गमर्थसंयोगात् इत्यत्र ( ८।१।२ ) वर्तमानेन ‘ चोदकवाक्यमनुमापयता लिङ्गेन ’ इति विस्तरग्रन्थेन ‘ का पुनश्चोदना लिङ्गनिमित्तस्यातिदेशस्य आष्टमिकस्य नामधेयप्रस्तावसंगतिः ’ इति तन्त्ररत्नेन च स्वरसामसूत्रवार्तिकमवतारयता ज्ञापकेन ‘ चोदनासामान्याद्वा ’ इति सूत्रं ज्ञापितमिति शङ्का संभवतीति । तेनेयं भाष्यपङ्क्तिः कदाचित् स्यादिति स्वीकार्यम् ।

२७ स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् । २५ य, १० बिन्दुः.

अधि० ११, ९ भाट्ट-टुप्.

२८ कर्मजे कर्म यूपवत् । २७ वृ, २६ य, ११ बिन्दुः.

२९ सिद्धरूपं वाऽशेषभूतत्वात् । २८ वृ, २७ य.

अधि० १२, १० भाट्ट-टुप्.

३० विशये लौकिकः स्यात् सर्वार्थत्वात् । २९ वृ, २८ य, १२ बिन्दुः.

३१ न वैदिकमर्थनिर्देशात् । ३० वृ, २९ य.

३२ तथोत्पत्तिरितरेषां समत्वात् । ३१ वृ, ३० य.

अधि० १३, ११ भाट्ट-टुप्.

३३ संस्कृतं स्यात् तच्छब्दत्वात् । ३२ वृ, ३१ य, १३ बिन्दुः.

३४ भक्त्या वाऽयज्ञशेषत्वाद् गुणानामभिधानत्वात् । ३३ वृ, ३२ य.

अधि० १४, १२ भाट्ट-टुप्.

---

अधि० ११ वासो ददाति इत्यादौ वासआदिशब्दानामाकृतिनिमित्तता इति म-सा-वि-शा । वासआदिशब्दानामाकृतिनिमित्तता इति भाट्ट-वृ-ल। वासआदिशब्दानां जातिनिमित्तकत्वं इति बिन्दुः। अनोवासःप्रभृतिशब्दानामाकृतिनिमित्तता इति भा। अन्तिमं शीर्षकत्रयं असंदिग्धमपि व्याप्नोतीति न साधीयः। अनो ददाति वासो ददाति इत्यादौ क्वचिदेव निर्णयावश्यकता न सर्वत्रेति।

सू० २८ (१) कर्मयूप इति संधाय बिन्दौ मुद्रणमशुद्धम् ।

सू० २९ (१) सिद्धशब्दो नास्ति य-भिन्ने। य-पुस्तके तु सिद्धरूपं इति, भाष्यमूलं च ' यदैवं तदा सिद्धं रूपं देयम् ' इति । म-सापुस्तकयोस्तु " सिद्ध-' रूपं ' देयं " इति कथमपि मुद्रितम् । ' सिद्धरूपं ' इत्येव तु मुद्रणं युक्तम् । सर्वथापि य-पाठ एव भाष्यसंमत इति मन्यामहे ।

अधि० १२ गर्गत्रिरात्रे लौकिकेऽग्नौ उपनिधानं इति म-सा-वि-भाट्ट-शा-ल। अत्र अग्नौ इति सप्तमी अयुक्ता अग्नेरेवोपनिधानस्य वक्तव्यत्वात् । अग्निसमीपे अग्निमध्ये वा कस्य चिदन्योपनिधानं इत्यस्यावक्तव्यत्वात् । गर्गत्रिरात्रे लौकिकाग्नेरुपनिधानं इति बिन्दु-वृ। गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वं इति भा ।

सू० ३० (१) शयेऽलौ इति वृ-टुप्। (२) किकं स्या इति बिन्दु-टी-रत्न । इदमुत्तरं चेति सूत्रद्वयमेकसूत्रत्वेन बिन्दौ मुद्रितं एक एव च द्वादशोऽङ्कः प्रदत्तः। तन्त्ररत्नलिखितेऽप्येवम् । तत्र हेतुं न विद्मः।

अधि० १३ उपशयो यूपो भवतीत्यादौ यूपशब्दस्य संस्काराप्रयोजकत्वं इति म-सा-वृ । यूपशब्दस्य संस्काराप्रयोजकता इति विस्तरे अधिकरणारम्भे, शास्त्रदीपिकायां च अधिकरणारम्भे अनुक्रमणिकायामपि तथैव, ल पुस्तके च । विस्तरे अनुक्रमणिकायां तु संस्काराप्रयोजकता इत्येव । यूपशब्दस्य संस्काराप्रयोजकता इति भाट्ट। उपशयो यूप इत्यादौ यूपशब्दस्य संस्काराप्रयोज्यत्वं इति बिन्दु-शीर्षकं संपादकैर्वृथैव विपरिवर्त्य अशुद्धतैव संपादिता । उपशये यूपशब्दस्य संस्कारानतिदेशकत्वं इति भा ।

सू० ३४ (१) धानात इति वृ-सूत्रं धानत्वात् इत्येव तु मूले । धानात् इति य ।

अधि० १४ पृष्ठैरुपतिष्ठते इत्यादौ पृष्ठशब्दस्य ऋग्द्रव्यवाचिता इति म-सा-बिन्दु-वृ । पृष्ठशब्दस्यर्ग्देववाचित्वं इति विस्तरे अधिकरणादौ, शास्त्रदीपिकायां अधिकरणादावनुक्रमणिकायां च । कोऽयं ऋग् देवो नाम? विस्तरेऽनुक्रमणिकायां तु मसावत्। ऋग्देव इत्यत्र । ऋग्वेद इति तत्संपादकानां विवक्षितं स्यात् कदाचित् । पृष्ठशब्दस्य मन्त्रवाचिता इति भाट्ट। पृष्ठशब्दस्य ऋग्वेदवाचिता इति ल। पृष्ठशब्दस्य ऋङ्मन्त्रवाचित्वं इति भा ।

३५ कर्मणः पृष्ठशब्दः स्यात् तथाभूतोपदेशात् ।३४ वृ, ३३ य, १४ बिन्दुः.

३६ अभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यात् । ३५ वृ, ३४ य.

॥ पादे तृतीये खलु सप्तमस्य न्याया इहोक्तास्तु चतुर्दशैव ॥

॥ उक्तं द्वयोः परि संस्कृतं चतुस्त्रिंशत् ॥

॥ इति सप्तमाध्यायस्य तृतीयः पादः ॥

* * * *

॥ अथ सप्तमाध्यायस्य चतुर्थः पादः ॥

अधि० १.

१ इतिकर्तव्यता[1]ऽविधेर्यजतेः पूर्ववत्[2]त्वम् ।

अधि० २.

२ स लौकिकः स्याद् दृष्टप्रवृत्तित्वात् ।

३ वचनात्तु ततोऽन्यत्वम् ।

४ लिङ्गेन वा नियम्येत[1] लिङ्गस्य तद्गुणत्वात् ।

५ अपिवा[1]ऽन्यायपूर्वत्वा[2]द् यत्रानुवादवचनानि स्युः ।

६ मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ।

७ भागित्वात्तु नियम्येत, गुणानामभिधानत्वात्, संबन्धादभिधानवद्, यथा धेनुः किशोरेण ।

८ उत्पत्तीनां समत्वा[1]द्वा यथाऽधिकारं भावः स्यात् ।

९ उत्पत्ति[1]ः शेषवचनं च विप्रतिषिद्धमेकस्मिन् ।

१० विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत[1] तथाहि लिङ्गदर्शनम् ।

११ लिङ्ग[1]हेतुत्वादलिङ्गे लौकिकं स्यात् ।

१२ लिङ्गस्य पूर्ववत्त्वा[1]च्चोदनाशब्दसामान्यादेकेनापि निरू[2]प्येत यथा स्थाली[3]पुलाकेन ।

---

अधि० १ सौर्ये चरौ इतिकर्तव्यतावत्त्वं इति भा-शा भिन्नेषु । सौर्ये चरौ इतिकर्तव्यता इति शा । अविहितेतिकर्तव्यताकेषु सौर्यादिषु इतिकर्तव्यताया अतिदेशः इति भा ।

सू० १ ( १ ) तावि इति अवग्रहशून्यमेव सर्वत्र मुद्रणम् । भा-वृमूले तु 'इतिकर्तव्यतायाः अविधेः' इत्येव व्याख्यातम् । ( २ ) वत्वं इति शा-पाठो न युक्तः ।

अत्र द्वादशभिः सूत्रैरेकमेवाधिकरणं स्वीकृतं भाट्ट-शा-बिन्दु-वृत्तिभिः । एवं तन्मतेनास्मिन् पादे अधिकरणद्वयमेव । इतरमतेन तु अधिकरणत्रयम् ।

अधि० २ सौर्ये चरौ वैदिकेतिकर्तव्यता इति म-सा-वि-ल । सौर्ये चर्वादौ वैदिक्या एवेतिकर्तव्यताया अतिदेशः इति भा ।

सू० ४ ( १ ) म्येत तद्गु इति वृ-सूत्रे । वृ-मूले तु लिङ्गस्येति पदं वर्तत एव ।

सू० ५ ( १ ) अपिवा न्या इति अवग्रहशून्यता भाट्टे, सा चायुक्ता । ( २ ) त्वान्नित्यानु इति रत्न ।

सू० ८ ( १ ) त्वाद्यथा इति वृ ।

सू० ९ ( १ ) उत्पत्तिशेष इति विसर्गशून्यः पाठो य-भिन्नेषु सर्वत्र । भाष्यं तु 'एकस्मिन् शब्दे प्रधानस्योत्पत्तिः अङ्गानां च वचनं न संभवति' इति, वृत्तिश्च 'प्रधानस्योत्पत्तिः शेषाणामङ्गानां वचनं विधिश्च विप्रतिषिद्धं इति' तथाच उत्पत्तिः इति सविसर्गपाठ एव सिध्यति । सौत्रश्चकारश्च अन्यथा व्यर्थो भवति ।

सू० १० ( १ ) प्रवर्तते इति वृ-सूत्रे, वृ-मूले तु प्रवर्तेत इति ।

सू० ११ ( १ ) लिङ्गस्य हे इति वृ ।

सू० १२ ( १ ) त्वाद्वा चोद इति य । ( २ ) निरुच्येत इति य । ( ३ ) स्थालीपु इति संधाय मुद्रितं सर्वत्रैव । सूत्रस्वारस्यात्तु स्थालीपदं भिन्नमेव

अधि० ३, २ भाट्ट-शा-बिन्दु-वृ।

१३ द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात् तदाख्यं स्यादेकाहवत्। २ बिन्दुः.

१४ लिङ्गाच्च।

१५ न वा प्रत्यक्षत्वादधिकानामशब्दत्वम्।

१६ लिङ्गं संघातधर्मः स्यात् तदर्थापत्तेर्द्रव्यवत्।

१७ न वाऽर्थधर्मत्वात् संघातस्य गुणत्वात्।

१८ अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात्।

१९ प्रवृत्त्या नियतस्य लिङ्गदर्शनम्। १८य.

२० विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात्।

॥ पादेऽधिकरणत्रयम् ॥

॥ इति लिङ्गहेतुत्वादष्टादश ॥

॥ इति सप्तमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

---

मन्यामहे। यथा एकेनापि उपमृद्यमानेन सता पुलाकेन सर्वा स्थाली सिद्धेति निरूप्यते तथा एकेनापि लिङ्गेन तुल्यन्यायाः सर्वे धर्मवत्त्वेन निरूप्यन्ते इति हि सूत्रार्थः। तथाच संधाय मुद्रणमशुद्धमेव।

अधि ० ३ गवामयने ऐकाहिकेतिकर्तव्यतानुष्ठानं इति म-सा-वि-शा-बिन्दु-वृ-ल। गवामयने ऐकाहिकेतिकर्तव्यता इति भाट्ट। शीर्षकद्वयमिदमतिव्यापकं सर्वस्मिन् गवामयने ऐकाहिकेतिकर्तव्यताया अभावात्। गावामयनिकज्योतिरादिषु एकाहकाण्डपठितज्योतिरादिधर्मानुष्ठानं इति भा।

सू० १५ (१) न वा प्रत्यक्षत्वात् क्त्व इति वृ। भाष्ये तु प्रत्यक्षत्वात् इति पदं पठितं व्याख्यातं च। क्त्वभिधानात् इति पदं तु न पठितं नापि साक्षात् व्याख्यातं, तेन न वा प्रत्यक्षत्वादधिकानामशब्दत्वं इत्येव सूत्रं भाष्यात् सिध्यति।

सू० १६ (१) स्यादर्था इति वृ-सूत्रे, वृ-मूले तु स्यात्तदर्था इत्येव।

सू० १७ (१) धर्मः स्यात् सं इति वृ-सूत्रे, वृ-मूले तु यथाश्रुतम्।

सू० १८ (१) नास्तीदं सूत्रं य।

सू० १९ (१) त्त्या तु नि इति य।

सू० २० नास्तीदं सूत्रं य। (१) दर्शनं च शि इति वृ-सूत्रे, वृ-मूले तु च-शब्दो न दृश्यते।

# ॥ अथ अष्टमोऽध्यायः ॥

॥ अथाष्टमाध्यायस्य प्रथमः पादः ॥

अधि० १.

१ अथ विशेषलक्षणम् ।

अधि० २.

२ यस्य लिङ्गमर्थसंयोगादभिधानवत् ।

अधि० ३, २ भाट्ट.

३ प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ।

४ लिङ्गदर्शनाच्च ।

५ कृत्स्नविधानाद्वाऽपूर्वत्वम् ।

६ स्रुगभिघारणाभावस्य नित्यानुवादात् ।

७ विधिरिति चेत् ।

८ न वाक्यशेषत्वात् । ७ य.

९ शङ्कते चानुपोषणात् । ८ य.

१० दर्शनमैष्टिकानां स्यात् । ९ य.

अधि० ४, ३ भाट्ट.

११ इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् । १० य, ४ बिन्दुः.

अधि० ५.

१२ पशौ च लिङ्गदर्शनात् । ११य, ५बिन्दुः.

अधि० ६.

१३ दैक्षस्य चेतरेषु । १२ य, ६ बिन्दुः.

अधि० ७.

१४ ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् । १३ य, ७ बिन्दुः.

---

अधि० १ सूत्रद्वयेनैकमेवाधिकरणं भाट्ट । प्रतिज्ञा इति म-सा । अतिस्थूलमिदं, कस्य प्रतिज्ञेत्यज्ञानात् । एतादृशस्यैव शीर्षकस्य प्रथमादौ विद्यमानत्वाच्च । विशेषचिन्ता इति वि-शा-लशीर्षकमपि स्थूलमेव । विशेषातिदेशचिन्ता इति वक्तव्यम् । विशेषकर्मणो धर्मातिदेशः इति भाट्ट । विशेषातिदेशप्रतिज्ञा इति बिन्दु-वृ-भा ।

अधि० २ विशेषकर्मणो धर्मातिदेशः इति म-सा-वि-शा-बिन्दु-वृ-ल । सादृश्यविशेषेण नियतप्रकृतितो धर्मातिदेशः इति भा ।

अधि० ३ सोमे ऐष्टिकधर्मानतिदेशः इति सर्वत्र । अत्र विस्तरे वर्णकद्वयम् । तत्र द्वितीये इष्टयग्निहोत्रसोमा मूलप्रकृतयः इति साधितम् ।

सू० ३ (१) प्रवृत्तित्वा इति भाटि-म-सा-वि-भाट्ट शा-ल-चौ । सूत्र इव भाष्येपि पाठोयम् । परंतु नायं साधुः । (२) मेऽपि प्र इति य ।

सू० ५ (१) नादपू इति टी । नात् त्वपू इति चौ-य ।

सू० ७ (१) चेदन्तमुत्तरेणैकं य ।

अधि० ४ ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशः इति भा-भिन्नेषु । ऐन्द्राग्नादिषु दार्शपूर्णमासिकधर्मातिदेशः इति भा ।

अधि० ५ अग्नीषोमीयपशौ दार्शपौर्णमासिकधर्मातिदेशः इति म-सा-बिन्दुः । अग्नीषोमीयपशौ दार्शपूर्णमासिकधर्मातिदेशः इति वि-शा-ल । अग्नीषोमीयपशौ दार्शिकधर्मातिदेशः इति वृ । अग्नीषोमीये पशौ दार्शपूर्णमासिकधर्मातिदेशः इति भा ।

अधि० ६ सवनीयादिपशौ अग्नीषोमीयधर्मातिदेशः इति म-सा-वृ । सवनीयपशौ अग्नीषोमीयधर्मातिदेशः इति वि-शा-ल । पश्वन्तरेषु अग्नीषोमीयधर्मातिदेशः इति बिन्दुः ।

अधि० ७ (१) ऐकादशिनपशौ सवनधर्मातिदेशः इति म-सा-बिन्दुः । ऐकादशिनपशौ समानधर्मातिदेशः इति वि-शा-ल । अनयोः शीर्षकयोरर्थं संपादका अपि जानन्ति नवेति संशय एवास्माकम् । ऐकादशिनेषु सवनधर्मातिदेशः इति वृ-शीर्षकमपि तथैव । ऐकादशिनेषु पशुषु सवनीयपशुधर्मातिदेशः इति भा ।

सू० १४ (१) न्यद इति वृ-सूत्रे, वृ-मूले तु न्यस्य द इति ।

अधि० ८.

१५ तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशुयूपदर्शनात्। १४ य, ८ बिन्दुः.

अधि० ९.

१६ अव्यक्तासु तु सोमस्य। १५ य, ९ बिन्दुः.

अधि० १०.

१७ गणेषु द्वादशाहस्य। १६ य, १० बिन्दुः.

अधि० ११.

१८ गव्यस्य च तदादिषु। १७ य, ११ बिन्दुः.

अधि० १२.

१९ निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात्। १८ य, १२ बिन्दुः.

अधि० १३, ४ भाट्ट.

२० कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात्। १९ य, १३ बिन्दुः.

२१ प्रवृत्तौ चापि तादर्थ्यात्। २० य.

२२ अश्रुतित्वाच्च। २१ य.

अधि० १४, ५ भाट्ट

२३ गुणकामेष्वाश्रितत्वात् प्रवृत्तिः स्यात्। २२ य, १४ बिन्दुः.

२४ निवृत्तिर्वा कर्मभेदात्। २३ य.

२५ अपिवाऽतद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिः स्यात्। २४ य.

अधि० १५, ६ भाट्ट.

२६ एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात्। २५ य, १५ बिन्दुः.

अधि० १६, ७ भाट्ट.

२७ लिङ्गसाधारण्याद् विकल्पः स्यात्। २६ य, १६ बिन्दुः.

२८ ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद् विकारो हि। २७ य.

---

अधि० ८ पशुगणेषु ऐकादशिनधर्मातिदेशः इति सर्वे।

सू० १५ (१) अत्र समास एव युक्तः।

अधि० ९ अव्यक्तयजतौ सौमिकधर्मातिदेशः इति म-सा-बिन्दुः, विस्तरानुक्रमण्यां च। अव्यक्तपशौ सौमिकधर्मातिदेशः इति वि-शा-लशीर्षकं तु उत्स्वप्नायितमेव। अव्यक्तयागे सौमिकधर्मातिदेशः इति वृ। अव्यक्तयागेषूद्भिदादिषु सौमिकधर्मातिदेशः इति भा।

अधि० १० अहर्गणेषु द्वादशाहिकधर्मातिदेशः इति सर्वे।

अधि० ११ संवत्सरसत्रेषु गवामयनिकधर्मातिदेशः इति म-सा-वि-शा-ल। संवत्सरसत्रेषु गावामयनिकधर्मातिदेशः इति बिन्दु-भा। संवत्सरसत्रेषु गवामयनधर्मातिदेशः इति वृ।

सू० १८ (१) स्य चैत इति वृ।

अधि० १२ निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशः इति सर्वे।

सू० १९ (१) ना पू इति बिन्दुः। नां तु पू इति य-रत्न।

अधि० १३ पञ्चमादिद्वादशान्तान्यधिकरणानि भाष्यादिस्थानि भाट्टे तृतीये एवान्तर्भावितानि। अथेदं भाष्यस्थं त्रयोदशं, भाट्टे चतुर्थम्।

शीर्षकं तु फलादीनामनतिदेश इति सर्वत्र।

सू० २० (१) वृत्तत्वा इति शा।

सू० २१ (१) प्रवृत्तावपि इति वृ।

अधि० १४ गुणकामानां गोदोहनादीनामनतिदेशः इति म-सा-वि-भाट्ट-शा। अत्र क्वेति नोक्तमिति न्यूनता। गुणकामतो गोदोहनादीनामनतिदेशः इति बिन्दुः। गुणकामतः इत्यस्यार्थो दुर्ज्ञेयः क्वेति च नोक्तम्। गुणकामानामप्यनतिदेशः इति वृ। अपि-शब्दो व्यर्थः। क्वेति च नोक्तमेव। गुणकामानां गोदोहनादीनामतिदेशः इति लशीर्षकं तु विरुद्धमेव। काम्यगुणानां विकृतावनतिदेशः इति भा।

सू० २८ (१) ऐकार्थ्याद्विनि इति वृ।

सू० २०

२९ अश्रुतत्वान्नेति चेत्। २८ य.
३० स्याल्लिङ्गभावात्। २८ य.
३१ तथा चान्यार्थदर्शनम्। २९॰य.
अधि० १७, ८ भाट्ट.
३२ विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्। ३० य, १७ बिन्दुः.
३३ तेन च कर्मसंयोगात्। ३१ य.
३४ गुणत्वेन देवताश्रुतिः। ३२ य.
अधि० १८, ९ भाट्ट.
३५ हिरण्यमाज्यधर्मं तेजस्त्वात्। ३३ य, १८ बिन्दुः.
३६ धर्मानुग्रहाच्च। ३४ य.
३७ औषधं वा विशदत्वात्। ३५ य.
३८ चरुशब्दाच्च। ३६ य.
३९ तस्मिंश्च श्रपणश्रुतेः। ३७ य.
अधि० १९, १० भाट्ट.
४० मधूदके द्रवसामान्यात् पयोविकारः स्यात्। ३८ य, १९ बिन्दुः.
४१ आज्यं वा वर्णसामान्यात्। ३९ य.
४२ धर्मानुग्रहाच्च। ४०य.
४३ पूर्वस्य चाविशिष्टत्वात्। ४१ य.
॥ न्यायास्तु पादे नव वै दशापि ॥
॥ अथ पशौच अश्रुतित्वात् तेनच पूर्वस्यैकचत्वारिंशत् ॥
॥ इत्यष्टमाध्यायस्य प्रथमः पादः ॥

* * * *

॥ अथाष्टमाध्यायस्य द्वितीयः पादः ॥
अधि० १.

---

सू० २९ ( १ ) अश्रुतित्वा इति भा-वृभिन्नेषु। अश्रुतत्वादिति चेन् इति भाट्ट। ( २ ) चेदन्तमुत्तरेणैकं य।

अधि० १७ हविर्देवतयोः संनिपाते हविःसामान्यस्य बलीयस्त्वं इति म-सा-वि-शा-ल। द्रव्यदेवतयोः संनिपाते द्रव्यस्य बलीयस्त्वं इति भाट्ट। हविर्देवतयोर्विप्रतिपत्तौ हविःसामान्यस्य बलीयस्त्वं इति बिन्दुः। हविर्देवतयोर्विकल्पे हविःसामान्यस्य बलीयस्त्वं इति वृ। देवताघटितसादृश्यापेक्षया द्रव्यघटितसादृश्यस्य बलीयस्त्वं इति भा।

सू० ३२ ( १ ) पास्यत्वात् इति वि-शा-ल-रत्नपाठो हस्तदोषात्।

अधि० १८ शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशः इति म-सा-वि-शा-वृ-ल। शतकृष्णले औषधधर्मातिदेशः इति भाट्ट। शतकृष्णलहिरण्ये औषधधर्मातिदेशः इति बिन्दुः। कृष्णलचरौ आग्नेयधर्मातिदेशः इति भा।

सू० ३५ ( १ ) धर्मस्ते इति पुंलिङ्गपाठो भा-शा-बिन्दु-वृ-ल। धर्म ते इति नपुंसकपाठः म-सा-वि-भाट्ट-चौ-य-रत्न। धर्मः स्यात् इति भा-मूले पाठः। तत्रैव धर्मो स्यात् इति भाटि-पाठः। म-सामूले तु धर्म स्यात् इति भाष्यपाठः। भा-म-सामूलान्ते च 'उपांशुयाजधर्मा शलक्ष्णलश्चरुः' इति पङ्क्तिः। सर्वथाऽपि हिरण्यं इत्यस्य सूत्रे विशेष्यत्वात् बहुव्रीहिणा समस्तं आज्यधर्मपदं अनिच्-प्रत्ययान्तं नपुंसकमेव शुद्धम्।

सू० ३७ ( १ ) धं वि इति य।

अधि० १९ मधूदके उपांशुयाजीयाज्यधर्मातिदेशः इति भा-शाभिन्ने। मधूदक उपांशुयाज्यधर्मातिदेशः इति शा। उपांशुयाज्यं नाम किंचिन्नास्त्येव।

सू० ४० ( १ ) द्रवन्वसा इति बिन्दु-य। द्रव्यसा इति ल-चौशीर्षकं तु अशुद्धमेव।

सू० ४३ ( १ ) पूर्वस्यावि इति वृ-य।

अधि० १ ऐष्टिकसौत्रामण्योः ऐष्टिकधर्मातिदेशः इति म-सा-वि-भाट्ट-शा-ल। ऐष्टिकशब्दनिवेशोऽनवधानात्। नहि ऐष्टिके ऐष्टिकधर्मातिदेशः संभवति। वाजिनसौत्रामण्योरैष्टिकधर्मातिदेशः इति बिन्दुः। चातुर्मास्यसौत्रामण्योः ऐष्टिकधर्मातिदेश इति वृ। अत्र वाजिनशब्दस्थाने चातुर्मास्यशब्दो निवेशितो व्यर्थ एव। वाजिनयागसुराग्रहयोरैष्टिकः धर्मातिदेशः इति भा-शीर्षकमेव युक्तम्। सौत्रामण्यामपि सुराग्रहेष्वेव निर्णयापेक्षणात्।

१ वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ।
२ अनुवषट्काराच्च ।
३ समुपहूय भक्षणाच्च ।
४ क्रयणश्रयणपुरोरुगुपयामग्रहणाऽऽसादनवासोपनहनं च तद्वत् ।
५ हविषां वा नियम्येत तद्विकारत्वात् ।
६ प्रशंसा सोमशब्दः ।
७ वचनानीतराणि ।
८ व्यपदेशश्च तद्वत् ।
९ पशुपुरोडाशस्य च लिङ्गदर्शनम् ।

अधि० २.

१० पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् । २ बिन्दुः.
११ प्रोक्षणाच्च ।
१२ पर्यग्निकरणाच्च ।
१३ सांनाय्यं वा तत्प्रभवत्वात् ।
१४ तस्य च पात्रदर्शनात् ।

अधि० ३.

१५ दध्नः स्यान्मूर्तिसामान्यात् । ३ बिन्दुः.
१६ पयो वा कालसामान्यात् ।
१७ पश्वानन्तर्यात् ।
१८ द्रवत्वं चाविशिष्टम् ।

अधि० ४.

१९ आमिक्षोभयभाव्त्वादुभयविकारः स्यात् । ४ बिन्दुः.
२० एकं वा चोदनैकत्वात् ।
२१ दधि संघातसामान्यात् ।
२२ पयो वा तत्प्रधानत्वाल्लोकवद् दध्नस्तदर्थत्वात् ।
२३ धर्मानुग्रहाच्च ।
२४ संयोभावं च दर्शयति ।

अधि० ५

२५ सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् । २४ वृ–लभिन्ने, ५ बिन्दुः.

---

सू० १ ( १ ) वाजिनेषु सो इति शा–शीर्षके बहुवचनमयुक्तम् । ( २ ) मस्य पू इति रत्न ।

सू० ४ ( १ ) श्रपण इति–वि–शा–वृ–ल–चौ। हणसा इति य । ( ३ ) दनोपवा इति य ।

सू० ५ षा नि इति य।

अधि० २ पशौ सांनाय्यधर्मातिदेशः इति भा–भिन्ने । अग्नीषोमीयपशोः सांनाय्यविकारत्वं इति भा ।

सू० १० ( १ ) शस्याविकाराद्देव इति सूत्रांशो य–पुस्तके लिखितः । यक्षपुस्तके तु यपुस्तकपाठं पूर्वलिखितं भङ्क्त्वा भाष्यगतसूत्रवत् संस्कृतः ।

अधि० ३ पशौ पयोधर्मातिदेशः इति भा–भिन्ने। अग्नीषोमीयपशोः पयोविकारत्वं इति भा ।

सू० १५ ( १ ) मूर्नसा इति रत्न ।

सू० १७ ( १ ) र्याच्च इति वृ ।

अधि० ४ आमिक्षायां पयोधर्मातिदेशः इति भा–भिन्ने । आमिक्षायागे पयोयागधर्मातिदेशः इति भा ।

सू० २१ ( १ ) दधिसंघा इति संधाय मुद्रितं म–सा–वि शा–ल–चौ । तदशुद्धम् ।

सू० २४ सयोभावं चेत्यादि सूत्रं वृ–लयोरेव विद्यते नान्यत्र । परंतु भा–म–सामूले धर्मानुग्रहाच्च इत्येतस्य सूत्रस्य व्याख्यां समाप्य " सयोभावं च दर्शयति ' जुषन्ता युज्यं पय इति " इत्यादिर्ग्रन्थो मुद्रितः । तेन भाष्यसंमतमेवेदं सूत्रमिति स्पष्टं सिध्यति ।

अधि० ५ द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशः इति भा–भिन्ने । द्वादशाहे इति सप्तम्याः क्वान्वयः ? सत्राहीनयोः इति षष्ठी सप्तमी वा ? सर्वथा अशुद्धं शीर्षकम् । सत्रेषु सत्रभूतद्वादशाहधर्माणां अहीनेषु चाहीनभूतद्वादशाहधर्माणामतिदेशः इति हि सिद्धान्तोऽत्र ।

सू० २५ ( १ ) हीनं च द्वा इति रत्न ।

२६ अपिवा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् । २५ वृ–ल–भिन्ने.

२७ द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात्। २६ वृ–लभिन्ने

२८ त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् । २७ वृ–ल–यभिन्ने.

२९ लिङ्गाच्च । २८ वृ–लभिन्ने, २७ य.

अधि० ६.

३० अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं, कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् । २९ वृ--लभिन्ने, २८ य, ६ बिन्दुः.

३१ अहीनवचनाच्च । ३० वृ–लभिन्न,२९ य.

३२ सत्रे वोपायिचोदनात् । ३१ वृ–लभिन्ने, ३० य.

३३ सत्रलिङ्गं च दर्शयति । ३२ वृ–ल–भिन्ने, ३१ य.

॥ पादेऽस्मिन् भाष्यकारेण षण् न्यायाः समुदीरिताः ॥

॥ वाजिने प्रोक्षणाच्च दधि सत्र एकत्रिंशत् ॥

॥ इत्यष्टमाध्यायस्य द्वितीयः पादः ॥

* * * *

॥ अथाष्टमाध्यायस्य तृतीयः पादः ॥

अधि० १.

---

सू० २७ ( १ ) नामेका इति वृ-लपाठो न युक्तः। आ एकादशरात्रात् इति हि पदच्छेदोऽत्र ।

सू० २८ नास्तीदं सूत्रं वृ-य ।

अधि० ६ पञ्चदशरात्रादिषु सत्रधर्मातिदेशः इति भा–भिन्ने । पञ्चदशरात्रकुण्डपायिनामयनयोः सत्रत्वात् सत्रात्मकद्वादशाहधर्मातिदेशः इति भा ।

सू० ३० ( १ ) नत्वद इति बिन्दु–वृ । नस्य द इति रत्न ।

सू० ३२ ( १ ) सत्रं वो इति रत्न । सत्रे चोपेयि इति वृ–य । ( २ ) दनत्वात् इति रत्न ।

अधि० १ शुचिदेवते आग्नेयस्य आग्नावैष्णवे चाग्नीषोमीयस्य धर्मातिदेशः इति म-सा वृ । स्वाधीनेऽपि प्रयोगे आग्नेयस्येत्यादेः षष्ठीद्वयस्यान्वयः एकदेशे धर्मे व्यर्थं स्वीकृतः । शुचिदेवते इत्यस्य स्थाने शुचिदेवके इति परिवर्तनं, शेषं म–सावत् वि–शा । विचित्रा किल सत्त्वरजस्तमसां प्रवृत्तिः अकस्मादेव संपादकानां मनसि रजो बलीयो भवति, येन विनैव कारणं पूर्वतनं शुद्धमपि शीर्षकं परिवर्तयन्ति एकतरेणैवाक्षरेण द्वाभ्यामेव वा पदमात्रेण पदाभ्यामेव वा । कदाचित्तु अशुद्धं अनर्थकं विरुद्धार्थकमपि वा प्राचीनं शीर्षकं वर्णमात्रेणापि परिवर्तयितुं बिभ्यति यथास्थितमेव वाऽनुवर्तयन्ति । तच्चेदं तमोवृद्धिसूचकम् । संपादकमहाशयानां महत्याशये सत्त्वमपि भूयसा प्रादुर्भवतीति भाग्यमुत्तरेषामभ्यासकानाम् ।

शुचिदेवते इत्यत्र देवताशब्दस्य टाबन्तत्वात् बहुव्रीहिप्रयुक्तः कप्–प्रययो योज्यः, दैवतशब्दो वा स्वीकार्यः, यथाश्रुतं तु अशुद्धमिति मनसि निधाय विस्तरसंपादकैः देवताशब्दं निरस्य लाघवाद् द्व्यक्षरो देव-शब्दः प्रयुक्तः । अथ आग्नावैष्णवादेः अग्नीषोमीयधर्मातिदेशः इति भाट्ट । प्राचीनशीर्षकात् लाघवं संपादितं आदिपदात् इतरानेकोदाहरणसंग्रहात् भाट्टसंपादकैः । परंतु तत्र आग्नावैष्णवादेः इत्यस्य षष्ठ्यन्तत्वस्वीकारावश्यकत्वेन अग्नीषोमीये पशौ आग्नावैष्णवादेः धर्माणामतिदेशः इति शीर्षकार्थः संपन्नः स च बाधितः । अथ शुचिदैवते आग्नावैष्णवदैवते च क्रमेणाग्नेयाग्नीषोमीयधर्मातिदेशः इति बिन्दुशीर्षकम् । बिन्दुसंपादकाश्च बुद्धिस्वातन्त्र्यबलादेव प्रायः प्राचीनं शीर्षकं कथंकथमपि परिवर्तयन्त्येव । नैव वा तैः प्राचीनानि शीर्षकाणि दृष्टानि स्युः। अत्र दैवतशब्दप्रयोगः मीमांसासिद्धप्रमाणभावस्य क्रमस्योपयोगश्चेति विशेषः । अर्थस्तु समानः । अथ धर्मस्यातिदेशः इति संस्कृत्य

१ हविर्गणे परमुत्तरस्य देशसामान्यात् ।

२ देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ।

अधि० २.

३ गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताऽऽग्नेयत्वात् । २ बिन्दुः.

४ नानाऽहानि वा संघातत्वात् प्रवृत्तलिङ्गेन चोदनात् ।

५ तथा चान्यार्थदर्शनम् ।

अधि० ३.

६ कालाभ्यासेऽपि बादरिः कर्मभेदात् ।

३ बिन्दुः.

७ तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात् ।

अधि० ४.

८ संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् । ९ वृ–ल, ४ बिन्दुः.

९ अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादनभिधानस्य तन्निमित्तत्वात् । १० वृ–ल.

---

शेषं वि-शास्त्रवदेव स्वीकृतं ल । धर्मस्येतिपदनिवेशेन एकदेशान्वयदोषो निरस्तः इति शुद्धः सात्त्विकः पन्था ल-संपादकानाम् । अथ आग्नावैष्णवादौ देवतासामान्यात् अग्नीषोमीयादिधर्मातिदेशः इति भा । अत्र सिद्धान्तभूतोऽधिकरणार्थः सर्वोऽपि संगृहीतः इति साधीय एव ।

सू० १ ( १ ) णे दे इति रत्न ।

सू० २ ( १ ) या नि इति य । परंतु सिद्धान्तसूत्रत्वादस्य इतरत्रेवात्रापि वा–शब्द आवश्यकः ।

अधि० २ जनकसप्तरात्रे त्रिवृत्सु अहःसु द्वादशाहधर्मातिदेशः इति भा-बिन्दुभिन्नाः । जनकसप्तरात्रीयत्रिवृत्सु अहःसु द्वादशाहधर्मातिदेशः इति बिन्दुः । अत्र रात्रीयत्रिवृत्सु इति असमर्थः समासः । अहानि हि साक्षात् जनकसप्तरात्रीयाणि न तु त्रिवृत्त्वं साक्षात् । वस्तुतस्तु म-साशीर्षकस्थं ‘ जनकसप्तरात्रे त्रिवृत्सु ’ इति पदद्वयं बिन्दुसंपादकैर्दृष्टम् । तत्र रात्रे इति सप्तम्या अन्वयः वर्तमानानीति पदाध्याहारं विना न संभवतीति मनसि कृत्वा उक्तपदद्वयार्थं ‘–जनकसप्तरात्रीयत्रिवृत्सु ’ इत्यनेन व्यक्तमकार्षुर्बिन्दुसंपादकाः इति । तदुत्तरत्र स्थितं ‘ अहःसु ’ इति पदं दृष्ट्वा तदुत्तरं समासादिविचारो भविष्यति न वेत्यन्यदेतत् । अथ जनकसप्तरात्रे द्वादशाहिकानां सप्तानामह्नां क्रमेण धर्मातिदेशः इति भा । अत्राप्येकदेशान्वयो दोष एव ।

सू० ४ ( १ ) वृत्तलि इति भा-यभिन्ने सर्वत्र । प्रकृतिलि इति य । प्रवृत्तलि इति भा । भा-मूले प्रवृत्तशब्द एव दृष्टः संगच्छते । लिङ्गे न इति भित्त्वा ल-पाठस्तु अशुद्धः ।

अधि० ३ षट्त्रिंशद्रात्र षडहधर्मातिदेशः इति सर्वे ।

सू० ६ ( १ ) भ्यास इति बा इति रत्न । भ्यासे च वा इति बिन्दुः

सू० ७ ( १ ) संख्यात्वात् इति य ।

एतत्सूत्रोत्तरं ‘तस्मात् षडहाद्वा ’ इत्यधिकं सूत्रं वृ-ल । भाष्यपङ्क्तिस्तु इयं न सूत्रमिव ।

अधि० ४ संस्थागणेषु द्वादशाहिकधर्मातिदेशः इति म-सा-भाट्ट-बिन्दु-वृ । संस्थाशब्देषु द्वादशाहधर्मातिदेशः इति वि-शा–ल । शब्देषु किमर्थं धर्मातिदेशः । शब्दो नाम आकाशगुणो वा स्वतन्त्रमेव द्रव्यं वा न यागः । ननु कथमनुक्तोपालम्भः । संस्था इति शब्दो येषु शतोक्थ्यादिसंस्थागणेषु इति बहुव्रीहिरयम् । सत्यं, तर्हि संस्थागणेषु इत्येव वक्तुं युक्तम् । शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्मातिदेशः इति भा ।

सू० ८ ( १ ) प्रतीयते इति वि । २ येत लक्ष इति रत्न ।

सू० ९ ( १ ) नस्यात इति य । पञ्चोक्थ्यशताग्निष्टोमाद्यभिधानस्य अभ्यासानिमित्तत्वात् इत्यर्थे

अधि० ५.

१० गुणादुपचयस्तत्प्रकृतित्वात् । ११ वृ–ल, ५ बिन्दुः.

११ एकाहाद्वा तेषां समत्वात् स्यात् । १२ वृ–ल.

अधि० ६.

१२ गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात् संख्यातत्वादग्निष्टोमवदव्यतिरेकात्तदाख्यत्वम् । १३ वृ–ल, ६ बिन्दुः.

१३ तं नित्यवच्च पृथक्सतीषु तद्वचनम् । १४ वृ–ल.

१४ न विंशतौ दशेति चेत् । १५ वृ–ल.

१५ ऐकसंख्यमेव स्यात् । १६ वृ–ल, १४ य.

१६ गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् । १७ वृ–ल, १५ य.

१७ गोत्ववच्च समन्वयः । १८ वृ–ल, १६ य.

१८ संख्यायाश्च शब्दवत्त्वात् । १९ वृ–ल, १७ य.

१९ इतरस्याश्रुतित्वाच्च । २० वृ–ल, १८य.

२० द्रव्यान्तरेऽनिवेशादुक्थ्यलोपे विशिष्टं स्यात् । २१ वृ–ल, १९ य.

२१ अशास्त्रलक्षणत्वाच्च । २२ वृ–ल, २० य.

२२ उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् । २३ वृ–ल, २१ य.

---

गृहीत्वा यपाठोपि संगमयितुं शक्यत इति न तस्य विपरीतार्थकत्वम् ।

अधि० ५ शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयः इति भा–भिन्नेषु । शतोक्थ्यादौ ज्योतिष्टोमिकोक्थ्यादिस्तोत्रानुष्ठानं इति भा ।

सू० १० ( १ ) गुणा इति य । गणानामुप इति रत्न ।

सू० ११ ( १ ) स्यात्–पदं नास्ति य । अयमेव साधीयान् पाठः ।

अधि० ६ गायत्रमेतदहर्भवतीत्यादौ उत्पत्तिगायत्रीणामागमः इति म–सा–वृ । गायत्रीषु उत्पत्तिगायत्रीणामतिदेशः इति वि–शा–ल । गायत्रीषु दाशतयीभ्य एवोत्पन्ना गायत्र्य आनेयाः इति भाट्ट । वि–शा–ल–भाट्टेषु क्रत्यासु गायत्रीषु इति नोक्तमिति न्यूनता । गायत्रमेतदहः इत्यत्रोत्पत्तिगायत्रीणामागमः इति बिन्दुः । बृहस्पतिसवादौ दाशतयीभ्य उत्पन्नगायत्रीणां समानयनं इति भा ।

सू० १२ ( १ ) कृत्याधि इति म । प्रवृत्य इति वि–भाट्ट–ल ।

सू० १३ ( १ ) नित्यवच्च इत्यारभ्यैव सूत्रं वृ । वृ–भिन्ने सर्वत्र तन्नित्यवत् इत्येव पाठः । तत्र तच्छब्दस्य नित्यपदेन समासो वा भिन्नं वा नपुंसकं पदं, तं इति वा द्वितीयान्तं पदं इति न निर्णयो भवति । यथामुद्रणं भाष्यं तु ' तन्नित्यवत्संख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा पृथक्सतीषु " इत्यादि । अत्र ' नित्यवत् संख्यामात्रं ब्रुवन्तं गायत्रीशब्दं ' इत्येतावती सौत्रस्य तं–शब्दस्य व्याख्या इति मन्यामहे । तस्मात् तं नित्य' इत्येव मुद्रणं युक्तं भवति । सौत्रं तद्वचनं इति पदं तु सामासिकमेव, गायत्रीवचनं इति तदर्थः ।

सू० १४ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० १९ ( १ ) च–शब्दो नास्ति य ।

सू० २० ( १ ) रे नि इत्यवग्रहरहितं मुद्रणं भा–म–सा–वि–भाट्ट–शा–चौ । भा–म–सामूलं तु " अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चित् निवेशो नास्ति " इति । तेन अवग्रह आवश्यक एव सन्ननवधानान्न मुद्रितः । ' रेनि ' इति प्राचीनपद्धत्या संधाय मुद्रितं य । ( २ ) क्थ्यलोपे विशि इति वृ । अन्यत्र तु सर्वत्र लोपेविशि इत्येव । भाष्यमूलं तु " न चोक्थ्यलोपमन्तरेण द्वादशाहिकानामह्नामग्निष्टोमान्तता भवति इत्यवश्यकार्य उक्थ्य लोपः " इति । एतेन लोपे विशिष्टं इत्येव पाठः सिध्यति ।

सू० २१ ( १ ) च शब्दो नास्ति वृ ।

सू० २२ ( १ ) स्यात्–पदं नास्ति वृ ।

२३ वचनमिति चेत्। २४ वृ-ल, २२ य.
२४ यावदुक्तम्। २५ वृ-ल, २२ य.
२५ अपूर्वे च विकल्पः स्याद् यदि संख्याविधानम्। २६ वृ-ल, २३ य.
२६ ऋग्गुणत्वान्नेति चेत्। २७ वृ-ल,२४ य.
२७ तथा पूर्ववति स्यात्। २८ वृ-ल,२४य.
२८ गुणावेशश्च सर्वत्र। २९ वृ-ल, २५ य.
२९ निष्पन्नग्रहणान्नेति चेत्। ३० वृ-ल, २६ य.
३० तथेहापि स्यात्। ३१ वृ-ल, २६ य.
३१ यदि वाऽविशये नियमः प्रकृत्युपबन्धनाच्छरेष्वपि प्रसिद्धः स्यात्। ३२ वृ-ल, २७य.
३२ दृष्टः प्रयोग इति चेत्। ३३वृ-ल,२८ य.
३३ तथा शरेष्वपि। ३४ वृ-ल, २८ य.
३४ भक्त्येति चेत्। ३५ वृ-ल, २९ य.
३५ तथेतरस्मिन्। ३६ वृ-ल, २९ य.
३६ अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात्। ३७ वृ-ल, ३० य.

॥ पादे तृतीये ध्रुवमष्टमस्य न्यायाः षडेवात्र सुधीभिरुक्ताः ॥

॥ हविर् एकाहाद् उत्पत्ति त्रिंशत् ॥

॥ इत्यष्टमाध्यायस्य तृतीयः पादः॥

* * * *

॥ अथाष्टमाध्यायस्य चतुर्थः पादः ॥

अधि० १.

---

सू० २३ नास्तीदं सूत्रं य। (१) चेदन्तमुत्तरेणैकं य।

सू० २४ (१) " यावदुक्तमिहैवैकत्र संख्यार्थो नान्यत्र क्वचिद्दर्शनात् " इत्येतावत् द्वाविंशं सूत्रं य-पुस्तके। भाष्यमूलादपि, एतादृशमेव सिध्यति। तथाऽमुद्रणं तु अनवधानात्। तथाहि भा-मूले मुद्रितं, ' अत्र ब्रूमः ' इत्यवतरणभाष्यं 'यावदुक्तं' इति सूत्रत्वेन मुद्रितं ' इहैवैकत्र संख्यार्थो नान्यत्र। क्वचिद्दर्शनात्। आह। यद्येवं न संख्यावचनः ' इति पुनर्भाष्यम्। अनेन भाष्येऽपि य-वत् एव सूत्रं सिध्यतीति मन्यामहे। वस्तुतस्तु " वचनमिति चेत्। यावदुक्तम् " इति वाक्यद्वयं भाष्यस्थमेव स्यात् नैतत् सूत्रद्वयम्।

सू० २५ (१) ख्याभिधा इति वृ।

सू० २६ (१) चेदन्तमुत्तरेणैकं य।

सू० २९ (१) ग्रहाने इति वृ सूत्रे, वृ-मूले तु ग्रहणात् इत्येव। (२) चेत्-पदं नास्ति शा। चेदन्तमुत्तरेणैकं य।

सू० ३१ (१) बन्धाच्छ इति वृ-लभिन्नेषु सर्वत्र। परंतु भा-मूले त्रिंशे सूत्रे तावत् ' किं कारणं। प्रकृत्युपबन्धनात् ' इति भाष्यम्। प्रकृतसूत्रे च ' गायत्रीषु विहितासु प्रकृत्युपबन्धनाद्गायत्र्यां गायत्रीशब्दः कल्प्यते ' इति भाष्यम्। तेन उपबन्धनशब्द एव भाष्यसंमतः। (२) च्छब्देष्व इति वि-शा-ल-चौपाठो न युक्तः।

सू० ३२ (१) चेदन्तमुत्तरेणैकं य।

सू० ३४ (१) चेदन्तमुत्तरेणैकं य।

सू० ३६ (१) स्य वास इति य।

अधि० १ अत्र सा-पुस्तके द्वितीयोऽङ्क एव मुद्रितो द्वितीयाधिकरणान्तेऽपि च पुनर्द्वितीयोऽङ्क एवानवधानात्। किञ्चात्र प्रथमेन सूत्रेण पञ्चमादिनवमान्तैश्च प्रथममधिकरणम्। द्वितीयतृतीयसूत्राभ्यां अन्तरागर्भिणीरूपं द्वितीयमधिकरणम्। चतुर्थेन सूत्रेण अन्तरागर्भिणीरूपमेव तृतीयमधिकरणम्। पञ्चमादिनवमान्तानि सूत्राणि प्रथमाधिकरणशेषभूतान्येव, न तैः पृथगधिकरणम्। भा-म-सा-पुस्तकेषु तु पञ्चमादिसूत्रेषु अधिकरणाङ्कश्चतुर्थो मुद्रितोप्यशुद्ध एव। भाष्यं तावत् प्रथमसूत्रान्ते ' स्थितं तावत्। ततोऽर्थान्तरं प्रक्रियते 'इति, पञ्चमसूत्रादौ च, 'स्थितादुत्तरमुच्यते ' इति। तथाच नेदमधिकरणान्तरम्। भाट्ट-शा-मूले तु नवमसूत्रान्तं प्रथममधिकरणं, शेषेण द्वितीयमधिकरणं इत्येव गृहीतम्। विस्तरस्तु भाष्यमूलानुसारी इति समीचीनः पन्थाः।

१ दर्विहोमो यज्ञाभिधानं होमसंयोगात् ।

अधि० २ अन्तरागर्भिणी.

२ स लौकिकानां स्यात् कर्तुस्तदाख्यत्वात् ।

३ सर्वेषां वा दर्शनाद् वास्तुहोमे ।

अधि० ३ अन्तरागर्भिणी.

४ जुहोतिचोदनानां वा तत्संयोगात् ।

प्रथमाधिकरणशेषः.

५ द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ।

६ न लौकिकानामाचारग्रहणाच्छब्दवतां चान्यार्थविधानात् ।

७ दर्शनाच्चान्यपात्रस्य ।

८ तथाऽग्निहविषोः ।

९ उक्तश्चार्थेऽसंबन्धः ।

अधि० ४, २ भाट्ट-शा-बिन्दुः.

१० तस्मिन् सोमः प्रवर्तेताव्यक्तत्वात् ।

११ न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च निर्देशात् तन्त्रे तेन विप्रतिषेधात् ।

१२ शब्दान्तरत्वात् ।

१३ लिङ्गदर्शनाच्च ।

१४ उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं, तत्राविप्रतिषिद्धा पुनःप्रवृत्तिर्लिङ्गदर्शनात् पशुवत् ।

१५ अनुत्तरार्थो वाऽर्थवत्त्वादनर्थकत्वाद्धि प्राकृतस्योपरोधः स्यात् ।

---

अथ शीर्षकाणि । दर्विहोमशब्दस्य कर्मनामधेयत्वं इति म-सा-बिन्दु-ल-भा । दर्विहोमस्य कर्मनामधेयता इति वि-भाट्ट-शा । होमरूपस्य कर्मणः नामधेयत्वं कथं युज्यते इति संपादका एव जानीयुः । दर्विहोमशब्दस्य नामधेयत्वं इति वृ ।

अधि० २ दार्विहोमशब्दस्य लौकिकवैदिकोभयकर्मनामधेयत्वं इति म-सा-वृ-ल । दार्विहोमस्य लौकिकवैदिकोभयकर्मनामधेयता इति वि । अत्रापि होमस्य नामधेयत्वं नृशृङ्गायमाणमेवोक्तम् । दर्विहोमशब्दस्य स्मार्तानां वैदिकानां च कर्मणां नामधेयता इति भा ।

अधि० ३ दर्विहोमशब्दस्य होमनामधेयत्वं इति म-सा-वि-वृ-ल-भा ।

सू ४ ( १ ) नायां वा इति वि-भाट्ट-शा-चौ । ( २ ) वा सत्सं इति ल । इमौ उभावपि पाठौ न युक्तौ ।

सू० ५ ( १ ) गुणाभिधानं स्याद् द्रव्योपदेशात् इति य ।

सू० ६ ( १ ) ग्रहणत्वात् इति य-भिन्नेषु । ग्रहणात् इति य । भा-मूले च ' लौकिकानां तावदाचारगृहीता दर्विः ' इत्युक्तम् । अर्थानुसारश्च ग्रहणत्वात् इति पाठे न भवति इति य-पाठानुसारेण भा-सूत्रपाठः स्वीकृतोऽस्माभिः । ( २ ) न्यार्थदर्शनात् इति य ।

सू० ९ ( १ ) श्चार्थेऽसं इति वृ-ल । श्चार्थसं इति वृ-लभिन्नेषु । अत्र भाष्यग्रन्थ इत्थं ' उक्तं चास्माभिः, अग्नेः कार्ये अन्यद् द्रव्यमसमर्थम् ।... तस्माच्चाग्निकार्ये दर्वेरुपदेशः ' इति । तेन वृ-ल पाठवदेव भाष्यसंमतः सूत्रपाठ इति निश्चिन्मः । अर्थे असंबन्धः इति पदच्छेदः । अर्थसंबन्ध इति पाठे तु भाष्यं न संगच्छते ।

अधि० ४ दर्विहोमशब्दस्य अपूर्वता इति भा-भाट्टभिन्नेषु । प्रथमाधिकरणे तावत् दार्विहोमस्य कर्मनामधेयता इत्युक्तं इदानीं तु दर्विहोमशब्दस्यापूर्वता इत्युच्यते । यथा मन्त्रतन्त्रानभिज्ञः कश्चिदुपनीतो बालो भोजनकाले अमृतोपस्तरणमसीति मन्त्रेण परिषिञ्चति, सत्यं त्वर्तेन परिषिञ्चामि इति मन्त्रेण च जलं पिबति तद्वदेवेदं संपादकमहाशयानां पाण्डित्यम् । साधु भोः । दर्विहोमानामपूर्वता इति भाट्ट । दार्विहोमानामपूर्वता इति भा ।

सू० ११ ( १ ) तेन प्र इति य ।

सू० १२ ( १ ) त्वाच्च इति य ।

सू० १५ ( १ ) त्वादानर्थक्याद्धि इति पाठः सर्वत्रैवोपलभ्यते । भा-म-सा-मूले तु ' अनर्थक-

१६ न[1] प्रकृतावपीति चेत्[2]।

१७ उक्तं समवाये पा[1]रदौर्बल्यम्। १६ य.

१८ तच्चोदना वेष्टेः प्रवृ[1]त्तत्वात् तद्विधिः स्यात्। १७ य.

१९ शब्दसामर्थ्याच्च। १८ य.

२० लिङ्गदर्शनाच्च। १९ य.

२१ तत्राभावस्य हेतुत्वाद् गुणार्थे [1]स्याददर्शनम्। २० य.

२२ विधिरिति[1] चेत्[2]। २१ य.

२३ न वाक्यशेषत्वा[1]द् गुणा[2]र्थे च समाधानं नाना[3]त्वे नोपपद्यते। २२–२३चौ,२१य.

२४ येषां वा[1]ऽपरयोर्होमस्तेषां स्याद्विरोधात्। २२ य.

२५ तत्रौषधानि चोद्य[1]न्ते, तानि स्थानेन गम्येरन्। २३ य.

२६ लिङ्गाद्वा शेषहोमयोः। २४ य.

२७ प्रतिपत्ती तु[1] तौ भवतस्तस्मादतद्विका[2]रत्वम्। २५ य.

२८ संनिपाते विरोधिना[1]मप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद् वचनादतिदेशः स्यात्। २६ य.

॥ न्यायाः पञ्चात्र कीर्तिताः ॥

॥ दर्वि नवा विधिः षड्विंशतिः ॥

॥ इत्यष्टमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

---

त्वाद्धि प्राकृतस्योपरोधः स्यात्' इत्येव सूत्रप्रतीकं गृहीतं, तेन तथैव सूत्रपाठः स्वीकार्यो नान्यथा बलवत्प्रमाणाभावात्। ( २ ) प्राथम्यस्यो इति वि–शा–ल–चौ पाठो न ग्राह्यः।

सू० १६ ( १ ) न-शब्दो नास्ति य। ( २ ) चेदन्तमुत्तरेणैकं य।

सू० १७ ( १ ) ये पर इति य।

सू० १८ ( १ ) प्रवृत्तित्वात् इति वृ–भिन्नेषु। प्रवृत्तत्वात् इति वृ। " जुहोतिचोदना ये दर्शपूर्णमासयोरङ्गकर्मविशेषाः ... ते हि प्रवृत्तधर्माणः सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्तमाना दृष्टाः " इति भाष्यम्। एतेन प्रवृत्तत्वात् इत्येव भाष्यसंमतं सूत्रपदमिति मन्यामहे। ( २ ) प्रवृत्तित्वाद्धि इति सा–ल–चौ।

सू० २१ (१) र्थे स्याददर्श इति य–पाठो नायुक्तः। भाष्ये तु स्याद्वा द्विर्वा नास्त्येव।

सू०२२ (१) नास्तीदं सूत्रं चौ। चेदन्तमुत्तरेणैकं य।

सू० २३ ( १ ) न वाक्यशेषत्वात् इति द्वाविंशं गुणार्थे इत्यादि तु त्रयोविंशं इति चौ। त्वागुणा इति ल–पाठस्तु दुष्ट एव। ( २ ) णार्थेऽर्थसमापनं नानार्थेनोपपद्यते इति य। (३) नानात्वेनोपपद्यते इति संधाय सर्वत्र मुद्रणम्। तेन नानात्वेन इति तृतीयान्तस्य च्छेदो निश्चीयते। भाष्यं तु " ते यदि विधयः कल्पेरन् पृथग्वाक्यानि भवेयुः। तत्र एकवाक्यरूपं बाध्येत " इति। तेन नानात्वे न उपपद्यते इति पदत्रयमत्रेति मन्यामहे। नानात्वे इति सप्तम्यन्तम्।

सू० २४ (१) एषां वा इति वृ। केचिद्विद्वांसोऽपि येषां इत्यत्र जेषां इति वा एषां इति वोच्चारयन्तीति प्रसिद्धम्। तेनायं दोषः समजनीति तर्क्यते। तेषां इति प्रतिनिर्देशात् येषां इत्येव तु साधु।

सू० २५ ( १ ) न्ते तत्स्था इति य।

सू० २७ ( १ ) तु ते भ इति य–भिन्ने सर्वत्र। तु तौ भ इति य। भाष्यं तु " न त्वेतदेवम्। कुतः यतः प्रतिपत्तिकर्मणी एतौ होमौ " इति। अत्र उद्देश्यहोमानुसारेण पुंलिङ्गपाठः समीचीनः। यद्यपि प्रतिपत्ती इति विधेयं पदं तदनुसारेण च ते इति स्त्रीलिङ्गपाठोऽपि संगच्छेत तथापि उद्देश्यनिर्देशस्यावश्यकत्वात् तौ इत्येव युक्ततरं मन्यामहे। य–पाठश्चानुकूलः। ( २ ) कारित्वं इति य।

सू० २८ (१) ना न प्र इति ल–पाठो न ग्राह्यः। अत्र ' वाक्याद् धर्मातिदेशः स्यात् ' इति मण्डनाचार्येण पञ्चमाधिकरणार्थो दर्शितः। परंतु एतदर्थकमधिकरणं भाष्यादौ क्वापि नास्त्येव। ' वचनादतिदेशः स्यात् ' इति तु अष्टाविंशसूत्रावयवः। तदर्थस्तु भाष्ये वर्णितः। तच्च वर्णकान्तरमिव भाति। तदेव तु अधिकरणान्तरत्वेन गृहीतं मण्डनाचार्येणेति स्पष्टम्। तथाच मण्डनमतेनात्र पादे पञ्च न्यायाः। भाष्यमतेन वस्तुतश्चत्वारः भाट्टादिमतेन च द्वावेव।

# ॥ अथ नवमोऽध्यायः ॥

अधि० १.

१ यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ।

अधि० २, २-३ मण्डनः.

२ संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तं स्यात् ।

३ तेन त्वर्थेन यज्ञस्य संयोगाद् धर्मसंबन्धस्तस्माद् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ।

अधि० ३, ४ मण्डनः.

४ फलदेवतयोश्च । ३ बिन्दुः.

५ न चोदनातो हि तादूगुण्यम् ।

अधि० ४, ५ मण्डनः.

६ देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वात् । ४ बिन्दुः.

७ आर्थपत्याच्च ।

८ ततश्च तेन संबन्धः ।

---

अधि० १ अग्निहोत्रादिषु उक्तानां धर्माणामपूर्वप्रयुक्तत्वं इति म-सा-वि-शा-वृ-ल । अग्निहोत्रादिधर्माणामपूर्वप्रयुक्तत्वं इति भाट्ट । अग्निहोत्रादिषु उक्तधर्माणामपूर्वप्रयुक्तता इति बिन्दुः । धर्माणामपूर्वप्रयुक्तत्वं इति भा । केषां धर्माणामित्यनुक्तत्वात् संशयजनकमिदम् ।

अत्राधिकरणे त्रीणि वर्णकानि । तत्र द्वितीये, अवघाते व्रीहीणामपूर्वसाधनत्वाकारविवक्षा इति वि-शा । धर्माणामपूर्वं निमित्तं इति भा । तृतीये वर्णके तु धर्माणां प्रयोजकं निमित्तं चापूर्वं इति ।

सू० १ ( १ ) रस्य तद इति य ।

अधि० २ प्रोक्षणस्यापूर्वप्रयुक्तत्वं इति म-सा-वि-शा-वृ-ल । उलूखलमुसलप्रोक्षणस्यापूर्वप्रयुक्तत्वं इति भाट्ट । प्रोक्षणस्यापि अपूर्वप्रयुक्तता इति बिन्दुः । वाक्यविनियुक्तेषु प्रोक्षणादिसंनिपत्योपकारकेषु अपूर्वप्रयुक्तत्वं इति भा । अत्रैव द्वितीये वर्णके, उच्चावचध्वनेः परमापूर्वप्रयुक्तता इति म-सा शीर्षकमपसिद्धान्तः । न परमापूर्वप्रयुक्तता किं तु अङ्गापूर्वप्रयुक्तेति हि सिद्धान्तः । उच्चावचध्वनेः परमापूर्वाप्रयुक्तता इति वि-शा-ल । अङ्गापूर्वप्रयुक्तता इत्येव वक्तव्यम् । स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वं इति बिन्दु-वृ । दीक्षणीयावाङ्नियमः इति भा । इदं द्वितीयं वर्णकमेव तृतीयाधिकरणत्वेन स्वीकृतं मण्डनेन ।

सू० २ ( १ ) युक्तता इति य ।

सू० ३ ( १ ) न सं इति टी । ( २ ) ज्ञसं इति य । ( ३ ) स्मात् प्र इति य ।

अधि० ३ फलदेवतासंबद्धधर्माणामपि अपूर्वप्रयुक्तता इति भा-भाट्टभिन्नेषु । फलदेवतासंबद्धधर्माणामपूर्वप्रयुक्तत्वं इति भाट्ट । फलदेवताप्रकाशकमन्त्रयोरपूर्वप्रयुक्तत्वं इति भा ।

अधि० ४ धर्माणामदेवताप्रयुक्तत्वं इति म-सा-वि-शा-बिन्दु-ल । अदेवताप्रयुक्तत्वं इत्येतादृशः प्रयोगस्तत्रतत्र पण्डितैः कथं नाम क्रियते इति न जानीमो वयम् । देवताप्रयुक्तत्वाभावः इति लेखने का वा हानिरेतेषामिति न ज्ञायते । कर्मणामदेवताप्रयुक्तत्वं ( देवतानिराकरणं ) इति भाट्ट । धर्माणां देवताप्रयुक्तत्वाभावः इति वृ-भा । इदमेवाध्वरमीमांसागतं देवताऽधिकरणं नाम ।

सू० ७ ( १ ) अर्थापत्त्या च इति वृ । 'अर्थानां निखिलफलानामाप्तिः स्वामित्वाद्देवतायाः इति वृ-मूले अर्थपतिशब्दो व्याख्यातः । स च लोकशास्त्रविरुद्धः । तस्मादपपाठ एव श्रेयान् । इदमुत्तरं चेति द्वे सूत्रे य-पुस्तके न स्तः ।

९ अपिवा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः । ७ य.

१० अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात् । ८ य.

अधि० ५, ६ मण्डनः.

११ द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् । ९ य, ५ बिन्दुः.

१२ अर्थकारिते च द्रव्येण न व्यवस्था स्यात् । १० य.

१३ अर्थो वा स्यात् प्रयोजनमितरेषामचोदनात् तस्य च गुणभूतत्वात् । ११ य.

१४ अपूर्वत्वाद् व्यवस्था स्यात् । १२ य.

१५ तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् । १३ य.

१६ तद्युक्तस्येति चेत् । १४ य.

१७ नाश्रुतित्वात् । १४ य.

१८ अधिकारादिति चेत् । १५ य.

१९ तुल्येषु नाधिकारः स्यादचोदितश्च संबन्धः, पृथक् सता यज्ञार्थेनाभिसंबन्धस्तस्माद्यज्ञः प्रयोजनम् । १५ य.

अधि० ६, ७ मण्डनः.

२० देशसंबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिदर्शनात् तस्य च तत्र भावात् । १६ य.

६ बिन्दुः.

---

सू० ९ (१) णत्वेन दे इति य ।

सू० १० (१) तिविधा इति य ।

अधि० ५ प्रोक्षणादीनामपूर्वप्रयुक्तता इति भा-भाट्टभिन्नेषु । द्वितीयाधिकरणेऽप्येवमिति अव्यवस्थापत्तिः । व्रीह्यादिप्रोक्षणादीनामपूर्वप्रयुक्तत्वं इति भाट्ट । श्रुतिविनियुक्तप्रोक्षणादिधर्माणामपूर्वप्रयुक्तत्वं इति भा ।

सू० ११ (१) हेतुसामान्यं वा इति टी । हेतुसमवायं वा इति कुटि २।२।१७ इत्यत्र । (२) श्रुतियो इति कु २।२।१७ इत्यत्र ।

सू० १३ (१) चोदनाऽर्थस्य इति य । (२) स्य गु इति टी ।

सू० १४ अत्र भाटिप्पणी "अपूर्वपृथक्त्वाद् व्यवस्था स्यात् इति सूत्रपाठो लिखितपुस्तके उपलभ्यमानोपि भाष्यकारैः सोऽनादृतः" इति । "तस्मात् अपूर्वत्वाद् व्यवस्था स्यात्" इति हि भाष्ये उपसंहारः ।

सू० १६ (१) वेदन्तमुत्तरेणैकं य ।

सू० १७(१) न श्रु इति य । नाश्रु इति यक्ष ।

सू० १८ (१) आधिका इति भाट्ट । । (२) वेदन्तमुत्तरेणैकं य ।

सू० १९ (१९) सत्तां य इति वृ । 'पृथक् सत्तां उपभोगसाधनव्रीहिभ्यः पृथक् जातिः' इति वृ-मूलम् । भा-मूलं तु 'पृथक् सतां (व्रीहीणां) यज्ञार्थेन निर्वापः श्रूयते' इति । तत्र श्रुतिमूलमध्याहारसापेक्षं श्रुतान्वयं च त्यजतीति भाष्यीयपाठमेव साधीयांसं मन्यामहे । (२) यज्ञार्थेन संबन्धस्तस्माद्यज्ञः प्रयोजनं इति य । वृ-मूले 'यज्ञस्य यज्ञान्तःपातिप्रोक्षणस्य प्रयोजनं उद्देश्यं सर्वे व्रीहयः' इति व्याख्यातम् । भाष्ये तु अयमंशो नैव स्पृष्टः । वयं तु यज्ञः प्रयोजनं (भक्षणार्थानामिव सतां व्रीहीणां इत्यर्थानुषङ्गः) इत्येव पाठं साधीयांसं मन्यामहे । (३) यज्ञप्र इति य-भिन्नेषु ।

अधि० ६ अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वं इति भा-भाट्टभिन्नेषु । ननु कस्मात् प्राचीनाः ? प्राचीनत्वस्यावधिः कः ? सर्वथा अयुक्तं शीर्षकम् । अग्निष्टोमे उपांशुत्वस्य पदार्थप्रयुक्तत्वं इति भाट्ट । इदमपि त्याज्यमेव । अग्नीषोमीयप्राग्भागवर्तिपदार्थधर्मस्योपांशुत्वस्य तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तत्वं इति भा । इदं तु समीचीनम् ।

सू० २० (१) बन्धमु इति य । बद्धमु इति य-भिन्नेषु । यद्यपि देशसंबद्ध इति पाठः क्वापि नोपलभ्यते तथापि भाष्ये 'तत्प्रयुक्तोऽयं धर्मः सोऽयं देशसंबद्धः ... एतेन धर्मेण संबद्धाः' इति संबन्धशब्दप्रयोगात् वार्तिकेऽपि सर्वत्र संबन्धशब्दप्रयो-

२१ यज्ञस्य वा तत्संयोगात् । १७ य.
२२ अनुवादश्च तदर्थवत् । १८ य.

अधि० ७ अन्तरागर्भिणी.

२३ प्रणीतादि तथेति चेत् । १९ य.
२४ न यज्ञस्याश्रुतित्वात् । १९ य.

( षष्ठाधिकरणशेषसूत्रम् )

२५ तद्देशानां वा संघातस्याचोदितत्वात् । २० य.

अधि० ८.

२६ अग्निधर्मः प्रतीष्टकं संघातात् पौर्णमासीवत् । २१ य, ७ बिन्दुः.
२७ अग्नेर्वा स्याद् द्रव्यार्थत्वादितरासां तदर्थत्वात् । २२ य.
२८ चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् । २३ य.

अधि० ९, ८ बिन्दुः.

---

गात् सूत्रे तथैव पाठः स्वीकार्य इति मन्यामहे। (२) निदेशात् इति वि-ल-टुप् ।

सू० २२ (१) अर्थवाद इति भाटि-य ।

अधि० ७ अत्र वार्तिकं "ननु इदानीमेवोक्तं 'स्थितादुत्तरं' इति चैतस्माद् ग्रन्थादनुमीयतेऽधिकरणान्तरं" इति । तन्त्ररत्नं च "सूत्रद्वयेन अधिकरणान्तरं अन्तरागर्भिणीन्यायेन प्रस्तूयते" इति । वार्तिकस्थं उद्धारवाक्यद्वयं भाष्यस्थम् । ग्रन्थात् इति भाष्यग्रन्थादित्यर्थः । इदमधिकरणं सूत्रद्वयात्मकमेव । तद्देशानां इति सूत्रं तु षष्ठाधिकरणशेषभूतमेव । संपादकैस्तु न तथा प्रदर्शितमिति कष्टम् । विस्तरमूले 'सप्तमाधिकरणमारचयति' इति श्लोकमवसार्याधिकरणमारचितम् । तत्संपादकैस्तु टिप्पण्यां "उदाहरणान्तरमारचयति इत्येव युक्तं प्रतिभाति । अत एवैतन्मूलभूतसूत्राणि पृथङ् नोपलभ्यन्ते इत्याद्युक्तम् । तत्तु भाष्यवार्तिकतन्त्ररत्नैर्विरुद्धम् । यत्तु संपादकैष्टिप्पण्यां "शास्त्रदीपिकायामपि षष्ठाधिकरणे एव प्रणीतावाक्यमस्योल्लेखः कृतः" इत्युक्तं सत्यं तत् परंतु "अथवाऽनेन सूत्रद्वयेन अधिकरणान्तरं अन्तरागर्भिणीन्यायेन विचार्यते" इति पङ्क्तिरपि उदाहरणोल्लेखोत्तरं वर्तमानाऽपि शास्त्रदीपिकास्था न दृष्टेति महदाश्चर्यम् । मण्डनेन तु नेदं गृहीतम्।

अथ शीर्षकं, प्रणीतावाक्यमस्य पदार्थप्रयुक्तत्वं इति भाट्ट । वाङ्नियमस्यावान्तरापूर्वप्रयुक्तत्वं इति वृ-ल । भाट्ट-शीर्षकमतिशिथिलम् । प्रणीतावाक्यमस्य हविष्कृ० दाह्वानारप्राचीनपदार्थापूर्वप्रयुक्तत्वं इति वक्तव्यम् ।

सू० २३ (१) चेदन्तमुत्तरेणैकं य । अत्र वार्तिकतन्त्ररत्नमतेन चेदन्तं पृथक् सूत्रं सिध्यति। य-पाठस्तु भाष्यान्तरानुसारी कुतूहलानुसारी वेति विवेचितमेव ।

अधि० ८ इष्टकासु सकृत् विकर्षणाद्यनुष्ठानं इति म-सा-वि-शा-वृ-ल । इष्टकासु सकृत् विकर्षणप्रोक्षणानुष्ठानं इति भाट्ट । इष्टकासु सकृत् प्रोक्षणाद्यनुष्ठानं इति बिन्दुः । अग्नौ प्रोक्षणादेः सकृदनुष्ठानं इति भा ।

सू० २६ (१) ष्टकमसं इति य ।

सू० २८ (१) तथात्वं स्यात् इति वृसूत्र-ल-य । वृ-मूले तु तथा इत्येव तथात्वप्रतिपादकं इत्यर्थकं, मानं इति विशेष्यम् । वृसूत्र-ल-य-भिन्नेषु तु 'तथा' इत्येव पाठः । परंतु "उच्यते युक्तं पौर्णमास्यां तथाभावः" इति भाष्यात् तथात्वं इति वा तथाभाव इत्येव वा सूत्रे पाठः स्यादिति मन्यामहे ।

अधि० ९ उत्तमान्यानामहां पत्नीसंयाजसंस्था इति म-सा-वि-शा । उत्तमवर्जे पत्नीसंयाजसंस्था इति भाट्ट । उत्तमान्येषामह्नां पत्नीसंयाजान्तं इति बिन्दु-वृ । अन्यानां इति म-सादिपाठः व्याकरणविरुद्धः । अन्येषां इति पाठस्तु शुद्धः । पत्नीसंयाजान्तत्वं इति च युक्त एव शब्दप्रयोगः । उत्तमान्येषामह्नां पत्नीसंयाजसंस्था इति ल । संस्थाशब्दः समाप्तिवाचीति निर्विवादं, तथापि भा-बिन्दुभिन्नशीर्षकाणि अशुद्धानि दुर्ज्ञेयार्थानि च । द्वादशाहे उत्तमाहर्वर्जं पत्नीसंयाजान्तत्वं इति भा-शीर्षकं तु साधीयः ।

२९ पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् । २४ य.

३० लिङ्गाद्वा प्रागुत्तमात् । २५ य.

३१ अनुवादो वा दीक्षा यथा नक्तंसंस्थापनस्य । २६ य.

३२ स्याद्वाऽनारभ्यविधानादन्त्ये लिङ्गविरोधात् । २७ य

अधि० १०, ९ बिन्दुः.

३३ अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् । २८ य, ९ बिन्दुः.

अधि० ११, १० बिन्दुः

३४ इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया । २९ य, १० बिन्दुः.

३५ सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् । ३० य.

अधि० १२, ११ बिन्दुः.

३६ अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् तत्राचोदितमप्राप्तं चोदिताभिधानात् । ३१ य. ११ बिन्दुः.

३७ ततश्चावचनं तेषामितरार्थं प्रयुज्यते । ३२ य.

अधि० १३, १३-१४ मण्डनः. १२ बिन्दुः.

---

सू० ३१ (१) 'अर्थवादोवायथादीक्षानक्तंसंस्थापनस्य' इति य । (२) नक्तंसं इति संधाय मुद्रणं म-सा-शा । अन्यत्र तु भित्त्वा मुद्रणम् । संधाय मुद्रणं तु युक्तम् ।

सू० ३२ (१) दन्त्ये इति वृ-टी-रत्न-य । अन्यत्र तु अन्ते इत्येव । भा-मूलेऽपि अन्ते इत्येव मुद्रितम् । तत्रापि अन्त्ये इत्येव पाठः स्यात् । "तश्चान्त्यस्य प्रयोजनं न विद्यते । तस्मात् प्रागन्त्यात् पत्नीसंयाजान्तता" इति उपसंहारे भाष्यपङ्क्तिः । त्रिंशे च सूत्रे 'प्रागुत्तमात्' इत्युक्तं तदपि अत्रानुकूलम् । तन्त्ररत्ने च सूत्रे मूले च अन्त्ये इत्येव पाठः स्पष्टः ।

अधि० १० द्विः प्रथमामन्वाह इत्यादिषु स्थानधर्मता इति म-सा-बिन्दु-वृ । सामिधेनीनामभ्यासस्य स्थानधर्मता इति-वि-शा-ल । सामिधेनीनामभ्यासः स्थानधर्मः इति भाट्ट । सामिधेन्यां त्रिरभ्यासस्य प्रथमोत्तमस्थानधर्मत्वं इति भा-शीर्षकं साधीयो नेतरत् ।

अधि० ११ अत्र वर्णकद्वयम् । तत्र प्रथमे शीर्षकाणि । यावज्जीवदर्शपूर्णमासयोरारम्भणीयेष्टेः सकृदनुष्ठानं इति म-सा-वृ । आरम्भणीयेष्ट्यधिकरणं इति वि-शा । आरम्भणीयेष्टिविचारः इति भाट्ट । यावज्जीवदर्शपूर्णमासयोरारम्भणीयायाः सकृदेवानुष्ठानं इति बिन्दुः । सकृदारम्भणीयेष्ट्यनुष्ठानं इति ल-शीर्षकं दोषकरम् । दर्शपूर्णमासयोरन्वारम्भणीयायाः सकृदनुष्ठानं इति भा । दर्शपूर्णमासयोरिति सर्वत्र षष्ठी । यावज्जीवदर्शपूर्णमासार्थारम्भणीयायाः सकृदेवानुष्ठानं इति तु शीर्षकं युक्तम् । अथ द्वितीये वर्णके शीर्षकं, आरम्भणीयेष्टेः पुरुषसंस्कारता इति म-सा । आरम्भणीयेष्टेः पुरुषार्थत्वाभावशक्तिः इति वि ।

अधि० १२ निर्वापमन्त्रे सवित्रादिशब्दानामनूहः इति म-सा-वृ । निर्वापमन्त्रे सवित्रादिपदानामनूहः इति वि- भाट्ट-बिन्दु-ल । निर्वापादिमन्त्रे सवित्रादिपदानामनूहः इति शा । प्रथम आदिशब्दो व्यर्थः । निर्वापमन्त्रे सवित्रादिपदानामसमवेतार्थानां विकृतौ अनूहः इति भा ।

सू० ३७ (१) नास्तीदं सूत्रं वृ । (२) युज्येत इति य ।

अधि० १३ अत्र वर्णकद्वयं, तत्र प्रथमे शीर्षकं, अग्नये जुष्टमिति मन्त्रे अग्निशब्दस्य विकृतौ ऊहः इति म-सा । विकृतौ वर्णकद्वयसहितमधिकरणं इति अधिकरणशीर्षकं वि । विकृतौ अग्निशब्दोहः इति तु अनुक्रमणिकायां श्लोकावतरणे च कंसे वि । निर्वापमन्त्रे अग्न्यादिपदानामूहः इति भाट्ट । अत्र आदिपदं बहुवचनं च व्यर्थम् । नहि निर्वापमन्त्रे अग्निशब्दादन्यस्य कस्याप्यूहः । वर्णकद्वयसहितमधिकरणं इति अधिकरणादौ अनुक्रमणिकायां च शा । ननु अन्या-

३८ गुणशब्दस्तथेति चेत् । ३७ सू, ३३ य, १२ बिन्दुः.

३९ न समवायात् । ३८ सू, ३३ य.

अधि० १४, १५ मण्डनः, १३ बिन्दुः

४० चोदिते तु परार्थत्वाद् विधिवदविकारः स्यात् । ३९ सू, ३४ य, १३ बिन्दुः.

अधि० १५, १६ मण्डनः, १४ म-सा.

४१ विकारस्तत्प्रधाने स्यात् । ४० सू, ३५ य.

अधि० १६, १७-१८ मण्डनः, १५ म-सा-भाट्ट- १४ शा-बिन्दुः.

४२ असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत । ४१ सू, ३६ य, १४ बिन्दुः.

४३ कर्माभावादेवमिति चेत् । ४२ सू, ३७ य.

---

न्यपि वर्णकद्वयत्रयसंहितान्यधिकरणानि सन्त्येवानेकानि । तत्र कुतो नोक्तमेतादृशम् । अत्रैव च को विशेषः? ।अग्नये जुष्टमित्यत्र विकृतिषु अग्निशब्दस्योहः इति बिन्दुः । अग्नये जुष्टमित्यग्निपदस्योहो विकृतौ इति वृ । ।विकृतावग्निशब्दस्य तण्डुलनिर्वापमन्त्रे धान्यशब्दस्य चोहप्रदर्शकं चेति क्रमाद् वर्णकद्वयात्मकाधिकरणं इति ल । त्मकधि इत्यत्र 'त्मकाधि' इति वा 'त्मकमाधि' इति वा ग्राह्यं हस्तदोषस्याविचार्यत्वात्, तण्डुलनिर्वापमन्ते इत्येतं पदमधिकृत्य तु उत्तरत्र वक्ष्यामः.। निर्वापमन्त्रे श्रुतस्याग्निशब्दस्य समवेतार्थस्य विकृतौ ऊहः इति भा । समवेतार्थपदेनात्र ऊहे हेतुरुक्तः इति विशेषः । अथ द्वितीयवर्णके । तण्डुलावापमन्त्रे धान्यशब्दस्योहः इति म-सा-वृ । तण्डुलनिर्वापमन्त्रे धान्यशब्दोहः इति वि । ल-संपादकैस्तु इदं प्रागुक्तमेव । धान्यमसि धिनुहि देवान् इति दृषदि ( पेषणार्थं ) आवपति इत्यनेन विहिते मन्त्रे धान्यपदस्योहः 'मांसमसि धिनुहि' इत्येवंरूपः इति तु वर्णकार्थः । धान्यमसीति मन्त्रश्च न निर्वापस्य किंतु आवापस्य । यश्च निर्वापमन्त्रः अग्नये जुष्टं निर्वपामि इति स च न तण्डुलानाम् । साक्षात्तण्डुलानां निर्वापः प्रायो न भवति । व्रीहीणां तु तण्डुलार्थं भवति निर्वापः । इति वि-लशीर्षकं वालुकाकूप इव सर्वतो विदीर्येत एव ।

सू० ३८ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० १४ इडोपह्वानमन्त्रे यज्ञपतिशब्दस्यानूहः इति म-सा-वि-शा-वृ-ल । इडोपाह्वानादिमन्त्रे यज्ञपत्यादिशब्दस्यानूहः इति भाट्ट । उभावपि आदिशब्दौ व्यर्थावेव । इडोपाह्वाने यज्ञपतिशब्दस्यानूहः इति बिन्दुः । मन्त्रपदत्यागेन लाघवं साधितमत्र । इडानिगदे यज्ञपतिशब्दस्यासमवेतार्थकस्य विकृतौ अनूहः इति भा ।

सू० ४० ( १ ) पदार्थ इति ल । ( २ ) स्यात्-पदं नास्ति बिन्दौ ।

अधि० १५ प्रस्तरप्रहरणसूक्तवाके यजमानशब्दस्योहः इति म-सा । प्रस्तरप्रहरणकरणसूक्तवाके यजमानपदस्योहः इति वि । सूक्तवाके यजमानपदस्योह इति वृ । प्रस्तरप्रहरणसूक्तवाके यजमानपदस्योह इति ल । न्यूनार्थकताऽत्र । सूक्तवाके श्रूयमाणस्य यजमानपदस्य विकृतौ ऊहः इति भा ।

अधि० १६ सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहः इति भा-लभिन्नेषु । सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दानूहः इति ल । सुब्रह्मण्यानिगदे हरिवदादिगुणवाचकपदानामनूहः इति भा । इति प्रथमवर्णकस्थं शीर्षकम् । अथ द्वितीयवर्णकस्थम् । तस्यै शृतं' इति मन्त्रे अनूहः इति म-सा-वृ । सोमक्रयसाधनखाण्डे 'तस्मै शृतं' इत्यनूहः इति वि-ल । वस्तुतो लपुस्तके प्रथमवर्णकादाविव सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दानूहस्य सोमक्रयसाधनखा (सा) ण्डे तस्मै शृतं इत्याद्यनूहस्य च प्रदर्शकं वर्णकद्वयात्मकमधिकरणं इति शीर्षकं विद्यते। अस्माभिस्तु भित्त्वा गृहीतम् ।

सू० ४२ ( १ ) गाद इति शाटि । ( २ ) प्रतीयते इति रत्न ।

सू० ४३ ( १ ) भावादेति चेत् इति भाडि-य । भावादेवमिति चेत् इति अन्यत्र । ( २ ) चेदन्तमुत्तरेणैकं य ।

४४ न परार्थत्वात् । ४३ वृ, ३७ य.
अधि० १७, १९ मण्डनः, १६ म सा-भाट्ट, १५ शा-बिन्दुः.

४५ लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् । ४४ वृ, ३८ य, १५ बिन्दुः.

४६ पश्वभिधानाद्वा, तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् । ४५ वृ, ३९ य.

४७ विशेषो वा तदर्थनिर्देशात् । ४६ वृ, ४० य.

४८ पशुत्वं चैकशब्द्यात् । ४७ वृ, ४१ य.

४९ यथोक्तं वा संनिधानात् । ४८ वृ, ४२ य.
अधि० १८, २० मण्डनः, १७, म-सा-भाट्ट, १६ शा-बिन्दुः.

५० आम्नाताद्न्यदधिकारे वचनाद्विकारः स्यात् । ४९ वृ, ४३ य, १६ बिन्दुः.

५१ द्वैधं वा तुल्यहेतुत्वात् सामान्याद्विकल्पः स्यात् । ५० वृ, ४४ य.

५२ उपदेशाच्च साम्नः । ५१ वृ, ४५ य.

५३ नियमो वा श्रुतिविशेषादितरत् साप्तदश्यवत् । ५२ वृ, ४६ य.
अधि० १९, २१ मण्डनः, १८, म-सा-भाट्ट, १७ शा-बिन्दुः.

५४ अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् । ५३ वृ, ४७ य, १७ बिन्दुः.

५५ यत्स्थाने वा तद्-गीतिः स्यात् पदान्यत्वप्रधानत्वात् । ५४ वृ, ४८ य.

५६ गानसंयोगाच्च । ५५ वृ, ४९ य.

५७ वचनमिति चेत् । ५६ वृ, ५० य.

---

अधि० १७ सारस्वत्यां मेष्यां अध्रिगुवचनाभाव इति म-सा-बिन्दु-वृ । सारस्वत्यां मेष्यां अध्रिगुवचनानूहः इति वि-भाट्ट-शा-ल । सारस्वत्यां मेष्यां अध्रिगुप्रैषस्य प्रवृत्त्यभावः इति भा । कृत्वा चिन्तेयं इति चोक्तं भाष्ये ।

सू० ४५ (१) निर्देशात् इति ल ।

सू० ४८ (१) चैकशब्दात् इति-लटि-चौ । चैकशः स्यात् इति टुप् । वैक इति टी ।

अधि० १८ यज्ञायज्ञीये गिराशब्दस्य स्थाने इरापदस्यैव कर्तव्यता इति म-सा । यज्ञायज्ञीये गिराशब्दस्य स्थाने इराशब्दस्यैव कर्तव्यता इति वि-शा । यज्ञायज्ञीये गिरापदस्थाने इरापदस्यैव कर्तव्यत्वं इति बिन्दु-वृ । यज्ञायज्ञीये गिराशब्दस्थाने इराशब्दस्य प्रयोगः इति भाट्ट । यज्ञायज्ञीये गिराशब्दस्थाने इराशब्दकर्तव्यता इति ल । यज्ञायज्ञीये नित्यं इरापदस्य गिरापदबाधकत्वं इति भा । अत्र प्रबलकारणं विनैव अक्षरादिपरिवर्तनोत्साहः प्रदर्शितः संपादकैः ।

सू० ५० (१) नात्ताद्विका इति बिन्दु-य ।

सू० ५१ (१) मान्नाविक इति वि-शा । साम-र्थ्याद् विक इति य ।

अधि० १९ इरापदस्य प्रगीतता इति भा-भाट्ट भिन्नेषु । इरापदं प्रगीतं प्रयोक्तव्यं इति भाट्ट । गिरापदस्थानापन्ने इरापदे गानकर्तव्यता इति भा ।

सू० ५४ (१) अप्रमाणा इति चौ । (२) देशात् इति बिन्दु-य ।

सू० ५५ (१) म-पुस्तके टिप्पणी " तद्गीतिः स्यात् ' इति सर्वत्रैव पुस्तके पाठो न सम्यगिव प्रतिभाति " इति । तद् इति पदं नपुंसकं गीतिः इति पदं च स्त्रीलिङ्गं इति विशेषणविशेष्यभावविरोध इति संपादकाभिप्रायः । परंतु भाष्यादर्शनमूलकः सः । ' यस्य पदस्य स्थाने इरापदं प्रयुज्यते तस्य पदस्य या गीतिः सा इरापदे स्यात् " इति हि भाष्यम् । तथाच ' तद्गीतिः ' इति न समानाधिकरणं पृथक् पदद्वयं किंतु षष्ठीतत्पुरुषोऽयम् इति युक्त एव तथा पाठः ।

सू० ५७ (१) चेदन्तमुत्तरेणैकं य ।

पृ. १६६ * श्रीगंगानाथझामहोदयैः युक्तता इति मुद्रितं तदशुद्धम् । एकयुक्ता विंशतिः न्यायाः स्थिराः इति हि श्लोकचरणान्वयः । एकयुक्ता इति पदं न्यायपदस्य विशेषणत्वेन स्वीकृतं इति तैर्विसर्गो भ्रान्त्या स्वीकृतः । अथवा विंशतिरेकयुक्ता इत्येकमेव पदं न्यायपदस्य विशेषणत्वेन तैर्गृहीतं स्यात् ।

५८ न तत्प्रधानत्वात् । ५७ वृ, ५० य.

॥ न्यायाः स्थिरा विंशतिरेकयुक्ता * ॥
॥ अत्र अर्थोक्ता अभिधर्मः अर्थाभि पशुत्वं च पञ्चाशत् ॥

॥ इति नवमाध्यायस्य प्रथमः पादः ॥

*  *  *  *

॥ अथ नवमाध्यायस्य द्वितीयः पादः ॥

अधि० १, १–२ मण्डनः.

१ सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ।

२ तदुक्तदोषम् ।

अधि० २, ३ मण्डनः.

३ कर्म वा विधिलक्षणम् । २ भिन्दुः.

४ तदृग्द्रव्यं वचनात् पाकयज्ञवत् ।

५ तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ।

६ शब्दार्थत्वात्तु नैवं स्यात् ।

७ परार्थत्वाच्च शब्दानाम् ।

८ असंबन्धश्च कर्मणा, शब्दयोः पृथगर्थत्वात् ।

९ संस्कारश्चाप्रकरणेऽग्निवत् स्यात् प्रयुक्तत्वात् ।

१० अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ।

११ आश्रितत्वाच्च ।

१२ प्रयुज्यत इति चेत् ।

१३ ग्रहणार्थं प्रयुज्येत । १२ य.

अधि० ३, ४ मण्डनः.

१४ तृचे स्याच्छ्रुतिनिर्देशात् । १३ य, ३ भिन्दुः.

१५ शब्दार्थत्वाद् विकारस्य । १४ य.

१६ दर्शयति च । १५ य.

१७ वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिः स्यात्, संस्कारस्य तदर्थत्वात् । १६ य.

१८ तथा चान्यार्थदर्शनम् । १७ य.

१९ अनवानोपदेशश्च तद्वत् । १८ य.

२० अभ्यासेनेतरा श्रुतिः । १९ य.

अधि० ४, ५ मण्डनः.

---

अधि० १ अत्राधिकरणे वर्णकद्वयम् । द्वितीयं तु वर्णकं द्वितीयाधिकरणत्वेन मण्डनाचार्योऽग्रहीत् । द्वितीयवर्णकस्य शीर्षकं तु ऊहग्रन्थस्य पौरुषेयत्वं इति भ–सा–वि–वृ–भा । ल–पुस्तके तु प्रथमाधिकरणे एव गीतीनां सामनामत्वे, ऊहग्रन्थस्य पौरुषेयत्वे च क्रमेण वर्णकद्वयात्मकमधिकरणं इति ।

गीतीनां सामनामता इति भा–भिन्नेषु । सामादिशब्दानां गीतिवाचित्वं इति भा ।

सू० ४ ( १ ) तत् ऋग्द्रव्यं इति पदद्वयमसमस्तं भा–मूलाद्भाति । वृ–मूले त्वेकपद्यम् । तत्र तदृक् इति विशेषणपूर्वपदः कर्मधारयः, तस्य च द्रव्यपदेन उपमानोत्तरपदः कर्मधारयः इति तत्र स्पष्टम् । परंतु ऐकपद्यपक्षे एकप्रसक्ताभक्तप्रसङ्गात् भाष्यसंमतपदद्वयपक्ष एव युक्त इति मन्यामहे ।

सू० ५ (१) रश्च प्र इति ल । रस्तु प्र इति य ।

सू० ११ ( १ ) अश्रि इति सा–पाठस्तु हस्तदोषात् ।

सू० १२ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० १३ ( १ ) प्रतीयेत इति वृ–ल । प्रयुज्यते इति शङ्कायां ' ग्रहणार्थं प्रयुज्येत ' इत्येवोत्तरं युक्तं न विजातीयेन प्रतीयेतेति पदेन ।

अधि० ३ तृचे प्रत्यृचं कृत्स्नसाम्नः समापनं इति भा–भाट्टभिन्ने । तृचे प्रत्यृचं साम्नः समापनं इति भाट्ट । तृचे गेयस्य साम्नः प्रत्यृचं परिसमापनं इति भा ।

अधि० ४ तदभ्यास इत्यादिसूत्रद्वयेन चतुर्थमधिकरणं, नैमित्तिकमित्यादिसूत्रद्वयेन च पञ्चममधिकरणं, तदभ्यास इत्यादिभिश्चतुर्भिः सूत्रैर्वर्णकान्तरं च । इदं च वर्णकान्तरं मण्डनाचार्येण सप्तमाधिकरणत्वेन स्वीकृतम् । अथ शीर्षकं, समास्वेव तिसृषु ऋक्षु गानं इति भा–भाट्टभिन्ने । तिसृषु

२१ तदभ्यासः समासु स्यात्। २० य. ४ बिन्दुः.

२२ लिङ्गदर्शनाच्च । २१ य.

अधि० ५, ६–७ मण्डनः.

२३ नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत । २२ य, ५ बिन्दुः.

२४ ऐकार्थ्याच्च तदभ्यासः । २३ य.

अधि० ६, ८ तः ११ मण्डनः.

प्रत्येकं गीयमानं साम समास्वेव गेयं इति भाट्ट । शीर्षकद्वयेऽप्यत्र समत्वं किं स्वरूपमिति न ज्ञायते । समानच्छन्दस्कास्वेव तिसृषु ऋक्षु गानं इति भा-शीर्षकं तु साधीयः ।

सू० २१ ( १ ) मासः स्यात् इति ल ।

अधि० ५ उत्तरयोर्गायति इत्यत्र उत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणं इति म-सा । उत्तरयोर्गायति इत्यत्र उत्तराग्रन्थस्थयोर्ऋचोर्ग्रहणं इति वि-शा । उत्तराग्रन्थपठितयोरेवोत्तरयोर्ऋचोर्ग्रहणं इति भाट्ट । उत्तरयोर्गायति इत्यत्र उत्तराग्रन्थाधीतयोरेव ऋचोर्ग्रहणं इति बिन्दुः । उत्तरयोर्गायति इत्यत्र उत्तराग्रन्थपठितयोरेव ऋचोर्ग्रहणं इति वृ । उत्तराग्रन्थस्थयोर्ऋचोरेव उत्तरयोर्गायति इत्यत्र ग्रहणं इति ल । उत्तराशब्देन उत्तराग्रन्थपठितानामेव ऋचामुपादानं इति भा ।

संपादकानां श्रौतपाण्डित्यसर्वस्वमत्र द्रष्टव्यं वाचकवर्यैः । नवसु ग्रन्थेषु एकार्थान्येवापि शीर्षकाणि सप्तसंख्याकानि पदभेदमात्रेण । तथाच ‘ आठ भय्ये नऊ चुली ’ इति न्यायोऽत्र पूर्णतया प्रतीयते । प्रथमतः म-सा पुस्तकयोः समधीतयोः इति पदं, पठितयोरिति वृत्तौ, स्थयोः इति वि-शा, अधीतयोः इति बिन्दौ । भा-शीर्षके तु पठितानामृचां इति बहुवचनं न युक्तं, ‘ उत्तरयोर्गायति ’ इति विषयवाक्ये द्विवचनस्यैव सत्त्वात् । सर्वथाऽपि महदेव पाण्डित्यं प्रकटितमत्र उत्तरोत्तरैः शीर्षकरचनाचातुरीचतुरैर्विचारकैः ।

अथ द्वितीयवर्णके-अतिजगत्यामभ्यस्यमानायां त्रिशोकगानं इति म-सा-वि । त्रैशोकगानं इति विशेषः वृ । इदं सर्वं सिद्धान्तविरुद्धम् । त्रैशोकसाम्नः उत्तराग्रन्थपठितयोर्बृहत्योरेव गानं इति भा-शीर्षकं तु सिद्धान्तरूपम् ।

सू० २३ ( १ ) तीयेत इति शा-दुर् ।

सू० २२

अधि० ६ अत्र वर्णकचतुष्टयं अधिकरणचतुष्टयत्वेन स्वीकृत्य गणितं मण्डनाचार्येण । तानि च अष्टमादीनि चत्वार्यधिकरणानि । तत्र प्रथमवर्णके शीर्षकं, बृहतीपङ्क्त्योरेव प्रग्रथनेन रथंतरस्य गानं इति म-सा-बिन्दुः । ग्रथनं चान्यत् प्रग्रथनं चान्यत् । पुष्पाणां ग्रथनेन माला निष्पद्यते । शस्त्रस्तोत्रविषये तु द्वयोर्ऋचोस्तिसृणां वा ऋचां पादशोऽर्धर्चशो वा यन्मिश्रीकरणं तत् प्रग्रथनं नाम । तत्र रूढोऽयं शब्दः । तथा च ग्रथन-शब्दप्रयोगो नैव युक्तः । अथ बृहतीपङ्क्त्योरेव प्रगाथेन रथंतरस्य गानं इति वि-भाट्ट । अत्र प्रगाथशब्दः प्रयुक्तोप्ययुक्त एव । प्रग्रथिष्यमाणस्य ऋग्द्वयस्य ऋक्त्रयस्य च प्रगाथ इति नाम रूढं यौगिकं च । ऋक्संहितायां पञ्च शतानि प्रगाथाः इति हि प्रसिद्धम् । अथ बृहतीपङ्क्त्योरेव प्रग्रथनेन रथंतरस्य गानं इति शा-वृ-ल । बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितककुभोरेव गानं इति भा । अथ द्वितीये वर्णके, बृहतीविस्तारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजयसाम्नोर्गानं इति म-सा-वि । अत्र विस्तारशब्दः अशुद्धः । बृहतीविष्टारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजयसाम्नोर्गानं इति वृ-ल । बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानं इति भा । अथ तृतीये वर्णके, अनुष्टुब्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोर्गानं इति म-सा-वि-वृ-ल । अनुष्टुब्गायत्रीद्वयप्रग्रथनेन संपादिते आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानं इति भा । म-सा-शीर्षके अनुष्टुब्गायत्र्योः इति द्विवचनमशुद्धम् । एका अनुष्टुप् द्वे गायत्र्यौ, तासां प्रग्रथनेन इति वास्तविकोऽर्थः । अथ चतुर्थे वर्णके, पादप्रग्रथनेन अग्न्यासामगानं इति म-सा-वि-वृ-ल ।

२५ प्रागाथिकं तु । २४ य, ६ बिन्दुः.
२६ स्वे च । २५ य.
२७ प्रगाथे च । २६ य.
२८ लिङ्गदर्शनाऽव्यतिरेकाच्च । २७ य.
अधि० ७-८, १२ तः १५ मण्डनः.
२९ अर्थैकत्वाद् विकल्पः स्यादृक्सामयो-स्तदर्थत्वात् । २९-३० य-भिन्ने सर्वत्र, २८-२९ य, ७ भाट्ट-बिन्दुः.
३० वचनाद्वा विनियोगः स्यात् । ३१ य-भिन्ने सर्वत्र.
अधि० ९, १६ मण्डनः, ८ भाट्ट-बिन्दुः.

---

गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन ब्रह्मसामगानं इति भा-शीर्षकमेव साधीयः ।

सू० २५ ( १ ) प्रागाथादिकं तु इति वि ।

अधि० ७-८ अत्र बिन्दु-भिन्नेषु सर्वेषु भादि-पुस्तकेषु 'अर्थैकत्वाद् विकल्पः स्यात्' इति पृथक्त्वेन एकोनत्रिंशं सूत्रं मुद्रयित्वा सप्तममधिकरणं नाम स्वीकृतम् । य-पुस्तकयोस्तु इदमष्टाविंशं सूत्रमिति विशेषः । पुनश्च 'अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात्' इत्येतत्स्वरूपं त्रिंशं सूत्रं मुद्रयित्वा एतदादिसूत्रद्वयेन अष्टममधिकरणं स्वीकृतम् वयं तु मन्यामहे अर्थैकत्वात् इत्यारभ्य तदर्थत्वादित्यन्तमेकमेव सूत्रम् । तत्रत्यं स्यादन्तं भागं पृथक् कृत्वा आदावेव भाष्यकारैः प्रथमं वर्णकमारचितम् । पुनश्च तदेव सर्वं सूत्रं उत्तरं चेति द्वाभ्यां द्वितीयं तृतीयं चतुर्थं चेति वर्णकत्रयमारचितम् । तत्र सूत्रद्वयात्मकं द्वितीयं वर्णकं अष्टमाधिकरणत्वेन स्वीकृतम् । आभ्यामेव च द्वाभ्यां सूत्राभ्यां पुनरपि वर्णकद्वयं भाष्ये आरचितम् । एवं च अर्थैकत्वात्० वचनात्० इति सूत्रद्वये चत्वारि वर्णकानि सन्तीति ज्ञेयम् । एतान्येव चत्वारि वर्णकानि मण्डनाचार्येण अधिकरणचतुष्टयत्वेन स्वीकृतानि ।

अथ भा-मुद्रणानुसारेण सप्तमाधिकरणे शीर्षकं, गीति-सपादकानामक्षरविकारादीनां विकल्पः इति म-सा-वृ । गीतिसंपादकाक्षरविकारादीनां विकल्प इति वि-शा-ल । शाखाभेदेन सामप्रकारभेदानां विकल्पः इति भाट्ट । गीत्युपायानां शाखाभेदेन समाम्नातानां विकल्पः इति भा ।

अष्टमे अधिकरणे अस्मत्कल्पनया द्वितीये वर्णके ऋचा स्तुवते साम्ना स्तुवते इति विधिना साम्नैव स्तवविधानं इति म-सा । साम्नैव स्तवविधानं इति वि-ल । साम्नैव स्तवनं इति शा । साम्ना स्तुवते इत्यस्यैव विधित्वं इति बिन्दु-वृ । अयुक्तमिदं, नहि अन्यस्य कस्यचिद्विधित्वं शङ्कितं येन 'तस्य न विधित्वं किंतु साम्ना स्तुवते इत्यस्यैव' इति प्रतिपादनमावश्यकं स्यात् । साम्ना स्तुतिः न केवलया ऋचा इति हि बिन्दुमूले सिध्दान्तग्रन्थः । तथापि कथं चित् ऋचा स्तुवंत इत्यस्य न विधित्वं किंतु साम्ना स्तुवते इत्यस्यैव इत्यर्थग्रहणेन यथाश्रुतं संगमनीयम् । प्रगीताया एव ऋचो वैकृतापूर्वस्तोत्रसाधनत्वं इति भा । अथ उत्तरवर्णके, अयं सहस्रमानव इति ऋचा प्रगीतयैव आहवनीयोपस्थानं इति म-सा । प्रगीतयैव ऋचा वह्न्युपस्थानं इति वि-ल । अयं सहस्र इति ऋचा प्रगीतयैवोपस्थानं इति वृ । विकृतिविशेषे प्रगीतयैव ऋचा आहवनीयोपस्थानं इति भा । अथ अन्तिमे वर्णके, अग्निर्मूर्धेत्यादियाज्यानुवाक्यादीनां तानेन प्रयोगः इति म-सा । याज्यानुवाक्यादीनां तानेन प्रयोगः इति वि-बिन्दु-ल । अग्निर्मूर्धेत्यादियाज्यादीनां तानेन विनियोगः इति वृ । अत्र विनियोगशब्दो न युक्तः, प्रयोग इत्येव वक्तव्यम् । ऋग्यजुर्मन्त्राणां तानस्वरेण कर्मणि प्रयोगः इति भा ।

सू० २९ ( १ ) स्तत्परत्वात् इति बिन्दु-य ।

सू० ३० ( १ )नाद्विनि इत्येव सर्वत्र । परंतु अस्य सिध्दान्तसूत्रत्वात् वाशब्द आवश्यकः । अत एव भाष्ये 'नैतदस्ति विकल्प इति" इति वाशब्दार्थ एवोक्तः ।

अधि० ९ रथंतरमुत्तरयोर्गायति इत्यादौ उत्तरावर्णवशेन गानं इति म-सा-बिन्दु-वृ । उत्तरावर्णवशेन गानं इति वि-शा-ल । इदं क्व इति नोक्तमिति अर्थन्यूनता । उत्तरादौ एकारे एव आईभावः

३१ सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् । ३२य–भिन्ने सर्वत्र, ८ बिन्दुः.

३२ वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् । ३३ य–भिन्ने सर्वत्र.

अधि० १०, १७ मण्डनः, ९ भाट्ट–बिन्दुः.

३३ स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् । ३४ य–भिन्ने, ९ बिन्दुः.

३४ सर्वातिदेशस्तु सामान्याल्लोकवद् विकारः स्यात् । ३५ य– भिन्ने.

३५ अन्वयं चापि दर्शयति । ३६ य–भिन्ने.

३६ निवृत्तिर्वाऽर्थलोपात् । ३७ य–भिन्ने.

३७ अन्वयो वाऽर्थवादः स्यात् । ३८ य–भिन्ने.

अधि० ११, १८ मण्डनः, १० भाट्ट–बिन्दुः.

३८ अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् । ३९ य–भिन्ने, १०बिन्दुः.

अधि० १२, १९ मण्डनः, ११ भाट्ट–बिन्दुः.

३९ धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनाऽनुबन्धः समवायात् । ४० य–भिन्ने, ११ बिन्दुः.

अधि० १३, २० मण्डनः, १२ भाट्ट–बिन्दुः.

४० तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् । ४१ य–भिन्ने, १२ बिन्दुः.

४१ आवेश्येरन् वाऽर्थवत्त्वात्, संस्कारस्य तदर्थत्वात् । ४२ य–भिन्ने.

४२ आख्या चैवं तदावेशाद् विकृतौ स्यादपूर्वत्वात् । ४३ य–भिन्ने.

अधि० १४, २१ मण्डनः, १३ भाट्ट–बिन्दुः.

४३ परार्थे न त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् । ४४ य–भिन्ने १३ बिन्दुः.

---

इति भाट्ट । योनिसाम्नः उत्तरावर्णवशेन उत्तरयोर्ऋचोर्गानं इति भा ।

सू० ३१ ( १ ) सम इति ल–पाठो न प्राश्यः ।

सू० ३२ ( १ ) था द्र इति च्छित्वा मुद्रितं बृ-सूत्रे, बृ-मूलात्तु ऐकपद्यमेव भाति । अन्यत्र चैकपद्येनैव मुद्रणम् । ( २ ) द्रव्यं व्यति इति य ।

अधि० १० उत्तरयोः स्तोभातिदेशः इति सर्वत्र ।

सू० ३३ ( १ ) न्तरनि इति रत्न ।

सू० ३४ ( १ ) देशात्तु सा इति य–टी ।

अधि० ११ स्तोभलक्षणं इति भा–भिन्ने । स्तोभानां लक्षणं इति भा । बहुवचनस्य नापेक्षाऽत्र, लक्ष्यतावच्छेदकमत्र स्तोभत्वं, तच्चैकम् । आकृत्या च सर्वा व्यक्तयो गृहीता एव भवन्ति । अत्र विस्तरे अधिकरणादौ चानुक्रमण्यां च स्तोभस्थाने स्तोम इत्येव मुद्रितं तदशुद्धम् । प्राचीनकाले किल काचित् धस्य 'मा' अकरोत् इति वदन्ति, वि-संपादकास्तु भस्य 'म' अकुर्वन् । धस्य माकरणापेक्षया भस्य मकरणं सुकरम् ।

अधि० १२ नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठानं इति म–सा–वि–बिन्दु–बृ–ल । नीवारादिषु प्रोक्षणावघातादिधर्माः इति भाट्ट । नीवारादिषु प्रोक्षणावघातानुष्ठानं इति शा । प्राकृतव्रीह्यादिस्थानापन्नेषु नीवारादिषु व्रीह्यादिधर्माणामूहेनानुष्ठानं इति भा । अत्र ऊहेन इति पदमसंबद्धम् ।

सू० ३९ ( १ ) क्रमाप्र इति य ।

अधि० १३ परिधौ यूपधर्मानुष्ठानं इति भा–भाट्टभिन्ने । परिधौ यूपधर्माः इति भाट्ट । परिधौ यूपधर्माणामाक्षेपसमाधानं इति भा । परिधौ यूपधर्मानुष्ठानाक्षेपस्य समाधानं इति तु वक्तव्यम् ।

सू० ४१ ( १ ) वाऽर्थधर्मत्वात् इति य ।

सू० ४२ ( १ ) र्वत्वं इति य ।

अधि० १४ शृतादौ प्रणीताधर्मानुष्ठानं इति भा–भाट्टभिन्ने । शृतादौ प्रणीताधर्माः इति भाट्ट । अभ्युदयेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानं इति भा–शीर्षकमेव साधीयः ।

सू० ४३ ( १ ) र्थे त्व इति शा–सोम–रत्न–सु ( ३।७।४ सूत्रे ) । र्थेन त्व इति म–सा–वि–शाटि–

४४ क्रियेरन् वाऽर्थनिर्वृत्तेः । ४५ य–भिन्ने.

अधि० १५, २२ मण्डनः, १४ भाट्ट–बिन्दुः.

४५ एकार्थत्वादविभागः स्यात् । ४६ य–भिन्ने, १४ बिन्दुः.

४६ निर्देशाद्वा व्यवतिष्ठेरन् । ४७ य–भिन्ने.

अधि० १६, २३ मण्डनः, १५ भाट्ट–बिन्दुः.

४७ अप्राकृते तद्विकाराद् विरोधाद् व्यवतिष्ठेरन् । ४८य –भिन्ने, १५ बिन्दुः.

अधि० १७, २४ मण्डनः, १६ भाट्ट–बिन्दुः.

४८ उभयसाम्नि चैवमेकार्थापत्तेः । ४९ य–भिन्ने, १६ बिन्दुः.

४९ स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतित्वात् । ५० य–भिन्ने.

अधि० १८, २५ मण्डनः, १७ भाट्ट–बिन्दुः.

५० पार्वणहोमयोस्त्वप्रकृतिः समुदायार्थसंयोगात् तदभीज्या हि । ५१ य–भिन्ने, १७ बिन्दुः.

५१ कालस्येति चेत् । ५२ य–भिन्ने.

५२ नाप्रकरणत्वात् । ५३ सर्वत्र, ५१ य.

५३ मन्त्रवर्णाच्च । ५४ सर्वत्र, ५२ य.

५४ तदभावेऽग्निवदिति चेत् । ५५ सर्वत्र, ५३ य.

५५ नाधिकारिकत्वात् । ५६ सर्वत्र, ५३ य.

अधि० १९, २६ मण्डनः, १८ भाट्ट–बिन्दुः.

५६ उभयोरविशेषात् । ५७ सर्वत्र, ५४ य, १८ बिन्दुः.

५७ यदभीज्या वा तद्विषयौ । ५८ सर्वत्र, ५५ य.

अधि० २०, २७ मण्डनः, १९ भाट्ट–बिन्दुः.

---

बिन्दु–चौ । तु–शब्दस्य विद्यमानत्वात् न–शब्दोऽनावश्यक एव भाति । ( २ ) मान्यात् सं इति रत्न ।

सू० ४४ ( १ ) निर्वृत्तेः इति भादौ दुष्टम् ।

अधि० १५ बृहद्रथंतरयोर्धर्मव्यवस्था इति भा–भिन्ने । बृहद्रथंतरधर्माणां व्यवस्थया तत्तत्सामगानकालेऽनुष्ठानं इति भा । भा–भिन्नशीर्षके एकदेशान्वय उद्वेजकः ।

अधि० १६ कण्वरथंतरे बृहद्रथंतरधर्मसमुच्चयः इति भा–भाट्टभिन्ने । कण्वरथंतरे बृहद्रथंतरधर्मसमुच्चयविकल्पौ इति भाट्ट । कण्वरथंतरे अविरुध्दानां बृहद्रथंतरधर्माणां समुच्चयः इति भा । अत्र भाष्यमतेन विरुद्धेषु विकल्पः अविरुद्धेषु तु समुच्चयः, वार्तिकमतेन तु विकल्प एव इति वस्तुस्थितिः । तत्र उभयं गृहीत्वा भाट्ट–शीर्षकं भाष्यसिध्दान्तमेव तु गृहीत्वा भाट्टेतरशीर्षकमिति ज्ञेयम् ।

अधि० १७ द्विसामके बृहद्रथंतरधर्मयोर्व्यवस्था इति म–सा–वृ–ल । धर्मयोः इति द्विवचनं न युक्तम् । द्विसामके बृहद्रथंतरयोर्व्यवस्था इति वि–भाट्ट–शा । द्विसामके बृहद्रथंतरधर्मव्यवस्था इति बिन्दुः । बृहद्रथंतरोभयसामके क्रतौ रथंतरादिधर्माणां प्रकृतिवद् व्यवस्था इति भा ।

अधि० १८ सौर्यादिषु पार्वणहोमाद्यननुष्ठानं इति भा–भिन्ने । अत्र पार्वणहोमादीत्यादिशब्दो व्यर्थः । पार्वणहोमयोर्विकृतौ अनतिदेशः इति भा । अनातिदेशपदापेक्षया नातिदेशः इति पदद्वयनिवेशो युक्तः ।

सू० ५० ( १ ) स्त्ववृत्तिः स इति चौ ।

सू० ५१ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ५४ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० १९ दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्था इति भा–भिन्ने । अत्र होमद्वयस्य इति अतिशिथिलं, होमानां भूयस्त्वात् कयोर्होमयोरिति यतो नोक्तम् । पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानं इति भा ।

अधि० २० समिदादीनां यागनामधेयता इति म–सा–वि–भाट्ट–शा–ल । प्रयाजानामारादुपकारकत्वं इति बिन्दुः । समिदादीनां यागनामता इति वृ । म–सादिशीर्षकं वृ–शीर्षकं च मूलग्रन्थविरुद्धम् । समिदादिपदानां नामधेयत्वेन प्रयाजानामारादुपकारकत्वं इति भा ।

५८ प्रयाजेऽपीति चेत् । ५९ सर्वत्र, ५६ य, १९ बिन्दुः.

५९ नाचोदितत्वात् । ६० सर्वत्र, ५६ य.

॥ न्यायाः स्युः सप्तविंशतिः* ॥

॥ सामानि आश्रितत्वात् लिङ्गा साम आवेश्येरन् कालस्य षट्पञ्चाशत् ॥

॥ इति नवमाध्यायस्य द्वितीयः पादः ॥

* * * *

॥ अथ नवमाध्यायस्य तृतीयः पादः * ॥

अधि० १.

१ प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ।

२ लिङ्गदर्शनाच्च ।

अधि० २ अन्तरागर्भिणी

३ जातिनैमित्तिकं यथास्थानम् ।२ बिन्दुः.

प्रथमाधिकरणशेषसूत्राणि.

४ अविकारमेकेऽनार्षत्वात् । ५वृ-ल.

५ लिङ्गदर्शनाच्च । ६ वृ-ल.

६ विकारो वा तदुक्तो हेतुः । ७ वृ-ल.

---

सू० ५८ (१) चेदन्तमुत्तरेणैकं य ।

* मण्डनाचार्येणात्र पादे सर्वाण्येव वर्णकानि अधिकरणत्वेन गृहीतानि । तेन सप्तविंशतिः संख्या संपन्ना ।

अधि० १ विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहः इति भा-भाट्टभिन्ने । विकृतौ मन्त्रे सूर्यनीवारादिपदानामूहः इति भाट्ट । सौर्यादिविकृतौ अतिदिष्टमन्त्रे वैकृतद्रव्यादिवाचकपदोहः इति भा । अस्मिन् प्रथमेऽधिकरणे तृतीयसूत्रवर्जं प्रथमाद्यष्टमान्तानि सप्तैव, अथवा तृतीयसहितानि सर्वाण्येव अष्टौ सूत्राणि इति ज्ञेयम् । तृतीयसूत्रेण तु अन्तरागर्भिणीरूपमधिकरणं द्वितीयं भाष्ये विकल्पेन स्वीकृतम् ।

सू० १ (१) ततौ इति पदं नास्ति वृ ।

अधि० २ पौण्डरीकेषु हविष्षु स्तरणमन्त्रस्योहः इति म-सा । मैद्रे चरौ 'पौण्डरीकाणि बर्हींषि भवन्ति' इतिश्रुत्या पुण्डरीकनालान्येव सपुष्पाणि बर्हिष्ट्वेन विहितानि । पुण्डरीकं सिताम्भोजं इत्यमरः । तथाचानभिज्ञैः कैश्चित् हविष्षु इत्युक्तं, बर्हिष्षु इति तु वक्तव्यम् । पौण्डरीकेषु बर्हिष्षु स्तरणमन्त्रस्योहः इति वि-भाट्ट-शा । पौण्डरीकहविष्षु स्तरणमन्त्रस्योहः इति बिन्दुः । बिन्दुसंपादकैः म-सा-शीर्षकमेव दृष्टम् । वि-शीर्षकं च 'पौण्डरीकाणि बर्हींषि भवन्ति' इति बिन्दुमूलमपि च न दृष्टं, तेन हविश्शब्दो बर्हिश्शब्दस्य स्थाने प्रयुक्तः । पौण्डरीकेषु हविःप्रस्तरणमन्त्रस्योहः इति वृ । वृ-संशोधकैः मीमांसापण्डितैः कस्मिंश्चिद्यागे पौण्डरीकेषु नाम केषुचित् पदार्थेषु हविषः प्रस्तरणं क्रियते यथा कपालेषु पुरोडाशस्य भर्जनकाले, इति दृष्टं स्यात् । मीमांसकमहापण्डितास्तु प्रायः श्रौतप्रयोगविद्याऽनभिज्ञा एव भवन्ति । यागदर्शनमपि कर्तुं नोत्सहन्ते । यागाभिज्ञताकर्तृतादिकं च याज्ञिकानां कर्म न पण्डितानाम् । याज्ञिका इति च लघ्वी मात्रा । अथ पौण्डरीकेषु बर्हिष्षु स्तरणमन्त्रोहः इति ल । एकदेशान्वयदोषो नैव चिन्तनीय इति संपादकसंप्रदायः । मैद्रे चरौ प्राकृतबर्हिस्स्तरणमन्त्रे हरितपदस्थाने रक्तपदोहः इति भा ।

अत्र प्रायः सर्वग्रन्थेषु तृतीयाद्यष्टमान्तानि सूत्राणि द्वितीयाधिकरणे एव समावेशितानि । यथाशीर्षकं तु तृतीयमेव सूत्रं, वृ-मतेन तु तृतीयचतुर्थे एव सूत्रे द्वितीयाधिकरणस्थे । उत्तराणि तु प्रथमाधिकरणशेषभूतान्येव ।

सू० ३ एतत्सूत्रोत्तरं 'लिङ्गदर्शनाच्च' इत्यधिकं चतुर्थं सूत्रं वृ-ल ।

सू० ४ (१) के ना इति अवग्रहरहितं छित्वा मुद्रणं म-सा । तत्तु न युक्तम् । न आर्षः अनार्षः 'सुप् सुपा' इति समास इति वा समाधेयम् ।

सू० ६ (१) दुक्ते हेतुः इति ल-पाठो न स्वीकार्यः । दुक्तो हेतुः इति वृ । दुक्तहेतु इति य । दुक्तहेतुः इति वृ-ल-यभिन्ने ।

अत्र विचार्यम् । भा-सूत्रपाठे तावत् अत्र च, १२।४।२० इत्यत्र च समानानुपूर्वीकमेव सूत्रं 'विकारो वा तदुक्तहेतुः' इति । "अस्मिन्नर्थे पूर्वोक्तो हेतुः अर्थे चाकार्यत्वात् इति" इति अत्र भा-

७ लिङ्गं मन्त्रचिकीर्षार्थम्। ८ वृ-ल.

८ नियमो वोभयभागित्वात्। ९ वृ-ल.

अधि० ३.

९ लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात्। १० वृ-ल, ३ बिन्दुः.

अधि० ४.

ष्यम्। सौत्रतत्पदस्य 'अस्मिन्नर्थे' इति व्याख्या। तत् तत्र अस्मिन्नर्थे' इत्यर्थः। तेन च 'तत् उक्तः, हेतुः' इति पदत्रयं सिध्यति। तथाच " तदुक्तो हेतुः " इत्येव नवमे सूत्रपाठः स्वीकर्तव्यः। द्वादशे तु " तदेतदुक्तहेतुः, नैमित्तिकं तु प्रकृतौ तद्विकारः इति ' इति भाष्यम्। अत्र 'तदेतत्' इत्यस्य विशेष्यपदत्वात् विशेषणपदस्य उक्तहेतु इत्यस्य नपुंसकत्वमेव युक्तं न पुंलिङ्गत्वम्। पुंलिङ्गमुद्रणं तु अशुध्दम्। अत्र तत् उक्तहेतु इति पदद्वयमेव। उक्तो हेतुर्यस्य तत् उक्तहेतु इति च समासः। तेन " विकारो वा तदुक्तहेतु " इति द्वादशे सूत्रपाठो भाष्यात् सिध्यति। अथ म-सासूत्रपाठे नवमे भा-वत् पाठः। द्वादशे तु ' विकारो वा नित्यस्याग्नेः काम्येन तदुक्तहेतुः' इति सूत्रपाठः। तद्विषये अधिकं तु तत्रैव वक्ष्यामः। अथ विस्तरे नवमे भा-वत्। द्वादशे तु विकारो वा तदुक्तहेतु इति। भाट्टे म-सा-वत्। शास्त्रदीपिकायां नवमे द्वादशे च समानमेव भा-वत्। वृत्तौ नवमे विकारो वा तदुक्तो हेतुः इति पाठः, द्वादशे तु विकारो वा तदुक्तहेतुः इति पाठः। ल-पुस्तके नवमे विकारो वा तदुक्ते हेतुः इति, द्वादशे च विकारो वा तदुक्तहेतुः इति पाठः। चौ-पुस्तके उभयत्र समानं भा-वत्। य-पुस्तके तु उभयत्रापि विकारोवातदुक्तहेतु इत्येव समानम्। इति।

सू० ७ (१) र्षार्थे इति य।

अधि० ३ अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्तं इति म-सा-वि-भाट्ट-शा। अग्नीषोमीयपशौ लौकिकयूपस्पर्शे प्रायश्चित्तं इति बिन्दु-वृ-ल। लौकिकयूपस्पर्शे पुरुषार्थतया प्रायश्चित्तविधानं इति भा। अत्र सर्वत्र लौकिकशब्दः स्पर्शस्यैव विशेषणं ' लौकिके उपस्पर्शने ' इति भाष्यात्, ' लौकिके स्पर्शे ' इति विस्तरात्।

सू० ९ (१) अलौकिके दोषसंयोगा इति य। लौकिके दोषप्रसङ्गा इति वृ। (२) चोद्यते तेन प्रकृतौ स्यादजामित्वं इति रत्न। परंतु भाष्यवार्तिकयोर्नेदं दृश्यते। (३) प्रकृतेनस्या इति य। (४) दविभा इति बिन्दुः।

अधि० ४ द्विपशुयागे पाशमन्द्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तेनोहः इति म-सा। अत्र मन्त्रशब्दस्य स्थाने मन्द्रशब्दस्य प्रयोगोऽनवधानात्। पदयोः इत्यपेक्षया पाशपदयोः इति निवेशो युक्तः कर्तुं स्पष्टत्वाय। एतं एतान् इति तत्रत्यतादृशपदयोर्विशेषणत्वात् तयोरपि द्विवचनान्तेनोहः अर्थप्राप्त एव इति तु स्पष्टम्। अदितिः पाशं प्रमुमोक्त्वेतं, अदितिः पाशान् प्रमुमोक्त्वेतान् इति हि तौ मन्त्रौ। इदमुत्तरेष्वपि शीर्षकेषु द्रष्टव्यम्। अथ द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तयोर्द्विवचनान्तेनोहः इति वि-शा। अत्र पदशब्दलोपाल्लाघवम्। द्विपशुकयागे पाशमन्त्रे द्विवचनोहः इति भाट्ट। अयं संक्षेपः साधीयान्। द्विपशुयागे पाशमन्त्रयोरेकवचनान्तव (वद् इत्यनुक्रमण्याम्) द्विवचनान्तपदयोर्द्विवचनान्तेनोहः इति बिन्दुः। अत्रत्यद्वितीयशीर्षके एकवचनवत् इति दृष्टान्तः। परंतु तद्विषयेऽपि ऊहस्य अत्रैव साधनीयत्वात् एकवचनोहस्य दृष्टान्तता न घटते। सिद्धो हि दृष्टान्तो भवति। किंच द्विवचनान्तयोरेव सतोः पदयोः पुनर्द्विवचनान्तेन कीदृश ऊहः ? प्रथमशीर्षकं तु अशुध्दमेव। ननु ' एकवचनान्त व द्विवचनान्त ' एतावान् भागः मराठीभाषामयो, ज्ञातव्यः। तत्रापि ' व ' शब्दः ' अपिच ' इत्यर्थकः परीयन्-भाषास्थो ज्ञेयः। पदयोर्द्विवचनान्तेनोहः इति भागस्तु संस्कृतभाषामयः इति स्वीकारे प्रथमशीर्षकमपि शुद्धमेवेति चेत्। बाढम्। मन्द्रशब्दस्य स्थाने मन्त्रशब्दे पठिते शेषं म-सा-वत् वृ। द्विपशुयागे

१० अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वाद्विशेषाच्च तेनास्य। ११ वृ-ल,४ बिन्दुः.
११ विकारो वा तदर्थत्वात्। १२ वृ-ल.
१२ अपित्वन्यायसंबन्धात् प्रकृतिवत् परेष्वपि यथार्थं स्यात्। १३ वृ-ल.
१३ यथार्थं त्वन्यायस्याचोदितत्वात्। १४ वृ-ल.
१४ छन्दसि तु यथादृष्टम्। १५ वृ-ल.

अधि० ५.

१५ विप्रतिपत्तौ विकल्पः स्यात् समत्वात्, गुणे त्वन्यायकल्पनैकदेशत्वात्। १७ वृ-ल, १४ य, ५ बिन्दुः.
१६ प्रकरणविशेषाच्च। १८ वृ-ल, १५ य.

---

पाशमन्त्रयोरेकवचनान्तबहुवनान्तयोर्द्विवचनेनोहः इति ल। द्विपाशिकायां विकृतौ एकवचनान्तबहुवचनान्तपाशमन्त्रयोः द्विवचनान्तेनोहः इति भा। अशुद्धताऽत्र संपन्ना। नहि मन्त्रौ एकबहुवचनान्तौ किंतु तत्रत्यौ पाशादिशब्दौ। एतदधिकरणशीर्षकसंपादकैर्व्यर्थमेव म-साशीर्षके विपरिवर्तनं कृतं विना मन्त्रशब्दम्।

सू० १० (१) रेण दृ इति वृ। वृ-मूलानुसारी एव वृ-सूत्रपाठोऽत्र। "नास्य एकस्मिन् पाशे प्रवर्तमानस्य दृष्टः प्रतिघातः" इति भाष्यात्तु रेणादृ इत्येव पाठः सिध्यति। तेन सुबोधिनीभाष्ययोः सूत्रपाठे मतभेद एव। य-पाठस्तु भाष्यानुसार्येव।

सू० १२ (१) न्याय्यसं इति वृ। दशमसूत्रानुसारेण तु अत्रापि अन्याय शब्द एव युक्तः। अन्याय्यशब्दो वोभयत्र। अर्धजरतीयं तु न युक्तम्।

सू० १३ (१) न्याय्यस्या इति वृ। एतेन दशमसूत्रेऽपि अन्याय्यशब्द एव वृ-मतेन युक्तः सिध्यति।

सू० १४ एतत्सूत्रोत्तरं 'अन्याय्यस्याचोदितत्वात्' इत्यधिकं षोडशं सूत्रं वृ-मतेन चतुर्दशाद्भिन्नम्। अन्यायस्य इति पाठभेदेन ल-पुस्तकेपि तथा। नास्तीदं सूत्रं य। अत्र भाष्ये "यथार्थं त्वन्यायस्याचोदितत्वात्" इति त्रयोदशसूत्रस्थं 'यथार्थं तु' इति भागं व्याख्याय "तस्मादूहेन द्वयोः पाशयोः बहुवचनान्त एकवचनान्तो वा प्रयोक्तव्यः" इत्युपसंहृत्य 'छन्दसि तु यथादृष्टं' इति चतुर्दशं सूत्रमवतार्य व्याख्यातम्। ततः 'यदुक्तं चोदकेनाभिधानविप्रतिपत्तिश्चोद्यते इति। नैतदेवं' इत्यवतार्य 'अन्यायस्याचोदितत्वात्' इति त्रयोदशसूत्रस्यावयवो गृहीत्वा व्याख्यातः। तत्रैव चाधिकरणं समापितम्। एतेन 'अन्यायस्याचोदितत्वात्' इति वाक्यं त्रयोदशसूत्रावयव एव न पृथगधिकं सूत्रं इति सिध्यति। एकसूत्रव्याख्याया मध्ये एव सूत्रान्तरं सव्याख्यं उपन्यस्तं इति तु विशेषः। भाष्यकाराणां व्याख्यानपद्धतिरेतादृशी अपि भवति इति ज्ञायते। एतेन ३।१।५ इति जैमिनिसूत्रीयभाष्ये 'न देवानां देवतान्तराभावात्' न ऋषीणामार्षेयाभावात्' इत्यपि सूत्रद्वयं शाबरमतेनापि सेत्स्यतीति ज्ञातव्यम्। ल-वत् सूत्रान्तरं वा ज्ञेयम्।

अधि० ५ अग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्द्रयोर्विकल्पः इति म-सा। अत्र मन्द्रयोः इत्यस्य स्थाने मन्त्रयोः इति द्रष्टव्यम्। तदेव शीर्षके मन्त्रयोः इति शुद्धं कृतं वि-शा-वृ। अग्नीषोमीयपशौ एकवचनान्तबहुवचनान्तपाशमन्त्रयोर्विकल्प इति भाट्ट। अत्र किंचिदशुद्धं मन्त्रयोरेकबहुवचनान्तत्वाभावात्। पाशपदस्यैव तथात्वात्। अग्नीषोमीयपशौ पाशैकत्वबहुत्वाभिधायिमन्त्रयोर्विकल्पः इति बिन्दु-ल। बहुवचनान्तपाशमन्त्रस्य विकल्पेन प्रकरणे एव निवेशः इति भा।

सू० १५ (१) स्यात्तत्सम इति वृ-ल। (२) न्याय्यक इति बिन्दु-वृ-य।

सू० १६ एतत्सूत्रोत्तरं उत्कर्षो वा द्वियज्ञवत् इति अधिकं सूत्रं वृ-ल। य-पुस्तकेऽपि इदं वर्तत एव, किंतु उत्तरसूत्रेणैकतां गतम्। भाष्येऽपि "उत्कर्षो वा द्वियज्ञवदिति यदुक्तं तत् परिहर्तव्यं" इति पङ्क्तिः अर्थाभावात्तु इत्यादिसूत्रावतरणत्वेन

१७ उत्कर्षो वा द्वियज्ञवत् । १९ वृ—ल, १६ अन्यत्र.

१८ अर्थाभावात्तु नैवं स्याद् गुणमात्रमितरत् । २० वृ—ल, १७ अन्यत्र, १६ य.

१९ द्यावोस्तथेति चेत् । २१ वृ—ल, १८ अन्यत्र, १७ य.

२० नोत्पत्तिशब्दत्वात् । २२ वृ—ल, १९ अन्यत्र, १७ य.

अधि० ६.

२१ अपूर्वे त्वविकारोऽप्रदेशात् प्रतीयेत । २३ वृ—ल, २०अन्यत्र, १८ य, ६ बिन्दुः.

अधि० ७.

२२ विकृतौ चापि तद्वचनात् । २४ वृ—ल, २१ अन्यत्र, १९ य, ७ बिन्दुः.

अधि० ८.

२३ अध्रिगौ सवनीयेषु तद्वत् समानविधानाश्चेत् । २५ वृ—ल, २२ अन्यत्र, २० य, ८ बिन्दुः.

अधि० ९.

२४ प्रतिनिधौ चाविकारात् । २६ वृ—ल, २३ अन्यत्र, २१ य, ९ बिन्दुः.

---

वर्तते । तस्मात् सूत्रमेवैतत् भाष्यसंमतं इति मन्यामहे । एतादृशी च रीतिः भाष्येऽन्यत्रापि भवति यथा ९।३।३७ सूत्रे भा-म-सापुस्तकेषु ।

सू० १९ (१) द्यावापृथिव्योस्तथेति चेत् इति य । (२) चेदन्तमुत्तरेणैकं य ।

अधि० ६ दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे पत्नीं संनह्य इति मन्द्रस्यानूहः इति म-सा । मन्द्रस्येत्यशुद्धम् । मन्त्रस्येति संस्कृत्य तदेव शीर्षकं वि-शा-वृ-ल । द्विपत्नीके प्रकृतिप्रयोगे पत्नीशब्दे द्विवचनानूहः इति भाट्ट । द्विपत्नीके दर्शपूर्णमासे पत्नीं संनह्य इत्यस्यानूहः इति बिन्दुः । दर्शपूर्णमासे इति सर्वथा अशुद्धम् । दर्शपूर्णमासयोर्द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहः इति भा । पत्नीमन्त्रस्य इत्ययुक्तम् ।

सू० २१ (१) प्रतीयते इति चौ ।

अधि० ७ द्विपत्नीके विकृतियागेऽपि पत्नीं संनह्य इति मन्त्रस्यानूहः इति म-सा । द्विपत्नीकविकृतियागेऽपि पत्नीं संनह्येति मन्त्रस्यानूहः इति वि-शा । द्विपत्नीके विकृतियागेऽप्यनूहः इति भाट्ट । विकृतियागेऽपि द्विपत्नीके मन्त्रानूहः इति बिन्दुः । द्विपत्नीके विकृतियागेऽपि मन्त्रस्यानूहः इति वृ । भाट्ट-बिन्दु-वृशीर्षकाणि भ्रमजनकत्वादयुक्तानि निरर्थकानि च । विकृतावपि द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्याविकारः इति भा । पत्नीमन्त्रशब्दो भ्रमजनकः । पत्न्या पठ्यमानो मन्त्रोपि पत्नीमन्त्र एवेति । वस्तुतस्तु सर्वशीर्षकेषु अत्र 'पत्नीं संनह्य इत्येकवचनस्यानूहः' इत्येव वक्तव्यम् ।

सू० २२ (१) तौ वाऽपि इति य ।

अधि० ८ सवनीयपशूनां अग्नीषोमीयसमानविधानत्वे प्रास्मै अग्निं इति मन्त्रेऽनूहः इति म-सा-वि-शा-ल । सवनीयपशूनां अग्नीषोमीयसमानविधानत्वे प्रास्मै इत्यत्रानूहः इति भाट्ट । सवनीयपशूनां समानविधानत्वे प्रास्मा अग्निं इति मन्त्रेऽनूहः इति बिन्दु-वृ । एषु सवनीयपशूनां इति बहुवचनमनुपयुक्तम् । बिन्दु-शीर्षके च केन समानविधानत्वमित्यनुक्तत्वात् न्यूनार्थत्वदोषः । पशुधर्मसामानविध्यपक्षे प्रास्मै इत्यध्रिगुप्रैषस्याविकारः इति भा ।

सू० २३ (१) अध्रिगुः स इति भाट्ट-म-सा-शा-बिन्दु-वृ-ल-चौ-रत्न । भा-मूले 'अध्रिगौ तद्वत्' इति सौत्रप्रतीकग्रहणात्तु अध्रिगौ इति सप्तम्येव भाष्यसंमता ।

अधि० ९ नीवाराणां व्रीहिप्रतिनित्वे मन्त्रे व्रीहिशब्दस्यानूहः इति म-सा-वि-शा-ल । 'मन्त्रे' इति पदं वर्जयित्वा शेषं म-सावत् भाट्ट । नीवाराणां व्रीहिप्रकृतित्वे व्रीहिशब्दस्यानूहः इति बिन्दु-वृ । अशुद्धमिदम् । अनुक्रमणिकायां 'व्रीहिप्रतिनिधित्वे' इति मुद्रणं तु शुद्धमेव । नीवारादिसदृशप्रतिनिधिप्रयोगे व्रीह्यादिमन्त्रस्याविकारेण प्रयोगः इति भा ।

२५ अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात्। २७ वृ–ल, २४ अन्यत्र, २२ य.

२६ तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात्। २८ वृ–ल, २५ अन्यत्र, २३ य.

२७ उक्तं च तत्त्वमस्य। २९ वृ–ल, २६ अन्यत्र, २४ य.

अधि० १०.

२८ संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्। ३० वृ–ल, २७ अन्यत्र, २५ य, १० बिन्दुः.

२९ लिङ्गदर्शनाच्च। ३१ वृ–ल, २८ अन्यत्र, २६ य.

अधि० ११.

३० एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात्। ३२ वृ–ल, २९ अन्यत्र, २७ य, ११ बिन्दुः.

३१ अविकारो वा बहूनामेककर्मवत्। ३३ वृ–ल, ३० अन्यत्र, २८ य.

३२ सकृत्त्वं त्वैकध्यं स्यादेकत्वात् त्वचोऽनभिप्रेतं तत्प्रकृतित्वात् परेष्वभ्यासेनै विवृद्धावभिधानं स्यात्। ३४ वृ–ल, ३१ अन्यत्र, २९ य.

अधि० १२.

३३ मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात्। ३५ वृ–ल, ३२ अन्यत्र, ३० य, १२ बिन्दुः.

३४ अपिवा द्विसमवायोऽर्थान्यत्वे यथासंख्य प्रयोगः स्यात्। ३६ वृ–ल, ३३ अन्यत्र, ३१ य.

---

सू० २५ (१) तरः स्यात् इति य। (२) स्यात्–पदं नास्ति शा।

अधि० १० द्विपशुयागे सूर्यं चक्षुर्गमयतात् इति मन्त्राणामनूहः इति भा–भाट्टभिन्ने। द्विपशुकयागे सूर्यं ते चक्षुः इत्यादिषु मन्त्रेष्वनूहः इति भाट्ट। अत्र भाट्टसंपादकाः भ्रान्ताः। सूर्यं ते चक्षुः इति मन्त्रो हि नाध्रिगुगतः किंतु चतुर्होतृमन्त्रगतः। अध्रिगुमन्त्रविचारश्चात्र। पशुगणे अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदानामनूहः इति भा।

सू० २८ (१) अत्र अस्थितपरिमाणत्वात् इत्येव च्छेदो नतु आस्थितेत्यादिः।

अधि० ११ द्विपशुयागे अध्रिगुप्रैषे एकधा इत्यस्य शब्दस्याभ्यासः इति म–सा–वि–शा। द्विपशुकयागे अध्रिगुप्रैषे एकधा इत्यस्याभ्यासः इति भाट्ट–ल। द्विपशुके अध्रिगुप्रैषे एकधा इतिशब्दस्याभ्यासः इति बिन्दु–वृ। बहुपशुकयागे किं कर्तव्यमिति नोक्तमिति न्यूनता त्रिष्वपि शीर्षकेषु। पशुगणे अध्रिगुप्रैषे एकधाशब्दस्य यावत्त्वचमभ्यासः इति भा।

सू० ३० (१) स्यात् इत्यन्तमेव सूत्रं म–सा–वि–भाट्ट–भा। स्यादसर्वविषयत्वात् इत्यपि तु शा–सोम–बिन्दु–वृ–ल–य–रत्न। भा–मूले तु 'तस्मादसर्वविषयो भवति अविकृतः शब्दः प्रयुज्यमानः' इत्युक्तम्। तेन शा–सोमादिवदेव सूत्रपाठो भाष्यसंमत इति मन्यामहे।

सू० ३२ (१) त्वं चैक इति ल। (२) सेनैव वि इति वृ–लसूत्रे। वृ–मूले तु एवकारो न दृश्यते।

अधि० १२ द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहः इति म–सा–वि–शा–वृ–ल। द्विपशुविकृतौ देवतानुसारेण मेधपतिशब्दस्योहः इति भाट्ट। द्विपश्वादिविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहः इति बिन्दुः। अध्रिगुप्रैषगतमेधपतिशब्दस्य देवतापरत्वं इति भा।

सू० ३३ (१) तस्यान्याय इति वृ–ल–य। (२) न्याय्यानि इति बिन्दु–रत्न। (३) बाधिका इति बिन्दुः।

सू० ३३

३५ स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्या द्वितीयशब्दः स्यात् । ३७ वृ-ल, ३४ अन्यत्र, ३२ य.

३६ देवता तु तदाशीष्ट्वात् संप्राप्तत्वात स्वामिन्यनर्थिका स्यात् । ३८ वृ-ल, ३५ अन्यत्र, ३३ य.

३७ उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् । ३९ वृ-ल, ३६ अन्यत्र, ३४ य.

३८ उत्कृष्येतैकसंयुक्तो द्विदेवतेऽसंभवात् । ४० ल, ३७ वृ-भिन्ने, ३५ य.

३९ ऐकस्तु समवायात् तस्य तल्लक्षणत्वात् । ४० वृ, ४१ ल, ३८ अन्यत्र, ३६ य.

४० संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् । ४१ वृ, ४२ ल, ३९ अन्यत्र, ३७ य.

४१ एकत्वेऽपि गुणानपायात् । ४२ वृ, ४३ ल, ४० अन्यत्र, ३८ य.

अधि० १३.

४२ नियमो बहुदेवते विकारः स्यात् । ४३ वृ, ४४ ल, ४१ अन्यत्र, ३९ य, १३ बिन्दुः.

४३ विकल्पो वा प्रकृतिवत् । ४४ वृ, ४५ ल, ४२ अन्यत्र, ४० य.

अधि० १४,

४४ अर्थान्तरे विकारः स्याद् देवतापृथक्त्वादेकाभिसमवायात् स्यात् । ४५ वृ, ४६ ल, ४३ अन्यत्र, ४१ य, १४ बिन्दुः.

॥ पादे चतुर्दश न्याया भाष्यकारेण वर्णिताः ॥
प्रकृतौ विकारोवा, प्रतिनिधौच अपिवा
अर्थान्तरे एकचत्वारिंशत् ॥

॥ इति नवमाध्यायस्य तृतीयः पादः ॥

* * * *

---

सू० ३५ (१) शब्दादु इति चौ । (२) पत्न्या द्वि इति वृ-य । पत्न्यां द्वि इति वृ-यभिन्ने । ६।१।२३ सूत्रे तद्भाष्ये च 'पत्न्या द्वितीयशब्दः' इत्येव पाठः । तथाचात्रापि तृतीयान्तपाठ एव युक्तः । वृ-यपुस्तकयोरुभयत्रापि तृतीयान्तपाठ एवेत्यनुकूलता ।

सू० ३८ (१) युक्तौ द्वि इति ल । (२) ते सं इत्यवग्रहरहितः पाठः म-सा-वि-भाट्ट-शा-चौ । नास्तीदं सूत्रं वृ ।

सू० ३९ (१) एकार्थस इति य ।

सू० ४० अत्रेदं भाति । संसर्गित्वाच्च इति पृथक् सूत्रं स्यात्, तस्मादित्यादि च पृथक् । भाष्यमपि 'एकतां यातः' इत्यन्तं प्रथमसूत्रस्य 'तस्मादेकवचनान्तोऽपि' इत्यादि तु द्वितीयस्येति । तथाहि । उत्कृष्येत इत्यादिना यदुक्तं तस्य निवारकं हेतुद्वयम् । तत्रैको हेतुः एकस्तु इति सूत्रेणोक्तः । 'अयं चान्यः परिहारः' (इयं भाष्यपङ्क्तिः) संसर्गित्वाच्च इति । तस्मादित्यादिभागस्तु सिद्धान्तमुपसंहरति । 'तस्मात्' इति पदेन पूर्वोक्तसकलहेतूनामनुवादः । तथाच 'तस्मात्' इत्यादेरुत्तरभागस्य न केवलं संसर्गित्वाच्चेत्यनेन संबन्धः । तथाचात्र सूत्रभेद एवावश्यकः ।

सू० ४१ (१) पि न गुणापा इति वृ-ल ।

अधि० १३ बहुदेवत्ये पशावपि एकवचनान्तमेधपतिशब्दस्य विकल्पः इति म-सा-ल । बहुदैवत्ये इति विपरिवर्तनं शेषं म-सावत् वि-भाट्ट-शा । बहुदेवत्यपशावपि इति विपरिवर्तनं शेषं म-सावत् बिन्दु-वृ । बहुदेवत्ये पशौ एकवचनान्तमेधपतिशब्दस्य द्विवचनान्तेन विकल्पः इति भा ।

सू० ४२ (१) मो वा ब इति बिन्दुः ।

अधि० १४ एकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहः इति भा-बिन्दुभिन्ने । एकादशिन्यामेकवचनान्तमेधपतिशब्दोहः इति बिन्दुः । पशुगणे एकवचनान्तमेधपतिशब्दस्योहः इति भा ।

॥ अथ नवमाध्यायस्य चतुर्थः पादः ॥

अधि० १.

१ षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद् गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसंबन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः।

२ अभ्यासेऽपि तथेति चेत्।

३ न गुणादर्थकृतत्वाच्च। २ य.

४ समासेऽपि तथेति चेत्। ३ य.

५ नासंभवात्। ३ य.

६ स्वाभिश्च वचनं प्रकृतौ तथेह स्यात्। ४ य.

७ वङ्क्रीणां तु प्रधानत्वात् समासेनाभिधानं स्यात् प्राधान्यमध्रिगोस्तदर्थत्वात्। ५ य.

८ तासां च कृत्स्नवचनात्। ६ य.

९ अपित्वसंनिपातित्वात् पत्नीवदाम्नातेनाभिधानं स्यात्। ७ य.

१० विकारस्तु प्रदेशत्वाद् यजमानवत्। ८ य.

११ अपूर्वत्वात् तथा पत्न्याम्। ९ य.

१२ आम्नातस्त्वविकारात् संख्यासु सर्वगामित्वात्। १० य.

१३ संख्या त्वेवं प्रधानं स्याद् वङ्क्रयः पुनः प्रधानम्। ११ य.

१४ अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः। १५ ल, १२ य.

१५ अभ्यासो वाऽविकारात् स्यात्। १४ वृ–ल, १३ य.

१६ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात् समासशब्दः स्यात्। १५ वृ, १४ य.

अधि० २,

१७ अश्वस्य चतुस्त्रिंशत् तस्य वचनाद् वैशेषिकम्। १६ वृ, १५ य, २ बिन्दुः.

( अधि० ३ म–सा–वि–शा–बिन्दु–वृ–ल–वार्तिकम् ).

---

अधि० १ षड्विंशतिरस्य वङ्क्रयः इत्यादौ समस्योहः इति भा–बिन्दुभिन्ने। षड्विंशतिरस्य पङ्क्तयः इत्यादौ समस्योहः इति बिन्दुः अधिकरणारम्भे। अनुक्रमण्यां तु पङ्क्तयः इत्यस्य स्थाने वङ्क्रयः इत्येव। पशुगणे अध्रिगुप्रैषे समस्तवङ्क्रीयत्ताप्रकाशनार्थं समस्य वचनं इति भा। समस्योहः इत्यत्र समस्य इतिपदं षष्ठ्यन्तं वा ल्यबन्तं वेति संदेहस्थानम्।

सू० १ ( १ ) गणस्य इति बिन्दुः अशुद्ध एव। ( २ ) स्य वि इति य। ( ३ ) दधिकारे इति बिन्दुः। दविकारो हि इति शा।

सू० २ ( १ ) चेदन्तमुत्तरेणैकं य।

सू० ४ ( १ ) चेदन्तमुत्तरेणैकं य।

सू० ५ ( १ ) न सं इति य।

सू० ७ ( १ ) नवत्त्वात् इति वृ–लसूत्रे, वृ–मूले तु नत्वात् इत्येव। ( २ ) दर्थकृतत्वाच्च इति य।

सू० १४ ( १ ) नास्तीदं सूत्रं वृ। भाष्यमेवेदं सर्वमिति तन्मतम्। ( २ ) चनं चाव इति य। अत्र ल–पुस्तके अभ्यासो वा इति चतुर्दशं सूत्रं अनाम्नात इति पञ्चदशं सूत्रं इति व्यत्यासः समजनि।

सू० १५ ( १ ) वा वि इति अवग्रहरहितं छित्त्वा च मुद्रणं वृ–सूत्रे, वृ–मूले तु अविकारात् इत्येव पदम्। ( २ ) स्यात्–शब्दो नास्ति सा–चौ।

सू० १६ ( १ ) तस्मात् इति पदं नास्ति य।

अधि० २ चतुस्त्रिंशद्वाजिनः इत्यनेन आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनं इति म–सा–बिन्दु–वृ। आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनाविकल्पः इति वि–शा–ल। अश्वमेधे चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनं इति भाट्ट। अश्वमेधे अश्वविषये वङ्क्रीयत्ताप्रकाशनार्थं वैशेषिकमन्त्राकरणपक्षे त्रयाणां पशूनामर्थे षडशीतिरेषां वङ्क्रयः इति समासवचनं इति भा।

(अधि० ३) अत्र तन्त्ररत्ने " अतः प्रभृति पञ्चसूत्री भाष्यकारेण एकाधिकरणत्वेन व्याख्याता,

१८ तत् प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् । १७ वृ, १६ य, ३ बिन्दुः.

१९ ऋग् वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः । १८ वृ, १७ य.

२० तस्यां तु वचनादैरवत् पदविकारः स्यात् । १९ वृ, १८ य.

२१ सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात् । २० वृ, १९ य.

अधि० ३ भा–मण्डनौ, ४ म–सा–वि–शा–बिन्दु–वृ–ल.

इदं च सूत्रं पूर्वपक्षसूत्रत्वेन व्याख्यातम् " इति । " स्वयं तावदन्यथा व्याख्यातुमाह " इति च । तथाच भाष्यमतेन पञ्चसूत्र्या द्वितीयमधिकरणं, वार्तिकमतेन तु सप्तदशेन सूत्रेण द्वितीयमधिकरणं, अष्टादशादिसूत्रचतुष्टयेन तृतीयमधिकरणमिति । म–सापुस्तकयोस्तु अधिकरणभेदः कृतोऽपि तन्मूलविरुद्धत्वादुपेक्ष्यः ।

अथात्र शीर्षकं, आश्वमेधिकसवनीयाश्वस्य न चतुस्त्रिंशत् इत्यनेन समस्ताया एव ऋचो निषेधः इति म–सा । आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनं इति वि–शा । अत्र वि–शीर्षकं स्वमूलविरुद्धम् । विस्तरे एवमुपसंहृतं "तस्मात् न पदमात्रस्य निषेधः किंतु कृत्स्नाया ऋचः । तथा सति पूर्वोक्तविकल्पस्य तदवस्थत्वात् ऋग्विशेषविधिपक्षे पृथग्वचनं कर्तव्यम् । (द्विपञ्चाशदनयोर्वङ्क्रयः इत्युक्त्वा षड्विंशतिः षड्विंशतिरस्यास्य वङ्क्रयः' इति वा उक्त्वा चतुस्त्रिंशद्वाजिनोः इत्यृचं सर्वामुक्त्वा 'ता अनुष्ठयोच्च्यावयतात्' इत्यादि वक्तव्यं इत्यर्थः) तन्निषेधपक्षे चोदकप्राप्ते अध्रिगुप्रैषे प्रथमाधिकरणन्यायेन समस्य वक्तव्यम् । तत्र तूपरगोमृगयोः प्रत्येकं षड्विंशतित्वात् अश्वस्य चतुस्त्रिंशत्वात् समासेन ' षडशीतिरेषां वङ्क्रयः ' इत्येवमूहनीयं " इति ।

एवं–शा–शीर्षकमपि मूलविरुद्धमेव " तस्मात् समस्य वचनं, पक्षे च वैशेषिकमृग्वचनम् " इति तत्रोपसंहृतत्वात् । अथ आश्वमेधिकसवनीयाश्वस्य न चतुस्त्रिंशत् इत्यनेन समस्ताया एव ऋचो निषेधः इति बिन्दु–वृ । अत्र बिन्दुमूले यद्यपि 'समस्तमन्त्रनिषेध एव ··· सिद्धान्तः' इत्युक्तं तथापि तदुत्तरं ( समस्तमन्त्रनिषेधपक्षे· ) " समस्तवचनमेव ··· षडशीतिरेषां वङ्क्रयः इति । पक्षे च चतुस्त्रिंशत् इति मन्त्रः इति सिद्धान्तः " इत्युक्तत्वात् बिन्दुशीर्षकमपि स्वमूलविरुद्धमेव । वृ–मूले तु ' अश्वस्य ' इति सूत्रं पूर्वपक्षमाह इत्यवतारितम् । तत्प्रतिषिध्य इत्यादिसूत्राणि तु सिद्धान्तमाह इत्यवतारितानि । तस्मात् वृ–मूलकारमतेन भाष्यवत् सूत्रपञ्चकेन एकमेवाधिकरणं नाधिकरणद्वयं इति स्पष्टमेव । तस्मात् वृ–शीर्षकमपि मूलविरुध्दमेव । अथ आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपाविकल्पः इति ल–शीर्षकं तु ' कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ' इति न्यायमनुसरति ।

सू० १८ ( १ ) निवर्तते इति य ।

सू० १९ ( १ ) न्यायः इति वृ–ल । प्राग्वत् अत्रापि न्याय्य इत्येव युक्तम् ।

सू० २१ ( १ ) वा सं इति वृ–ल । ऋचः पदेन संयोगात् इति वृ–मूलम् । चतुस्त्रिंशत्पदेन ऋचः संयोगो न स्यात् इति भा–मूलम् ।

अधि० ३ अग्नीषोमीयपशौ उरूकशब्देन वपाऽभिधानं इति म–सा–वि–भाट्ट–शा । अग्नीषोमीये वा अन्यस्मिन् वा पशौ उरूकशब्दो वा अन्योऽपि वा कश्चिच्छब्दो नैव भवति, पशोः प्राणिद्रव्यत्वात् शब्दस्य चाकाशगुणत्वात् । ' पशुः ' इत्यर्थे वा उरूकशब्दो न भवति । ननु पशौ इत्यस्य ' पशुविषयके अध्रिगुमन्त्रे ' इत्यर्थो ग्राह्यः । बाढं, तर्हि तथैव वक्तव्यं, किमध्याहारप्रयासेन । सोयं दोषो भा–भिन्ने सर्वत्र । अग्नीषोमीयपशौ उरूकशब्देन वपाद्रव्याभिधानं इति बिन्दुः । अग्नीषोमीयपशौ उरूकशब्देन द्रव्याभिधानं इति वृ । पृथिव्यादेर्द्रव्यस्याभिधानं स्वीक्रियते वा संपादकैः ? अथ वपारूपं द्रव्यं गृह्यते इति चेत्तर्हि तथैव वक्तव्यम् । अग्नीषोमीयपशौ उरूकशब्दस्य

२२ वनिष्ठुसंनिधानादुरूकेण वपाऽभिधानं स्यात् । २१ वृ, २० य, ४ बिन्दुः.
अधि० ४ भा-मण्डनौ, ५ म-सा-वि-शा-बिन्दु-वृ-ल, ३ भाट्ट.
२३ प्रशसाऽस्यभिधानम् । २२ वृ, २१ य, ५ बिन्दुः.
२४ बाहुप्रशंसा वा । २३ वृ, २२ य.
अधि० ५ भा-मण्डनौ, ६ म-सा-वि-शा-बिन्दु-वृ-ल, ४ भाट्ट.
२५ श्येनशलाकंश्यपकवषस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसंनिधानात् । २४ वृ, २३ य, ६ बिन्दुः.
२६ कात्स्न्र्यं वा तथा भावात् । २५ वृ, २४य.
२७ अध्रिगोश्च तदर्थत्वात् । २५ वृ-य.

---

वपापरत्वं इति ल । अध्रिगुप्रैषगतोरूकशब्देन वपाऽभिधानं इति भा । इदं तु युक्तम् ।

भाट्टपुस्तकेऽत्राधिकरणादौ कोऽप्यङ्को न मुद्रितः । उत्तराधिकरणे तु तृतीयोऽङ्क एव मुद्रितः तदुत्तरेषु चाधिकरणेषु चतुर्थाद्यङ्का मुद्रिताः । तेन विनैव कारणं भाट्टे त्रयोदशैवाधिकरणानीति । वस्तुतस्तु भाट्टेऽपि चतुर्दशैवाधिकरणानि । अनुक्रमणिकायां तु नायं दोषः । तत्र हि वनिष्ठुअधिकरणे तृतीयोङ्कः स्वीकृत इति ।

सू० २२ ( १ ) वनिष्टु इति भा-म-सादिसर्वपुस्तकेषु सूत्रे च भाष्ये चानेकवारं टकार एव मुद्रितो न ठकारः । परंतु ऋक्संहितायां ( १०।१६३।३ ) 'आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि' इत्यत्र ठकारमेव वैदिकाः पठन्ति । आश्वलायनश्रौतसूत्रेण ( ३।३ ) विहितेऽध्रिगुमन्त्रे वनिष्ठुमस्य माराविष्ट' इति ठकारमेव वैदिकाश्च हौत्रवेत्तारश्च पठन्ति । तेन भा-म-सादिपुस्तकेषु मुद्रितः टकारः अशुद्ध एव । (२) धानं स्यात् इति रत्न । अन्यत्र स्यात्—पदं नास्ति । परंतू भा-मूले 'उरूकशब्देन वपाऽभिधानं स्यात् इति स्याच्छब्दः पठित एवेति भाष्यसंमत एव स्याच्छब्दः स्यादिति मन्यामहे ।

अधि० ४ अध्रिगौ 'प्रशसा बाहू' इत्यत्र प्रशसाशब्दस्य प्रशंसापरत्वं इति म-सा-बिन्दु-वृ । अध्रिगौ प्रशसाशब्दस्य प्रशंसापरत्वं इति वि-शा-ल । अध्रिगुप्रैषगतप्रशसाशब्दस्य बाहुप्रशंसापरत्वं इति भा ।

सू० २३ ( १ ) प्रशंसा इति ल-चौ-रत्नपाठो न ग्राह्यः ।

अधि० ५ अध्रिगौ 'श्येनमस्य वक्षः' इत्यादौ श्येनादिशब्दानां कात्स्न्र्यवचनं इति म-सा । अध्रिगुप्रैषे श्येनादिशब्दानां कात्स्न्र्यवचनता इति वि-शा । अध्रिगौ श्येनादिशब्दानां कात्स्न्र्यपरत्वं इति भाट्ट । अध्रिगौ 'श्येनमस्य' इत्यादौ श्येनादिशब्दानां कात्स्न्र्यवचनं इति बिन्दुः । शब्दानां कात्स्न्र्यवचनं इति वाक्यं 'शङ्खः कदल्यां कदली च भेर्यां भेर्यां महच्चाविरभूद्विमानं' इतिवन्निरर्थकमेव । बिन्दुशीर्षके एव कात्स्न्र्यवचनत्वं इति परिवर्तनेन वृ-शीर्षकम् । अध्रिगुप्रैषे श्येनादिशब्दानां कात्स्न्र्यवाचकत्वं इति ल । अध्रिगुप्रैषगतश्येनशलाकश्यपादिशब्दानां कात्स्न्र्येनोद्धरणप्रकाशकत्वं इति भा । अत्र नवभिः संपादकैः अल्पतरेणैव भेदेन सप्तशीर्षकाणि विरचितानि । तत्र सागरो महेशस्यैवानुवादं करोति, शा च विस्तरस्येति शीर्षकन्यूनता संपन्ना । अन्यथा तु नवैव शीर्षकाणि स्युः । अत्र भा-भिन्ने सर्वत्र श्येनादिशब्दाः कात्स्न्र्यवाचका इत्येवोक्तं तदयुक्तम् । नहि सिद्धान्ते श्येनादिशब्दानां कात्स्न्र्यवाचकता स्वीकृता । अनया रीत्या कृत्स्नास्तेतेऽवयवाः छित्त्वा उद्धर्तव्याः इति 'श्येनमस्य वक्षः कृणुतात्' इत्यादिना सूच्यते इति हि प्रतिपादितम् ।

सू० २५ ( १ ) कच्छप इति बिन्दुपाठोऽशुद्धः । ( २ ) वषोरुस्रे इति शा-बिन्दु-ल । वषोरूस्रे इति य । आश्वलायनसूत्रादौ कवषोरू ( कवषा ऊरू ) इति दीर्घ एव पठ्यते । वस्तुतस्तु ऊरुशब्दस्य पाठोऽत्र व्यर्थ एव ।

सू० २६ इदमुत्तरं चेति सूत्रद्वयं मिलित्वा एकमेव सूत्रं पञ्चविंशत्वेन वृत्तौ पठितम् ।

अधि० ६ भा-मण्डनौ, ७ म-सा-वि-शा-बिन्दु-वृ-ल, ५ भाट्ट.

२८ प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात् तदर्थे हि विधीयते। २६ वृ-य, ७ बिन्दुः.

अधि० ७ भा-मण्डनौ, ८ म-सा-वि-शा-बिन्दु-वृ-ल, ६ भाट्ट.

२९ धारणे च परार्थत्वात्। २७ वृ-य, ८ बिन्दुः.

३० क्रियार्थत्वादितरेषु कर्म स्यात्। २८ वृ य.

अधि० ८ भा-मण्डनौ, ९ म-सा-वि-शा-बिन्दु-वृ-ल, ७ भाट्ट.

३१ न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात्। २९ वृ-य, ९ बिन्दुः.

अधि० ९ भा-मण्डनौ, १० म-सा-वि-शा-बिन्दु-वृ-ल, ८ भाट्ट.

३२ प्रदानदर्शनं श्रपणे तद्धर्मे भोजनार्थत्वात् संसर्गाच्च मधूदकवत्। ३० वृ-य, १० बिन्दुः.

३३ संस्कारप्रतिषेधश्च तद्वत्। ३१ वृ-य.

३४ तत्प्रतिषेधे च तथाभूतस्य वर्जनात्। ३२ वृ-य.

३५ अधर्मत्वं त्वप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः। ३३ वृ-य.

३६ परो नित्यानुवादः स्यात्। ३४ वृ-य.

३७ विहितप्रतिषेधो वा। ३५ वृ-य.

---

अधि० ६ दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अनुष्ठानं इति भा-भाट्टभिन्ने। दर्शार्थाग्निलोपे ज्योतिष्मत्या अनुष्ठानं इति भाट्ट। दर्शपूर्णमासार्थोध्दृताग्निनाशे ज्योतिष्मतीष्टेरनुष्ठानं इति भा।

सू० २८ (१) दर्थो हि इति ल-रत्न।

अधि० ७ धार्योद्वानेऽपि ज्योतिष्मत्या नानुष्ठानं इति म-सा-भाट्ट। धार्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानं इति वि-शा-बिन्दु-ल। धार्य्योद्दाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानं इति वृ। अत्र धार्य्योद्दाने इत्यशुद्धं, धार्योद्वाने इति शुद्धम्। धार्याग्निनाशे ज्योतिष्मतीष्टेरननुष्ठानं इति भा।

अधि० ८ दर्शार्थोद्धरणस्यामन्त्रकत्वं इति भा-भाट्टभिन्ने। दर्शार्थाग्निप्रणयनस्यामन्त्रकत्वं इति भाट्ट। दर्शपूर्णमासार्थोद्धरणकाले अग्निहोत्राङ्गोद्धरणाङ्गमन्त्राननुष्ठानं इति भा।

अधि० ९ प्रायणीयचरौ प्रदानधर्माणामननुष्ठानं इति भा-भाट्टभिन्ने। प्रायणीयचरौ प्रदानधर्माननुष्ठानं इति भाट्ट। प्रायणीयेष्टौ पयसि प्रदेयधर्माननुष्ठानं इति भा। अत्र पयसि इति भा, चरौ इति भाभिन्नेषु सर्वत्र। चरुश्रपणार्थं यत्पयः तस्मिन् दोहादिधर्मा न कार्याः। नहि तत् स्वतन्त्रं हविः। चरौ तु प्रदानधर्माः कर्तव्या एव भवन्ति निर्वापादयः इति हि प्रतिपाद्योऽर्थः सर्वत्र मूले। तथाचातीवाशुद्धं भा-भिन्नशीर्षकं स्वमूलविरुद्धम्।

सू० ३२ (१) प्रधान इति वृ। अत्र वृ-मूले "श्रपणे पयसि प्रधानदर्शनं, यथा चरोः देवतोद्देशेन प्रदानं दृश्यते तद्वत् पयसोऽपि प्रदानदर्शनमस्ति" इति पूर्वपक्षे ग्रन्थो मुद्रितः। तथाच उभयत्र प्रधानदर्शनं इति पाठो नैव शुद्धः। (२) श्रयणे इति म-सा (उभयोः सूत्रे भाष्ये च)-भाट्ट-रत्नपाठो न ग्राह्यः। श्रपणे शृते पयसि इत्यर्थः। (३) तद्धर्मभो इति संधाय मुद्रणं सर्वत्र। तच्चाशुद्धम्। तथाहि भाष्यं "तस्माद्भोजनार्थं यागार्थमेतत् पयः। तस्माच्च पयः प्रदानार्थं पयोधर्मैः संबध्यते" इति। अत्र तद्धर्म-पदं पयोविशेषणत्वेनोक्तम्। भोजनार्थं इत्यनेन च पयसस्तद्धर्मत्वे हेतुरुक्तः। तथाच तद्धर्मे इति पृथगेव पदं, पृथगेव च भोजनार्थत्वादिति पदम्।

सू० ३४ (१) तस्याव इति य।

सू० ३५ (१) र्मत्वमप्र इति सर्वत्र। परंतु अस्य सूत्रस्य सिद्धान्तसूत्रत्वात् "अधर्मत्वं तु पयसः" इति भाष्याच्च 'र्मत्वं त्वप्र' इत्येव पाठ आवश्यक इति युक्तमुत्पश्यामः। र्मकं तु पयः प्रणी इति भाटि।

३८ वर्जने गुणभावित्वात् तदुक्तप्रतिषेधात् स्यात् कारणात् केवलाशनम्। ३६ वृ–य.

३९ व्रतधर्माच्च लेपवत् ।३७ वृ–य.

४० रसप्रतिषेधो वा पुरुषधर्मत्वात् । ३८ वृ–य.

अधि० १० भा–मण्डनौ, ११ म–सा–वि–शा–बिन्दु–वृ–ल, ९ भाट्ट.

४१ अभ्युदये दोहापनयः स्वधर्मो स्यात् प्रवृत्तत्वात्। ३९ वृ–य,१० बिन्दुः.

४२ शृतोपदेशाच्च । ४० वृ–य.

अधि० ११ भा–मण्डनौ, १२ म–सा–वि–शा–बिन्दु–वृ–ल, १० भाट्ट.

४३ अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ।४१ वृ–य, १२ बिन्दुः.

४४ लक्षणार्था शृतश्रुतिः । ४२ य.

अधि० १२ भा–मण्डनौ, १३ म–सा–वि–शा–बिन्दु–वृ–ल, ११ भाट्ट.

४५ श्रयणानां त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात् । ४३ य, ४१ वृ, १३ बिन्दुः.

४६ गुणो वा श्रयणार्थत्वात् । ४४ य, ४३वृ.

४७ अनिर्देशाच्च । ४४ वृ.

४८ श्रुतेश्च तत्प्रधानत्वात् । ४५ वृ–य.

४९ अर्थवादश्च तदर्थवत् । ४६ वृ–य.

५० संस्कारं प्रति भावाच्च तस्माद्‌ध्यप्रधानं स्यात् । ४७ वृ–य.

अधि० १३ भा—मण्डनौ, १४ म–सा–वि–शा–बिन्दु–वृ–ल, १२ भाट्ट.

५१ पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् । ४८ वृ–य, १४ बिन्दुः.

५२ शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् । ४९ वृ–य.

५३ पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते । ५० वृ–य.

---

सू० ३८ ( १ ) गुणाभा इति य । ( २ ) षेधः स्यात् इति य ।

सू० ३९ ( १ ) धर्म च इति य ।

अधि० १० अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानं इति सर्वत्र ।

सू० ४१ ( १ ) धर्मः स्यात् इति शा-सोम ।

अधि० ११ पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानं इति सर्वत्र ।

सू० ४४ नास्तीदं सूत्रं वृ ।

अधि० १२ ज्योतिष्टोमे श्रयणानां प्रदेयधर्माननुष्ठानं इति म-सा-वि-भाट्ट-शा-ल । ज्योतिष्टोमे श्रपणानां प्रदेयधर्माननुष्ठानं इति बिन्दु-वृ । श्रपणानां इत्युक्तमयुक्तम् । पयसा मैत्रावरुणं श्रीणाति इति मूलोक्तश्रुत्यनुसाराभावात् ।

सू० ४५ ( १ )श्रयणानां च पू इति य । ( २ ) नार्थवि इति वृ-लसूत्रे, वृ-मूले तु नार्थे वि इति ।

सू०४६ (१) श्रपणा इति शा-वृ । अशुध्दं तत् ।

सू० ४७ नास्तीदं सूत्रं य ।

सू० ४८ ( १ ) श्रुते त इति य ।

सू० ४९ ( १ ) तदर्थत्वात् इति ल-य ।

सू० ५० ( १ ) दन्यप्र इति ल । दथ प्र इति म-सा-वि-भाट्ट-चौ । दप्य, दथ, दन्य इति लिखितवाचने मतभेदात् पाठभेदोऽयं संजातः । दप्य इत्येव तु शुद्धम् । ( २ ) स्यात्-पदं नास्ति वृ-लसूत्रे । वृ-मूले तु अस्त्येव ।

अधि० १३ अश्वमेधे ईशानाय परस्वते इत्यनेन यागान्तरविधानं इति म-सा-बिन्दु-वृ । ईशानाय परस्वते इत्यत्र यागान्तरविधानं इति वि-शा । ईशानाय परस्वते इत्यत्र यागान्तरविधिः इति भाट्ट । ईशानाय परस्वते इत्यनेनाश्वमेधे यागान्तरविधानं इति ल । परस्वद्यागे पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गप्रतिषेधः इति भा । अत्र भा-शीर्षकादितरशीर्षके भूयानर्थभेदो दृश्यते । तात्पर्यं तु एकमेव ।

सू० ५३ ( १ ) पूर्वत्वा इति वृ-ल । अत्र वृ-सूत्रे मूले च विचित्र एव प्रकारः समजनि । पूर्व-

५४ प्रवृत्तेर्यज्ञहेतुत्वात् प्रतिषेधे संस्काराणामकर्म स्यात् तत्कारितत्वाद् यथा प्रयाजप्रतिषेधेऽग्रहणमाज्यस्य । ५१य.

५५ क्रिया वा स्यादवच्छेदादकर्म सर्वहीनं स्यात् । ५२ य, ५१ वृ.

अधि० १४ भा-मण्डनौ, १५ म-सा-वि-शा-बिन्दु-वृ-ल, १३ भाट्ट.

५६ आज्यसंस्थां प्रतिनिधिः स्याद् द्रव्योत्सर्गात् । ५३ य, ५२ वृ, १५ बिन्दुः.

५७ समाप्तिवचनात् । ५४ य, ५३ वृ.

५८ चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् । ५५ य, ५४ वृ.

५९ अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति । ५६ य, ५५ वृ.

६० संस्थां तद्देवतत्वात् स्यात् । ५७ य,५६वृ.

॥ पादे चतुर्दश न्याया भाष्यकारेण वर्णिताः ॥

॥ षड्विंशतिः संख्या प्रशसा संस्कार अपनयः प्रवृत्तेः सप्तपञ्चाशत् ॥

॥ इति नवमाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः ॥

---

त्वाच्च० ' इत्यादि सूत्रं मुद्रितं, व्याख्या तु ' प्रवृत्तेर्यज्ञहेतुत्वात्० ' इत्यस्य मुद्रिता । पूर्वत्वाच्च० इत्यस्य तु व्याख्या नैव मुद्रितेति । ( २ ) वृत्तेनोप इति संधाय मुद्रितं भाट्ट । भाष्यात्तु सप्तम्यन्तमेव पदं सिध्यति ।

सू० ५४ ( १ ) कारित्वा इति भा । कारितत्वा इति तु अन्यत्र । भा-मूलं च "यज्ञकारिता हि ते" इति । तेन कारितत्वात् इत्येव भाष्यसंमतः पाठ इति सिध्यति । ( २ ) धे प्र इति अवग्रहरहितं छित्त्वा च मुद्रणं भादौ सर्वत्र । तथापि " यथा प्रयाजाभावे तदर्थमाज्यं न गृह्यते, ग्रहणमाज्यस्य न क्रियते " इति भाष्यात् अवग्रह आवश्यक एव । ( ३ ) इदं सूत्रं सुबोधिनीवृत्तौ न मुद्रितं, व्याख्या तु अस्यैव मुद्रिता ।

सू० ५५ ( १ ) दपच्छे इति य । ( २ ) सर्वहीनं इति चौ ।

अधि० १४ आज्येन शेषं संस्थापयति इत्यनेन कर्मान्तरविधानं इति म-सा-वि-शा-बिन्दु-वृ-ल । विधानं इत्यत्र विधिः इति परिवर्तनं शेषं म-सावत् भाट्ट । आज्येन शेषं संस्थापयति इति वाक्ये कर्मान्तरविधानं इति भा ।

सू० ५६ ( १ ) स्थाप्र इति संधाय मुद्रणं म-सा-वि-भाट्ट-वृ । वृ-मूले तु " आज्यसंस्था आज्येन समाप्तिः प्रतिनिधिः स्यात् " इति । तेन पदभेदः सिध्यति । स्थाने प्र इति शा ।

सू० ५७ ( १ ) समाप्तिवचनात् इत्यस्य स्थाने ' संस्थापयतीति चापूर्वे नोपपद्यते ' इति पाठो य-पुस्तके ।

सू० ५९ ( १ ) प्रसिद्धान्तेन इति वृ-ल । " प्रसिद्धेन अन्तेन चरमावयवेन " इति च वृ-मूलम् । भाष्यमूले तु " प्रसिद्धां वनस्पतेरनिज्यां दर्शयति " इत्युक्तम् ।

सू० ६० ( १ ) संख्या त इति वि-शा-ल-चौ । ( २ )वतात्वात् इति वृ-ल-य ।

# ॥ अथ दशमोऽध्यायः ॥

॥ अथ दशमाध्यायस्य प्रथमः पादः ॥

अधि० १, १ तः ३ मण्डनः.

१ विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ।

२ अपिवाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ।

३ तेषामप्रत्यक्षशिष्टत्वात् ।

अधि० २, ४ मण्डनः.

४ इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेताऽऽरम्भस्य प्रधानसंयोगात् । २ बिन्दुः.

अधि० ३, ५ मण्डनः.

५ प्रधानाच्चान्यसंयुक्तात् सर्वारम्भान्निवर्तेतानङ्गत्वात् । ३ बिन्दुः.

अधि० ४, ६ मण्डनः.

६ तस्यां तु स्यात् प्रयाजवत् । ४ बिन्दुः.

७ न वाऽङ्गभूतत्वात् ।

८ एकवाक्यत्वाच्च ।

अधि० ५, ७ मण्डनः.

९ कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् । ५ बिन्दुः.

अधि० ६, ८ मण्डनः.

---

अधि० १ अत्राधिकरणे त्रीणि वर्णकानि । तानि च स्वतन्त्राधिकरणत्वेनैव मण्डनाचार्येण गृहीतानि । तेन भाष्ये विंशतिरधिकरणानि, मण्डने तु द्वाविंशतिः । अथ प्रथमे वर्णके शीर्षकम् । विकृतौ लुप्तार्थानां प्राकृतानां बाधः इति म-सा-बिन्दु-त्र्‌ । विकृतौ लुप्तार्थप्राकृतानां बाधसाधकं इति वि-शा । विकृतौ इत्यस्य बाधपदेनान्वयश्चेत् न दोषः । विकृतौ अतिदिष्टानां प्राकृतानामर्थलोपादिना बाधः इति भाट्ट । विकृतौ लुप्तार्थप्रापकबाधसाधनं इति ल । विकृतौ इत्यस्य क्वान्वयोऽभिप्रेयते ? । विकृतौ लुप्तार्थानां प्राकृतानामङ्गानां बाधः इति भा । अथ द्वितीये वर्णके, कृष्णले अवहन्तिबाधः इति म-सा । कृष्णलेषु अवहन्तिबाधसाधकं इति वि-ल । कृष्णलचरौ अवघातबाधः इति भा । अथ तृतीये वर्णके, वैश्वदेवचरौ विष्णोरावाहनबाधः इति म-सा । वैश्वदेवचरौ विष्ण्वावाहनबाधसाधकं इति वि-ल । वैश्वदेवीयदेवतावाहनकाले विष्णोरुरुक्रमस्यावाहनाननुष्ठानं इति भा ।

सू० ३ (१) क्षविशि इति भाटि-सा-वि-भाट्ट-शा-ल-चौ । म-पुस्तके तु प्रथमतृतीयवर्णकयोर्मध्ये क्षविशि इति पाठः, द्वितीये तु वर्णके क्षशि इत्येव पाठः इत्याश्चर्यवत् पश्यति कश्चिदेनम् ।

अधि० २ दीक्षणीयादिषु आरम्भणीयाबाध-इति भा-भिन्ने । ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयादिविकृतौ अन्वारम्भणीयाया बाधः इति भा ।

अधि० ३ अनुयज्ञादिषु आरम्भणीयाबाधः इति भा-भिन्ने । कोऽयमनुयज्ञो नाम ! । राजसूयान्तर्गतानुमत्यादीष्टौ अन्वारम्भणीयाया बाधः इति भा ।

सू० ५ (१) तानाङ्ग इति चौ ।

अधि० ४ आरम्भणीयायामारम्भणीयाबाधः इति भा-बिन्दुभिन्ने । आरम्भणीयायां तद्-बाधः इति बिन्दुः । तद्बाध इति अयुक्तः संक्षेपः । आरम्भणीयायामारम्भणीयाया अननुष्ठानं इति भा ।

सू० ७ (१) न चाङ्ग इति टी ।

अधि० ५ खलेवाल्यां यूपाहुतिबाधः इति भा-भिन्ने । खलेवाल्यां यूपाहुतेरननुष्ठानं इति भा ।

सू० ९ (१) मर्थभावा इति वृ-सूत्रे, वृ-मूले तु मर्थाभावा इत्येव । (२) निवर्तेत इति वृ-सूत्रे, निवर्तते इति तु वृ-मूले । (३) तादर्थ्यश्रु इति रत्न ।

अधि० ६ साद्यस्के स्थाण्वाहुतिबाधः इति म-सा-वृ-ल । खलेवाल्यां स्थाण्वाहुतिबाधः इति वि-

१० स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत । ६ बिन्दुः.

११ अपिवा शेषभूतत्वात् तत्संस्कारः प्रतीयेत ।

१२ समाख्यानं च तद्वत् ।

१३ मन्त्रवर्णश्च तद्वत् ।

अधि० ७, ९ मण्डनः.

१४ प्रयाजे च तन्न्यायत्वात् । ७ बिन्दुः.

१५ लिङ्गदर्शनाच्च ।

अधि० ८, १० मण्डनः.

१६ तथाऽऽज्यभागाग्निरपीति चेत् । ८बिन्दुः.

१७ न व्यपदेशाद् देवतान्तरम् । १६ य.

१८ समत्वाच्च । १७ य.

अधि० ९, ११ मण्डनः.

१९ पशावपीति चेत् । १८ य, ९ बिन्दुः.

२० न तद्भूतवचनात् । १८ य.

२१ लिङ्गदर्शनाच्च । १९ य.

२२ गुणो वा स्यात् कपालवद् गुणभूतविकाराच्च । २० य.

२३ अपिवा शेषभूतत्वात् तत्संस्कारः प्रतीयेत स्वाहाकारवत् । २१ य.

२४ अङ्गानामर्थसंयोगात् । २३ भादौ सर्वत्र, २१ य.

२५ व्यूद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् । २४ भादौ, २२ य.

---

भाट्ट-शा-बिन्दुः । सायस्के स्थाण्वाहुतेरननुष्ठानं इति भा । यदि पञ्चमेऽधिकरणे खलेवाल्यामित्युक्तं अत्रैव तर्हि कस्मात् सायस्के इत्युक्तम् ? । सायस्कस्थे खलवालीरूपयूपे इति लक्षणाप्रसङ्गोऽत्र भवति । समाने विषये समान एव शब्दः प्रयोज्यो भवति ।

सू० ११ ( १ ) त्वात् सं इति ल । ( २ ) प्रतीयत इति मटि ।

सू० १३ ( १ ) तद्वत् इति पदं नास्ति य । युक्तोऽयं य-पाठः पूर्वसूत्रात् तद्वत् इति पदस्यानुवृत्तेश्चकारेण संभवात् ।

अधि० ७ उत्तमप्रयाजस्य संस्कारकर्मता इति सर्वत्र । देवतासंस्कारकर्मता इति वक्तव्यम् ।

सू० १४ ( १ ) तन्न्यायात् इति शा । तन्न्यायवत् इति टी ।

अधि० ८ अग्नियागस्य आरादुपकारकत्वं इति भा-भाट्टभिन्ने । आज्यभागस्य आरादुपकारकत्वं इति भाट्ट । आग्नेयाज्यभागस्य आरादुपकारकत्वं इति भा । अग्नियागो दर्शादौ यः प्रधानभूतस्तस्यापि किमारादुपकारकत्वमेव ? । भाट्टे आज्यभागस्य इति सामान्योक्तिरपि न मनोरमा ।

सू० १६ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० १७ ( १ ) न व्यपदेशात् देवतान्तरं इति य-पाठः अन्यत्र तु क्वापि न-शब्दो नास्ति । परंतु अस्य सिद्धान्तसूत्रत्वात् न-शब्द आवश्यकः । " न चैतदस्ति देवतासंस्कार आज्यभागयोरिति " इति भाष्ये न-शब्दः स्पष्ट एव । सूत्रपाठे मुद्रणाभावस्तु अनवधानात् ।

अधि० ९ पशुपुरोडाशयागस्य देवतासंस्कारकत्वं इति भा-भिन्ने । पशुपुरोडाशयागस्य पशुयागीयदेवतासंस्कारकत्वं इति भा ।

सू० १९ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० २३ ( १ ) त्वात् सं इति चौ । अत्रेदमवधेयम् । अपिवा इत्यादि स्वाहाकारवत् इत्यन्तमेव त्रयोविंशं सूत्रम् । अङ्गानामर्थसंयोगात् इति पृथक् सूत्रम् । एवमेव च भाष्यात् सिध्यतीति मन्यामहे । ' अङ्गानामर्थसंयोगात् । व्यूद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् । ' इति सूत्रद्वयस्वारस्याच्च चकारेण हेतुद्वयसमुच्चयस्योक्तत्वात् । तेन अङ्गानां० इत्यस्य पृथक्सूत्रत्वमेव सिध्यति । परंतु य-पुस्तके वा अन्यत्र वा क्वापि तथा पाठो नोपलभ्यते ।

सू० २५ ( १ ) वृद्ध इति चौ ।

२६ गुणेऽपीति चेत् । २५ भादौ, २३ य.

२७ नासंहानात् कपालवत् । २६ भादौ, २३ य.

२८ ग्रहाणां च संप्रतिपत्तौ तद्वचनं तदर्थत्वात् । २७ भादौ, २४ य.

२९ ग्रहाभावे च तद्वचनम् । २८ भादौ, २५ य.

३० देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति । २९ भादौ, २६ य.

३१ अविरुद्धोपपत्तिरर्थापत्तेः शृतवद् गुणभूतविकारः स्यात् । ३० भादौ, २७ य.

३२ स ह्यर्थः स्यादुभयोः श्रुतिभूतत्वाद् विप्रतिपत्तौ तादर्थ्याद् विकारत्वम् । ३१ भादौ.

३३ तस्याप्युक्तमर्थवादत्वम् । ३१ भादौ.

३४ विप्रतिपत्तौ तासामाख्याविकारः स्यात् । ३२ भादौ, २८ य.

३५ अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः । ३३ भादौ, २९ य.

अधि० १०, १२ मण्डनः.

सू० २६ ( १ ) गुणोपी इति चौ । ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० २९ ( १ ) ग्रहणाभा इति चौ । ( २ ) च-शब्दो नास्ति वृ-ल ।

सू० ३० ( १ ) हेतुत्वे प्र इति वृ-ल सूत्रे, वृमुले तु हेतुत्वं इत्येव ।

सू० ३१ ( १ ) रुध्दा चोप इति य । ( २ ) श्रुतवद् इति वृ-ल ।

सू० ३२ ( १ ) त्वयुक्तं तस्यार्थवादत्वं इति उत्तरसूत्रेण सह पाठः ल । नास्तीदं सूत्रं य ।

सू० ३३ ( १ ) ' उक्तं तस्यार्थवादत्वं ' इति वाक्यं पूर्वसूत्रे एवान्तर्भावितं भादौ सर्वत्र । परंतु " तस्याप्युक्तमर्थवादत्वं इति यदुक्तं तत्रेदमुच्यते" इत्यवतरणभाष्यं विप्रतिपत्तौ इत्युत्तरसूत्रस्य । तेनेदं पृथक् सूत्रमिति सिध्यति । ततोपि पूर्वस्मिन् भासूत्रे ' उक्तं तस्यार्थवादत्वं ' इति अक्षरविन्यासः । अवतरणभाष्ये तु ' तस्याप्युक्तमर्थवादत्वं इत्यक्षरविन्यास इति विशेषः ।

सू० ३५ ( १ ) अभ्यासा वा इति रत्न ।

अधि० १० सौर्यं चरुं निर्वपेत् इत्यत्र चरुशब्दस्य ओदनवाचिता इति म-सा । चरुशब्दस्य ओदनवाचिता इति वि-भाट्ट-शा । सौर्यचरौ चरुशब्दस्य ओदनवाचित्वं इति बिन्दुः । सौर्यचरौ इति सप्तम्याः क्वान्वयः को वा सप्तम्यर्थ इति प्रश्नस्योत्तरं गवेषणीयम् । सौर्यचरुप्रकरणे विद्यमानस्य इति वा सप्तम्यन्तपदार्थो वक्तव्यः, सौर्यचरौ वाचकत्वसंबन्धेन वर्तमानस्य इति वा । तथा च सप्तम्यर्थो वृत्तित्वं, वाचकत्वरूपः संबन्धः संसर्गमर्यादया भासते, अन्वयश्चास्य चरुशब्दस्येत्यत्र इति वा समाधेयम् । परंतु क्लिष्टतैव । सौर्ययागे चरुशब्दस्यौदनवाचित्वं इति वृ । सौर्ययागे चरुशब्दस्यौदनवाचकत्व इति ल । सौर्ययागे चरुशब्दवाच्यौदनेन प्राकृतहविर्बाधः इति भा । षट्सु शीर्षकेषु म-शीर्षकं वि-शीर्षकं च साधीय एव । बिन्दुशीर्षकविषये उक्तमेव । अथ वृ-ल शीर्षकयोः सौर्ययागे इति सप्तम्यन्तम् । तस्य चरुशब्दे अन्वयः कर्तव्यः । तत्र संबन्धो दुर्ज्ञेयः । स्वविधायकवाक्यगतत्वं इति वा संसर्गः स्वीकार्यः । तथाचातिक्लिष्टता । भा-शीर्षकेऽपि सौर्ययागे इति सप्तम्या अन्वय इतरवत् चरुशब्दे एव चेत् उक्त एव दोषः, एकदेशान्वयश्चाधिकः । ' सौर्ययागे चोदकेन प्राप्नुवतः प्राकृतहविषः इत्यन्वयो विवक्षितश्चेत् दूरान्वयः एकदेशान्वयश्चेत् दोषः, परंतु अर्थसामीचीन्यम् । एकदेशान्वयस्यादोषत्वं इति सिद्धान्तः संपादकानामित्युक्तमेवाधस्तात् । उक्तदोषविस्मरणेन विचारे तु भा-वि-बिन्दुशीर्षकाणि स्वस्वमूलानुसारीणि । म-सा-भाट्ट-शा-वृ-शीर्षकाणि तु सिध्दान्तं न व्याप्नुवन्ति ।

३६ चरुर्हविर्विकारः स्याद्विज्यासंयोगात् । ३४ भादौ, ३० य,१० बिन्दुः.

३७ प्रसिद्धग्रहणत्वाच्च । ३५ भादौ, ३१ य.

३८ ओदनो वाऽदनीयसंयोगात् । ३६ भादौ, ३२ य.

३९ न द्व्यर्थत्वात् । ३७ भादौ, ३३ य.

४० कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् । ३८ भादौ, ३४ य.

४१ गुणमुख्यविशेषाच्च । ३९ भादौ, ३५ य.

४२ तच्छ्रुतौ चान्यहविष्ट्वात् । ४० भादौ, ३६ य.

४३ लिङ्गदर्शनाच्च । ४१ भादौ, ३७ य.

४४ ओदनो वा प्रयुक्तत्वात् । ४२ भादौ, ३८ य.

४५ अपूर्वव्यपदेशाच्च । ४३ भादौ, ३९ य.

४६ तथा च लिङ्गदर्शनम् । ४४ भादौ, ४० य.

अधि० ११, १३ मण्डनः.

४७ स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् । ४५ भादौ, ४१ य, ११ बिन्दुः.

४८ संख्या चापि कपालवत् । ४२ य.

४९ एकस्मिन् वा विप्रतिषेधात् । ४६ भादौ, ४३ य.

५० न वाऽर्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात् पात्रलाभः स्यादनियमोऽविशेषात् । ४७ भादौ, ४४ य.

---

सू० ३८ (१) ओदने वा इति य । " ओदनेऽपि चरुशब्दः प्रयुज्यते । तत्रौदनस्यैव ग्रहणं न्याय्यं न स्थाल्याः" इति भाष्यात् सप्तम्यन्त एव भाष्यसंमतः पाठः सिध्यति । किंच ' ओदनो वा प्रयुक्तत्वात् ' इति चतुश्चत्वारिंशं सूत्रम् । तत्र " ओदने हि चरुशब्दः प्रसिद्ध आ च हिमवत आ च कुमारीभ्यः । तत्रादनीयसंयोगो युक्तो भविष्यति " इत्युपसंहारभाष्यम् । तेन चतुश्चत्वारिंशसूत्रेऽपि सप्तम्यन्त एव पाठः सिध्यति । तथा च भाष्यात् सूत्रद्वयेऽपि ओदने इति सप्तम्यन्त एव पाठो भाष्यसमत इति मन्यामहे । य-पाठश्चानुकूल उभयत्रापि । परंतु चरुः हविर्विकारः स्यात् ओदनो वा स्यात् इति पूर्वोत्तरपक्षद्वयविन्यासः सूत्रद्वयेन सिध्यति । तेन सूत्रस्वरसात् ओदनशब्दस्य प्रथमान्तपाठ एव साधीयान् इति युक्तमुत्पश्यामः । ( २ ) वाऽन्नसंयोगात् इति सर्वत्र सूत्रपाठः । भाष्ये तु अदनीयसंयोगात् इति पाठः

सू० ३९ ( १ ) न तद् व्यर्थ इति चौ ।

सू० ४० ( १ ) विषये इति चौ ।

सू० ४४ ( १ ) ओदने वा इति य ।

सू० ४५ ( १ ) अन्यव्य इति य ।

अधि० ११ एतदधिकरणसूत्राणि दशमेऽधिकरणे एवान्तर्भावितानि भाट्टदीपिकायाम् । 'एवं तस्मिन् पेषणमनर्थलोपात् स्यात्' इत्यादीनि अन्तिमानि दश सूत्राणि तत्र नैव मुद्रितानि, तदर्थस्तु दशमाधिकरणोपसंहारे मूले संगृहीतः । सूत्राणि तु भाट्ट-सपादकैः टिप्पण्यां मुद्रितानि । तथाच भाट्टे दशैवाधिकरणान्यत्र पादे इति ध्येयम् । अथ शीर्षकं, सौर्यचरोः स्थाल्यामेव पाकः इति-म-सा-वि-शा-बिन्दु-ल । सौर्यचरौ स्थाल्यामेव पाकः इति भा-सू । सौर्यचरौ इत्यत्र षष्ठी एव युक्ता । सौर्यचरौ सौर्यचरुयागे यः पाकः स स्थाल्यामेव इत्यर्थः इति तु कथं चिन्त्येयम् ।

सू० ४७ (१) स कपालेन कृत्या इति य ।(२) स्य वाश्रु इति रत्न । (३) श्रुतत्वात् इति बिन्दुः ।

सू० ४८ इदं सूत्रं य-पुस्तके एव विद्यते नान्यत्र क्वापि । भाष्यमूले तु 'संख्या चापि कपालवदिति यदुक्तं तत्परिहर्तव्यं ' इति ' एकस्मिन् वा विप्रतिषेधात् ' इत्यस्य सूत्रस्यावतरणत्वेन मुद्रितम् । वस्तुतस्तु कपालवत् इत्यन्तं सूत्रमेव, उपरिष्टात्तु भाष्यम् । सूत्रोपन्यासपद्धतिरेतादृशी भाष्ये भूयसी ।

सू० ४९ ( १ ) नैक इति ल ।

सू० ५० ( १ ) दयूपे इति ल ।

५१ चरौ वा लिङ्गदर्शनात् । ४८ भादौ, ४५ य.

अधि० १२, १४ मण्डनः.

५२ तस्मिन् पेषणमनर्थलोपात् स्यात् । ४९ भादौ, ४६ य.

५३ अक्रिया वाऽपूपहेतुत्वात् । ५० भादौ, ४७ य

अधि० १३, १५ मण्डनः.

५४ पिण्डार्थत्वाच्च संयवनम् । ५१ भादौ, ४८ य.

अधि० १४ १६ मण्डनः.

५५ संवपनं च तादर्थ्यात् । ५२ भादौ, ४९ य.

अधि० १५, १७ मण्डनः.

५६ संतापनमधःश्रपणात् । ५३ भादौ, ५० य.

अधि० १६, १८ मण्डनः.

५७ उपधानं च तादर्थ्यात् । ५४ भादौ, ५१ य.

अधि० १७, १९ मण्डनः.

५८ पृथुश्लक्ष्णे वाऽनपूपत्वात् । ५५ भादौ, ५२ य.

अधि० १८, २० मण्डनः.

५९ अभ्यूहश्चोपरिपाकार्थत्वात् । ५६ भादौ, ५३ य.

अधि० १९, २१ मण्डनः.

---

सू० ५१ ( १ ) वा-शब्दो नास्ति वृ-ल-सूत्रे, वृ-मूले तु अस्त्येव ।

अधि० १२ तस्मिन् पेषणं इत्यादीनि अन्तिमानि दश सूत्राणि एकादशाधिकरणे एवान्तर्भाव्य संक्षेपतो भाष्यकारेण व्याख्यातानि । पुनश्च " एवं वा पृथगधिकरणानि पेषणादीनि " इत्युक्त्वा पृथगधिकरणान्यारचितानि । अथ शीर्षकं, सौर्यचरौ पेषणाभावः इति म-सा । सौर्यचरौ पेषणबाधः इति वि-शा-वृ-ल-भा । अथ म-सापुस्तकयोः । ' तत्रैतत् संदिह्यते, किं चरौ पेषणं कर्तव्यं नेति । किं प्राप्तं' इत्यन्तं भाष्यत्वेन लिखित्वा ' तस्मिन् पेषणमनर्थलोपात् स्यात् ' इति सूत्रत्वेन महद्भिरक्षरैर्लिखित्वा पुनः ' शक्यते हि तण्डुलेषु पेषणं कर्तुं ' इति भाष्यत्वेन लिखितम् । भा-पुस्तके तु ' एवं वा ' इति भाष्यत्वेन विलिख्य ' तस्मिन् पेषणं ' इत्यादि सूत्रं महद्भिरक्षरैर्विलिख्य ' पृथगधिकरणानि पेषणादीनि ' इत्यारभ्य ' तत्रैतत् संदिह्यते किं चरौ पेषणं कर्तव्यं, नेति । किं प्राप्तम् । तस्मिन् पेषणमर्थलोपात् स्यात् । शक्यते हि तण्डुलेषु पेषणं कर्तुम् ' इत्यन्तं भाष्यं विलिखितम् । शुद्धपत्रिकायामपि नास्मिन्विषये किंचिल्लिखितम् । तथापि ' अर्थलोपात् ' इति भाष्ये मुद्रणं अशुद्धमेव । अर्थलोपे सति हि पेषणं नैव कर्तव्यं स्यात् ।

अधि० १३ सौर्यचरौ संयवनाभावः इति म-सा । सौर्यचरौ संयवनबाधः इति वि-शा-वृ-ल-भा । म-साशीर्षके सर्वत्र अभावशब्दस्य प्रयोगः, विभादिशीर्षके तु बाधशब्दस्य प्रयोगः, स एव च अध्यायानुसारेण युक्तः ।

अधि० १४ सौर्यचरौ संयवनाभावः इति म-सा । सौर्यचरौ संयवनबाधः इति वि-वृ-ल-भा ।

अधि० १५ सौर्यचरौ संतापनाभावः इति म-सा । सौर्यचरौ संतापनबाधः इति वि-वृ-ल भा ।

सू० ५६ ( १ ) श्रयणात् इति भाट्ट-टि । श्रपणार्थत्वात् इति शा ।

अधि० १६ सौर्यचरौ उपधानाभावः इति म-सा । सौर्यचरौ उपधानबाधः इति वि-वृ-ल-भा ।

अधि० १७ सौर्यचरौ पृथुश्लक्ष्णबाधः इति वि-शा-वृ-ल । सौर्यचरौ पृथुश्लक्ष्णाभावः इति म-सा । सौर्यचरौ प्रथनश्लक्ष्णीकरणयोर्बाधः इति भा ।

सू० ५८ ( १ ) पृथुश्लक्ष्णौ चापूपार्थत्वात् इति शा-सोम । पृथुश्लक्ष्णे चानपूपत्वात् इति वृ-ल-सूत्रे, वृ-मूले तु ' तयोरपूपार्थत्वात् ' इति । पृथुश्लक्ष्णे चापूपार्थत्वात् इति य ।

अधि० १८ सौर्यचरौ अभ्यूहाभावः इति म-सा । सौर्यचरौ अभ्यूहबाधः इति वि-वृ-ल । सौर्यचरौ भस्माङ्गाराध्यारोपबाधः इति भा ।

सू० ५९ ( १ ) अभ्यूहनं चोप इति शा-सोम । ( २ ) रि पा इति छित्त्वा मुद्रणं भाट्टटि ।

अधि० १९ सौर्यचरौ अवज्वलनाभावः इति म-सा । सौर्यचरौ ज्वलनबाधः इति वि-वृ-ल ।

६० तथाऽवज्वलनम् । ५७ भादौ, ५४ य.

अधि० २०, २२ मण्डनः.

६१ व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतत्वात् । ५८ भादौ सर्वत्र, ५५ य.

॥ न्याया इहाद्ये दशमस्य पादे द्वाविंशतिर्भाष्यकृतोपदिष्टाः ॥

॥ विधेः अपिवा अपिवा सकपाले उपधानं पञ्चपञ्चाशत् ॥

॥ इति दशमाध्यायस्य प्रथमः पादः ॥

* * * *

॥ अथ दशमाध्यायस्य द्वितीयः पादः ॥

अधि० १.

१ कृष्णलेष्वर्थलोपादपाकः स्यात् ।

२ स्याद्वा प्रत्यक्षशिष्टत्वात् प्रदानवत् ।

अधि० २.

३ उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् । २ बिन्दुः.

४ क्रियेत वाऽर्थवादत्वात् तयोः संसर्गहेतुत्वात् ।

५ अकर्म वा चतुर्भिराप्तिवचनात्, सह पूर्णं पुनश्चतुरवत्तम् ।

६ क्रिया वा मुख्यावदानपरिमाणात् सामान्यात् तद्गुणत्वम् ।

७ तेषां चैकावदानत्वात् ।

८ आप्तिः संख्यासमानत्वात् ।

९ सतोस्त्वाप्तिवचनं व्यर्थम् ।

१० विकल्पस्त्वेकावदानत्वात् ।

११ सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यात् ।

१२ अपिवा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् । ११ भादौ सर्वत्र.

---

ज्वलनशब्दप्रयोगो दुष्ट एव । सौर्यचरौ अवज्वलनबाधः इति भा ।

सू० ६० ( १ ) तथा च ज्व इति बृ–ल ।

अधि० २० सौर्यचरौ व्युद्धृत्यासादनाभावः इति म–सा । सौर्यचरौ व्युद्धृत्यासादनबाधः इति वि–बृ–ल । सौर्यचरौ व्युद्धरणबाधः इति भा ।

सू० ६१ ( १ ) सादं च इति बृ–ल सूत्रे, बृ–मूले तु सादनं इत्येव । सादनं प्र इति य । ( २ ) वश्रुतित्वात् इति शा–सोमभिन्ने सर्वत्र । वश्रुतत्वात् इति शा–सोम । भा–मूले ' प्रकृतावश्रुतित्वात् ' इति प्रतीकं गृहीतं, परंतु ' प्रकृतौ न श्रूयते ' इति व्याख्यातम् । तेन अश्रुतत्वात् इत्येव पाठो युक्त इति मन्यामहे ।

अधि० १ कृष्णले चरौ पाकानुष्ठानं इति भा–भिन्ने । नहि कृष्णलमेव चरुः किंतु कृष्णलानां चरुः । तेन कृष्णले इत्यसमस्तं सप्तम्यन्तं पदमशुद्धम् । कृष्णलचरौ पाकानुष्ठानं इति भा ।

अधि० २ कृष्णले उपस्तरणाभिघारणयोरभावः इति म–सा–बृ । अत्राभावशब्दप्रयोगो न युक्तः । एवं बिन्दुशीर्षकेऽपि । कृष्णले इत्यपि न युक्तं, कृष्णलचरौ इत्येव तु युक्तम् । एवं वि–बिन्दुशीर्षकयोरपि । कृष्णले उपस्तरणाभिघारणयोर्बाधः इति वि–भाट्ट–शा–ल । कृष्णले उपस्तरणाभिघारणाभावः इति बिन्दुः । कृष्णलचरौ उपस्तरणाभिघारणयोर्बाधः इति भा ।

सू० ७ ( १ ) नत्वं इति य ।

सू० ८ ( १ ) ख्या स इति च्छित्त्वा मुद्रणं ल । संख्यासमत्वात् इति य ।

सू० १२ ( १ ) ' अपिवा स्विष्टकृतः ' इत्यादि सूत्रं भादौ सर्वत्र पूर्वसूत्र एवान्तर्भावितम् । परंतु तत् पृथगेव स्यादिति मन्यामहे । ' अपिवा ' इति निपातसमुदायः द्वादशस्वध्यायेषु चतुष्षष्टिवारं समायातः । तत्र प्रकृतमेकं स्थलं वर्जयित्वा सूत्रस्य मध्य एव अपिवा इति पदं न क्वापि दृश्यते । किंतु सूत्रारम्भ एव दृश्यते । एवं सति अत्रैव कस्मान्मध्य एव निवेशः ? । तस्मात् अत्रापि ' अपिवा स्विष्टकृतः ' इत्यादि पृथगेव सूत्रं स्यादिति निश्चिन्महे । क्वापि मुद्रितपुस्तके लिखितयोर्य–पुस्तकयोरपि च पृथक्त्वेन यद्यपि न लिखितं तथापि नैतादृशी शैली सूत्रकारस्य, यत् अपिवा–शब्दस्य मध्यनिवेशो नाम ।

१३ अकर्म वाऽमंसर्गार्थनिवृत्तत्वात् तस्मादाप्तिसमर्थत्वम् । १२ भादौ.

अधि० ३

१४ भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् । १३ भादौ. ३ बिन्दुः

१५ स्याद्वा निर्धानदर्शनात् । १४ भादौ.

१६ वचनं वाऽऽज्यभक्षस्य प्रकृतौ स्याद्भागित्वात् । १५ भादौ.

१७ वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् । १६ भादौ.

अधि० ४.

१८ एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् । १७ भादौ, ४ बिन्दुः.

अधि० ५.

---

सू० १३ (१) वा सं इति अवग्रहराहित्यं वृ-भिन्ने-भादौ सर्वत्र । वाऽमं इति तु वृ । स एव च पाठो भाष्यसंमतः । किंच निवृत्तित्वात् इति पाठः वृ-भिन्ने सर्वत्र । तत्रापि निवृत्तत्वात् इत्येव पाठो भाष्यात् सिध्यतीति मन्यामहे । तथाच भाष्यं " संसर्गः स्रुचि पुरोडाशचूर्णाना सूक्ष्माणां मा भूत् इति उपस्तरणेन स्रुक् स्निग्धीक्रियते । ... ननु विशदस्य कृष्णलस्य स्रुचि संयोगो भवति. यन्निमित्तमुपस्तरणमभिघारणं च स्नेहनार्थं सुवर्णस्य क्रियेत । तस्मात् प्राकृतस्य प्रयोजनस्य निवृत्तत्वात् कृष्णलेषु उपस्तरणाभिघारणे निवर्तितुमर्हतः " इति । वृत्तिश्च " संयोगाभावप्रयोजनस्य निवृत्तत्वात् प्रकृते तयोरेव निवृत्तिः " इति । (२) समर्थत्वात् इति वृ-सूत्रे, वृ-मूले तु समर्थ वं इत्येव ।

अधि० ३ कृष्णलचरौ भक्षसद्भावः इति भा-बिन्दुभिन्ने । कृष्णले भक्षानुष्ठानं इति बिन्दुः । कृष्णलचरौ भक्षणकर्तव्यत्वं इति भा । एकदेशान्वयोऽत्र उद्वेजकः ।

सू० १४ (१) भक्षण तु इति य । " भक्षाः कर्तव्या उत न " इति तु भाष्यम् ।

सू० १५ (१) ननिर्देशात् इति य । 'भक्षणविशेषदर्शनात्' इति तु भाष्यम् ।

सू० १६ (१) वचनं त्वाज्यभक्षस्य प्र इति य । वचनं त्वाज्यभक्षं प्र इति वृ-ल ।

सू० १७ (१) ज्यगुण इति य । ज्यगुणाभू इति रत्न ।

अधि० ४ कृष्णलचरौ एकधा ब्रह्मणे चरति इत्यनेन सहपरिहारविधानं इति म-सा । अत्र चरतिपदमयुक्तं, विषयवाक्ये परिहरति इति पदस्य विद्यमानत्वात् । कृष्णलचरौ सहपरिहारविधानं इति वि-वृ-ल । कृष्णलचरौ सहोपहारविधान इति भाट्ट । भाट्टमूले ' एकधा ब्रह्मण उपहरति ' इति विषयवाक्यम् । कृष्णलचरौ सपरिहारविधानं इति शा । सहपरिहारविधानं इति वि-शीर्षकं दृष्ट्वा ' परिहारेण सह सहपरिहारः इति निश्चितं शा-संपादकैः । तेन सहेति तुल्ययोगे इति बहुव्रीहिरयमिति विचार्य सहस्य सादेशं कृत्वा सपरिहारशब्दः प्रयुक्तस्तैः । परंतु अयुक्तमिदम् । सह परिहारः साहित्येन परिहारः, युगपदेव परिहारः इति प्रतिपादनीयमत्र । शा-मूले ' एकधा ब्रह्मण उपहरति ' इति विषयवाक्यस्योदाहृतत्वात् शीर्षके परिहारशब्दप्रयोगो न युक्तः । कृष्णले एकधा ब्रह्मणे चरति इत्यनेन सहपरिहारविधानं इति बिन्दुः । बिन्दु-मूले तु विषयवाक्ये उपहरति इतिप्रयोगात् शीर्षके चरति-पदप्रयोगो दुष्टः । वि-शा-भाट्ट-शीर्षकेषु कस्य परिहार उपहारो वेत्यनुक्तत्वात् संदेहजनकत्वम् । कृष्णलचरौ ब्रह्मभक्षाणा युगपत्परिहरणीयत्वं इति भा ।

सू० १८ (१) विहित इति भाट्ट-शा-सोम-ल । व्याहृत इति चौ ।

अधि० ५ कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणं इति म-सा-वि-शा-वृ-ल । कृष्णलचरौ ब्रह्मणे सर्वभागार्पणं इति भाट्ट । कृष्णले ब्रह्मणे सर्वभक्षता इति बिन्दुः । अस्यार्थं बिन्दु-संपादका अपि जानन्ति नवेति संशय एवास्माकम् । ब्रह्मणे इति चतुर्थी तावत् क्वापि नान्वेति । किंच, ब्रह्मा वा सर्वैर्भक्ष्यते, ब्रह्मा वा सर्वान् भक्षयति इति वायसः सर्वभक्षक इतिवत् विवक्षितं संपादकैरिति न ज्ञायते । कृष्णल-

१९ सर्वत्वं च तेषामधिकारात् स्यात् । १८ भादौ, ५ बिन्दुः.

२० पुरुषापनयो वा तेषामवाच्यत्वात् । १९ भादौ.

अधि० ६.

२१ पुरुषापनयात् स्वकालत्वम् । २० भादौ, ६ बिन्दुः.

अधि० ७.

२२ एकार्थत्वादविभागः स्यात् । २१ भादौ, ७ बिन्दुः.

अधि० ८.

२३ ऋत्विग्दानं धर्ममात्रं स्याद् ददातिसामर्थ्यात् । २२ भादौ, ८ बिन्दुः.

२४ परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् । २३ भादौ.

२५ दक्षिणायुक्तवचनाच्च । २४ भादौ.

२६ न चान्येनाऽऽनम्येत परिक्रयात् कर्मणः परार्थत्वात् । २५ भादौ.

२७ परिक्रीतवचनाच्च । २६ भादौ, २५ वृ.

२८ सनिवन्ये च भृतिवचनात् । २७ भादौ, २६ वृ.

२९ नैष्कर्तृकेण संस्तवाच्च । २८ भादौ, २७ वृ.

अधि० ९.

---

चरौ सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहारः इति भा ।

सू० १९ ( १ ) कात् स्यात् इति य ।

अधि० ६ भक्षभागाना स्वस्वकाले ब्रह्मणा भक्षणं इति भा-भाट्टभिन्ने । तत्र दर्शपूर्णमासादावपि ब्रह्मभक्षेषु सोयं न्यायो योजनीयोऽभिमतः ? वस्तुतस्तु कृष्णलचरौ इत्यवश्यं वक्तव्यम् । कृष्णलचरौ भक्षणे न प्राकृतकालबाधः इति भाट्ट । ब्रह्मकृतभक्षणे इति वक्तव्यम् । कृष्णलचरौ युगपदुपहृतानां सर्वेषां भक्षाणां स्वस्वकाले भक्षणं इति भा ।

सू० २१ ( १ ) लत्वात् इति चौ ।

अधि० ७ ब्रह्मभक्षे चतुर्धाकरणादीनामभावः इति म-सा-वि-शा-बिन्दु-वृ-ल। अत्र ब्रह्मभक्षे इति पदं आदि-पदं च निरर्थकम् । कृष्णलचरौ चतुर्धाकरणाद्यभाव इति भाट्ट । अत्राप्यादिपदं व्यर्थम् । ब्रह्मभक्षे चतुर्धाकरणाद्यभावः इति ल । म-सा-शीर्षकवत् अशुद्धमिदम् । कृष्णलचरौ चतुर्धाकरणादीनामननुष्ठानं इति भा । अत्राप्यादिपदं निरर्थकमेव ।

अधि० ८ ज्योतिष्टोमे ऋत्विग्दानस्य आनत्यर्थता इति म-सा-बिन्दुः । ऋत्विग्दानस्यानत्यर्थता इति वि-शा-वृ-ल । ऋत्विग्भ्यो दक्षिणादानमानत्यर्थं इति भाट्ट । ज्योतिष्टोमादौ दक्षिणादानस्य ऋत्विगानत्यर्थत्वं इति भा ।

सू० २३ ( १ ) मात्रं स्यात् इति शा-सोम-बिन्दु-य । मात्रार्थं स्यात् इति अन्यत्र भादौ । भा-मूले तु " ऋत्विग्दानं धर्ममात्रं स्यात् " " तस्माद्धर्ममात्रं दानं " इत्युक्तम् । तेन धर्ममात्रं इत्येव सूत्रपाठो भाष्यसंमतः । ननु उत्तरसूत्रे ' परिक्रयार्थं ' इत्युक्तत्वात् अत्र सूत्रेऽपि धर्ममात्रार्थं इत्येव वक्तव्यमिति चेन्न । दानं परिक्रयः इति सामानाधिकरण्यासंभवात् परिक्रयार्थं इत्यस्यैव साधुत्वेऽपि दानं धर्ममात्रं इत्यत्र सामानाधिकरण्यस्य सुलभत्वेन अर्थपदप्रयोगस्यानावश्यकत्वात् ।

सू० २६ नास्तीदं सूत्रं वृ ।

सू० २८ ( १ ) सनिवन्येव भृ इति भाटि-म-सा-वि-भाट्ट-शा-ल । अशुद्धोऽयं पाठः । सनिवन्ये इति सप्तम्यन्तं हि पदम् । तथा सति ' व ' इत्यस्य कोऽर्थः ? कथं च सनिवन्येव इत्येकपद्यं वा, इवेति पदं वा समर्थयितुं शक्येत ? । " सनिवनिप्राप्तं सनिवन्यं याच्ञाप्राप्तमित्यर्थः । तस्मिन् भृतिवचनं भवति " इति हि भाष्यम् ।

सू० २९ ( १ ) च-शब्दो नास्ति वृ-ल ।

अधि० ९ ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थता इति भा-भाट्टभिन्ने । म-सामूले तु " सन्ति शेषभक्षा ज्योतिष्टोमे दर्शपूर्णमासयोश्च " इत्युक्तम् । तथाच ज्योतिष्टोमादौ इति वा वक्तव्यं, कुत्रेति नैव वा

३० शेषभक्षाश्च तद्वत् । २९ भादी, २८ वृ, ९ बिन्दुः.

३१ संस्कारो वा द्रव्यस्य परार्थत्वात् । ३० भादौ, २९ वृ.

३२ शेषे च समानत्वात् । ३१ भादौ, ३० वृ.

३३ स्वामिनि च दर्शनात् तत्सामान्यादितरेषां तथात्वम् । ३२ भादौ, ३१ वृ.

३४ तथा चान्यार्थदर्शनम् । ३३ भादौ.

अधि० १०.

३५ वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् । ३४ भादौ, ३२ वृ, १० बिन्दुः.

अधि० ११.

३६ परिक्रयश्च तादर्थ्यात् । ३५ भादौ, ३३ वृ, ११ बिन्दुः.

३७ प्रतिषेधश्च कर्मवत् । ३६ भादौ, ३४ वृ.

३८ स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् । ३७ भादौ, ३५ वृ.

३९ न दक्षिणाशब्दात् तस्मान्नित्यानुवादः स्यात् । ३८ भादौ, ३६ वृ.

अधि० १२, ११ भाट्ट.

४० उदवसानीयः सत्रधर्मो स्यात् तदङ्गत्वात् तत्र दानं धर्ममात्रं स्यात् । ३९ भादौ, ३७ वृ, १२ बिन्दुः.

४१ न त्वेतत्प्रकृतित्वाद्, विभक्तचोदितत्वाच्च । ४० भादौ, ३८ वृ.

अधि० १३, १२ भाट्ट.

४२ तेषां तु वचनाद् द्वियज्ञवत् सहप्रयोगः स्यात् । ४१ भादौ, ३९ वृ, १३ बिन्दुः.

---

वक्तव्यम् । शेषभक्षः प्रतिपत्त्यर्थः इति भाट्ट । शेषभक्षाणां शेषप्रतिपत्त्यर्थत्वं इति भा ।

सू० ३३ ( १ ) रेषु त इति य ।

सू० ३४ नास्तीदं सूत्रं वृ ।

अधि० १० सत्रे ऋत्विग्वरणाभावः इति भा–भाट्टभिन्ने । सत्रे ऋत्विजां न वरणं इति भाट्ट । सत्रे वरणाननुष्ठानं इति भा ।

अधि० ११ सत्रे परिक्रयाभावः इति भा–भिन्ने । सत्रे परिक्रयाननुष्ठानं इति भा ।

सू० ३८ ( १ ) प्रसर्पि इति ल ।

अधि १२ उदवसानीयस्य सत्रानङ्गतया तत्र दानस्य परिक्रयार्थता इति म–सा । उदवसानीये दानस्य परिक्रयार्थता इति वि–शा–बिन्दु–वृ–ल । उदवसानीये दक्षिणायाः परिक्रयार्थता इति भाट्ट । उदवसानीयस्य सत्रानङ्गत्वाद्दक्षिणादानस्य ऋत्विक्परिक्रयार्थत्वं इति भा ।

सू० ४० ( १ ) सानीया स इति रत्न । ( २ ) धर्मा त इति रत्न ।

सू० ४१ ( १ ) न त्वतत् इति वृ-य । नत्वेतत्प्रकृतित्वादिभक्तचोदितत्वात् इति ल–पाठो नैव ग्राह्यः । ( २ ) च-शब्दो नास्ति वृ–य ।

अधि० १३ अत्र भाष्ये तेषां तु० एकैकशस्तु० इति ४२,४४ सूत्राभ्यां त्रयोदशमधिकरणम् । तत्रान्यान्० इति ४३ सूत्रेण तु चतुर्दशमधिकरणं अन्तरागार्भिणी । म–सा पुस्तकयोस्तु अन्तरागार्भिण्यां १३ अङ्कः, तेषांतु० एकैकशस्तु० इत्यधिकरणे १४ अङ्कश्च मुद्रितः । विस्तरे तु तेषांतु० तत्रान्यान्० इति द्वे सूत्रे ( ४२–४३ ) विलिख्य त्रयोदशाधिकरणमारचितं, एकैकशस्तु० इति ( ४४ ) सूत्रं विलिख्य चतुर्दशमधिकरणमारचितम् । भाट्टे तु तेषां तु० इति सूत्रे द्वादशं, तत्रान्यान्० एकैकशस्तु इतिसूत्राभ्यां त्रयोदशमधिकरणं प्रदर्शितम् । शास्त्रदीपिकायां तु तेषां तु० इत्यत्र त्रयोदशं, तत्रान्यान्० एकैकशस्तु० इत्यत्र चतुर्दशमधिकरणं प्रदर्शितम् । बिन्दौ पुनः शा–वत् । वृत्तौ तु तेषां तु० इत्यत्र त्रयोदशं, तत्रान्यान् इत्यत्र चतुर्दशं, एकैशस्तु० इत्यत्र पञ्चदशमधिकरणं प्रदर्शितम् । 'ल' तु वृ–वदेव । अथ शीर्षकाणि अधिकरणाङ्कसाहित्येन प्रदर्श्यन्ते । पृष्ठशमनीयस्य ऋत्विगन्तरसंपादनेन प्रत्येककर्तृत्वं इति १३ भा । उदवसानीयस्यर्त्विजां

अधि० १४ अन्तरार्भिणी, १३ म-सा-वि-भाट्ट.

४३ तत्रान्यानृत्विजो वृणीरन् । ४२ भादौ, ४० वृ, १४ बिन्दुः.

पूर्वाधिकरणशेषसूत्रं भा अधि० १५ वृ-ल, १४ म-सा-वि.

४४ एकैकशस्त्वेविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् । ४३ भादौ, ४१ वृ.

अधि० १५, १६ वृ-ल, १४ भाट्ट.

४५ कामेष्टौ च दानशब्दात् । ४४ भादौ, ४२ वृ, १५ बिन्दुः.

४६ वचनं वा सत्रत्वात् । ४५ भादौ, ४३ वृ.

अधि० १६, १७ वृ-ल १५ भाट्ट

४७ द्वेष्ये चाचोदनात् दक्षिणाऽपनयैः स्यात् । ४६ भादौ, ४४ वृ, १६ बिन्दुः.

अधि० १७, १८ वृ-ल, १६ भाट्ट.

४८ अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद् विप्रतिषेधादस्थ्नाम् । ४७ भादौ, ४५ वृ, १७ बिन्दुः.

४९ यावदुक्तमुपयोगः स्यात् । ४८ भादौ, ४६ वृ.

अधि० १८, १९ वृ-ल, १८ तः १९ मण्डनः. १७ भाट्ट.

५० यदि तु वचनात्तेषां जपसंस्कारमर्थेलुप्तं सेष्टि तदर्थत्वात् । ४९ भादौ, ४७ वृ, १८ बिन्दुः.

---

एकैकनानुष्ठानं इति १३ म-सा-बिन्दु-वृ-ल । उदवमानीय प्रत्येक यष्टृता इति १४ वि १५ वृ-ल । उदवमानीयः सत्रिभिरेकैकश्येन कार्यः इति १२ भाट्ट । पृष्ठशमनीये सत्रिभ्योऽन्येषामृत्विक्त्वं इति १४ भा । उदवसानीय सात्रिभ्योऽन्येषामृत्विक वं इति १४ म-सा-बिन्दुः । उदवसानीयस्यर्त्विजां सत्रिभ्यो भिन्नता इति १३ वि-शा, १४ वृ । उदवसानीयस्यर्त्विजां सत्रिभ्यो भेदः इति १४ ल । उदवसानाये सत्रिभ्योऽन्य एवर्त्विजः इति १३ भाट्ट ।

सू० ४४ ( १ ) एकश इति टुप्-टी-य । ( २ ) स्त्वप इति भाट्ट । ( ३ ) प्राकृतैश्चै इति य ।

अधि० १५ कामेष्टौ दानस्यादृष्टार्थता इति भाट्टभिन्नाः सर्वे । सारस्वते कामेष्टौ दक्षिणादानमदृष्टार्थं इति भाट्ट-शीर्षकमेव साधीयः ।

अधि० १६ दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थता इति म-सा-वि-शा-वृ-ल । दर्शपूर्णमासयोर्द्वेष्याय दानमदृष्टार्थं इति भाट्ट । दर्शपूर्णमासयोर्द्वेष्यदानस्यादृष्टार्थता इति बिन्दुः । एषु सर्वेषु दर्शपूर्णमासयोरित्युक्तम् । तन्न शुद्धं न चाशुद्धम् । सिद्धान्तस्तु अत्र " दर्शपूर्णमासयोः पत्नीसंयाजेषु ' यादेव कपालमभिजुहुयात् वैश्वानरं द्वादशकपालं निर्वपेत् ' इति विहितायां वैश्वानरेष्टौ द्वेष्याय किंचिद्दानमुक्तं तददृष्टार्थमेव नानत्यर्थं " इति । अथ वैश्वानरेष्टौ द्वेष्यसंप्रदानकदानस्यादृष्टार्थता इति भा । वैश्वानरेष्टयस्तावदनेकाः । न च सर्वत्र द्वेष्याय दानम् । इति कृत्वा विश्वानरेष्टौ इति शीर्षकस्थं पदं अतिव्यापकम् । दार्शपौर्णमासिकपत्नीसंयाजगतकपालाभिहोमनिमित्तकवैश्वानरेष्टौ द्वेष्याय दानस्यादृष्टमात्रार्थत्वं इति तु शीर्षकमावश्यकम् ।

सू० ४७ ( १ ) वा चो इत्यवग्रहशून्यता वृ-ल-टीसूत्रे । वृ-मूले तु वाऽचो इत्येव । वा चोदनेनादक्षि इति रत्न । ( २ ) नयात् इत्यन्तमेव सूत्रं, स्यात्-पदं नास्ति वृ-ल ।

अधि० १७ जीवतामस्थियज्ञः इति भा-भाट्टभिन्ने । अस्थियज्ञस्य जीवतोऽधिकारः इति भाट्ट । अस्थियज्ञस्य जीवदधिकारिकत्वं इति भा ।

अधि० १८ अस्थियागे अस्थ्नां जपाद्यननुष्ठानं इति म-सा-वि-शा । अस्थियागे वचनादिशरीरसंस्कारलोपः इति भाट्ट । अस्थियज्ञे अस्थ्नां जपाद्यनुष्ठानं इति बिन्दुः । जपाद्यननुष्ठानं इत्येवात्र वक्तव्यम् । आस्थियज्ञस्य मृताधिकारित्वपक्षे जपसंस्कारेष्टीनां लोपः इति भा ।

सू० ५० ( १ ) जयसं इति ल-पाठो न शुद्धः । ( २ ) सेष्टित इति संधाय मुद्रणं वि-शा । तदशुद्धम् ।

अधि० १९, २० वृ-ल मण्डनाः, १८भाट्ट.

५१ क्रत्वर्थं तु क्रियेत गुणभूतत्वात्। ५१ चौ, ५० म–साभिन्ने भाट्टौ, ४८ वृ, १९ बिन्दुः.

अधि० २०, २१ वृ-ल मण्डनाः, १९ भाट्ट.

५२ काम्यानि तु न विद्यन्ते कामाज्ञानाद् यथेतरस्यानुच्यमानानि। ५१ भाट्टौ, ५० म–सा–चौ, ४९ वृ, २० बिन्दुः.

अधि० २१, २२ वृ-ल-मण्डनाः, २० भाट्ट.

५३ ईहार्थाश्चाभावात् सूक्तवाकवत्। ५२ भाट्टौ, ५१ म–सा, ५० वृ, २१ बिन्दुः.

५४ स्युर्वाऽर्थवादत्वात्। ५३ भाट्टौ, ५२ म–सा, ५१ वृ.

५५ नेच्छाऽभिधानात् तदभावादितरस्मिन्। ५४ भाट्टौ, ५३ म–सा, ५२ वृ.

अधि० २२, २३ वृ-ल-मण्डनाः, २१भाट्ट.

५६ स्युर्वा होतृकामाः। ५५ भाट्टौ, ५४ म–सा, ५३ वृ, २२ बिन्दुः.

५७ न तदाशीष्ट्वात्। ५६ भाट्टौ, ५५ म–सा, ५४ वृ.

अधि० २३, २४ वृ–ल-मण्डनाः, २२ भाट्ट.

५८ सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्। ५७ भाट्टौ, ५६ म–सा, ५५वृ, २३ बिन्दुः.

५९ स्याद्वोभयोः प्रत्यक्षशिष्टत्वात्। ५८भाट्टौ, ५७ म–सा, ५६ वृ.

---

अधि० १९ अस्थियज्ञे औदुम्बरीमानशुक्रस्पर्शानुष्ठानं इति म–सा। अस्थियज्ञे शाखामानशुक्रस्पर्शानुष्ठानं इति वि–शा। अस्थियागे शाखामानशुक्रस्पर्शालोपः इति भाट्ट। अस्थियज्ञे शुक्रादिस्पर्शे अस्थ्नां कर्तृत्वं इति बिन्दुः। अस्थियागे त्वर्थकर्मानुष्ठानं इति वृ। अस्थियज्ञे शाखामानशुक्रस्पर्शौ इति ल।

सू० ५१ इदं सूत्रं म–सा–पुस्तकयोः न सूत्रयोग्यस्थूलाक्षरैर्मुद्रितं किंतु भाष्ययोग्यलघुभिरेवाक्षरैर्मुद्रितम्। अधिकरणाङ्कस्तु मुद्रित एव। अत्र चौ–पुस्तके काम्यानि तु०इति ५०, क्रत्वर्थं तु० इति ५१ इति वैपरीत्येन मुद्रणमशुद्धम्।

अधि० २० अस्थियज्ञे अस्थ्नां काम्यकर्माद्यननुष्ठानं इति म–सा–वि–शा–बिन्दु–वृ। अस्थियागे जीवदधिकारपक्षे सत्रव्रताश्रिता गुणकामाः कार्याः इति भाट्ट। अस्थियागे अस्थ्नां काम्यकर्माद्यनुष्ठानं इति ल। अननुष्ठानं इति वक्तव्यम्। अस्थियज्ञस्य मृताधिकारित्वपक्षे गुणकामानामननुष्ठानं इति भा।

सू० ५२ (१) तु वि इति दुष्पाठो न युक्तः। (२) कामज्ञा इति चौ–पाठो न युक्तः। (३) स्यानूच्य इति चौ–य।

अधि० २१ अस्थियज्ञे अस्थ्नां सूक्तवाकगताशासनानुष्ठान इति भा-भाट्टभिन्ने। अस्थियागे सूक्तवाकगताशासनाभावः इति भाट्ट। अस्थियज्ञस्य मृताधिकारित्वपक्षे सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागाननुष्ठानं इति भा।

सू० ५३ (१) इहा इति भाट्ट–य। स तु लेखकप्रमादः।

अधि० २२ अस्थियज्ञे होतृकामाभावः इति म–सा–वि–शा–वृ–ल। अस्थियागे होतृकामाभावः इति भाट्ट। अस्थियज्ञे होतुः कामाभावः इति बिन्दुः। अस्थियज्ञे मृताधिकारपक्षे होतृकामानामननुष्ठानं इति भा।

अधि० २३ यजमानस्य दिष्टगतावपि सर्वस्वारस्य समापनं इति म–सा। यजमानमरणेऽपि सर्वस्वारस्य समापनं इति वि–शा–वृ–ल। सर्वस्वारयागे यजमानमरणेऽपि समापनमस्ति इति भाट्ट। यजमानस्य मृतावपि सर्वस्वारसमापनं इति बिन्दुः। यजमानमरणोत्तरमपि सर्वस्वारस्य समापनं इति भा।

सू० ५८ (१) रस्यादि इति चौ–पाठो न ग्राह्यः। (२) दिष्टे गतौ इति वृ–ल। (३) र्मणा जी इति रत्न।

अधि० २४, २५ वृ-ल, २१ भाट्ट.

६० गते कर्मास्थियज्ञवत् । ५९ भादौ, ५८ म-सा, ५७ वृ, २४ बिन्दुः.

अधि० २५, २६ वृ-ल, २४ भाट्ट.

६१ जीवत्यवचनमायुराशिषस्तदर्थत्वात् । ६० भादौ, ५९ म-सा, ५८ वृ, २५बिन्दुः.

६२ वचनं वा भागित्वात् प्राग् यथोक्तात् । ६१ भादौ, ६० म-सा, ५९ वृ.

अधि० २६, २७ वृ-ल, २५ भाट्ट.

६३ क्रिया स्याद् धर्ममात्राणाम् । ६२ भादौ, ६१ म-सा, ६० वृ,२६ बिन्दुः.

अधि० २७, २८ वृ-ल, २६ भाट्ट.

६४ गुणलोपे च मुख्यस्य । ६३ भादौ, ६२ म-सा, ६१ वृ, २७ बिन्दुः.

अधि० २८, २९ वृ-ल, २७ भाट्ट.

---

अधि० २४ यजमानस्य दिष्टगतौ सर्वस्वारस्य शुक्रस्पर्शादियोग्याङ्गानुष्ठानं इति म-सा । सर्वस्वारे कार्यबाध्यव्यवस्था इति वि-शा-वृ-ल । सर्वस्वारयागे कार्यबाध्यव्यवस्था इति भाट्ट । यजमानस्य मृतौ सर्वस्वारस्य शुक्रस्पर्शाद्यनुष्ठानं इति बिन्दुः । सर्वस्वारस्येति षष्ठ्याः क्वान्वयः ? । मृताधिकारपक्षेऽस्थियज्ञ इव सर्वस्वारेऽपि बाध्याबाध्यविवेकः इति भा । ' अस्थियज्ञ इव ' इति उपमा ' सर्वस्वारेऽपि ' इत्यपिशब्दश्च व्यर्थ एवात्र ।

अधि० २५ सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनं इति म-सा-वि-भाट्ट-शा-ल । सर्वस्वारे यजमानमृतावपि आयुराशंसनं इति बिन्दुः । सर्वस्वारे यजमाने मृतेपि आयुराशंसनं इति वृ । दिष्टगतावपि, मृतावपि, मृतेपि इति सर्वं सिध्दान्तविरुद्धम् । सर्वस्वारे जीवद्दशायां क्रियमाणप्रायणीयादौ सूक्तवाकान्तर्गतायुराशासनादेरनुष्ठानं इति भा-शीर्षकं तु युक्तम् ।

अधि० २६ द्वादशाहे ऋतुयाज्याद्यनुष्ठानं इति भा-भाट्टभिन्ने । अयुक्तमिदं शीर्षकम् । द्वादशाहे सत्ररूपे ऋतुयाजा ऋतुयाज्याश्च कर्तव्या नवेति नास्ति संशयः । तत्र यद्वरणं क्रियते यच्च आत्रेयाय हिरण्यं दीयते तत्रैव संशयः । सत्रे ऋत्विग्वरणं नास्तीति सिद्धमेव प्राक् सर्वेषां यजमानत्वात् । अर्थात् ऋतुयाज्यासु यद्वरणं तदपि न स्यादिति शङ्का तु संभाव्यते । तत्रोच्यते, ऋतुयाज्यावरणादिकं अदृष्टार्थत्वात् कर्तव्यमिति । तथाच ऋतुयाज्यानामनुष्ठानं मुक्तसंशयं क्रियतएव । अस्मिन्नधिकरणे तच्च प्रतिपादनीयम् । वरणं तु प्रतिपादनीयं इति उक्तशीर्षकस्यायुक्तता । किंच द्वादशाहे इति सामान्यः शब्दोऽप्ययुक्तः । द्वादशाहे अहीनरूपे एकयजमानके ऋतुयाज्यावरणं कर्तव्यमेवेति न तत्रापि निर्णयापेक्षा । इति कृत्वा ' द्वादशाहे सत्रे ' इति वा ' सत्रे ' इत्येव वा वक्तव्यम् । अथ सत्रे ऋतुयाज्यावरणं आत्रेयाय दानं च कर्तव्यं इति भाट्ट । सत्रे अदृष्टार्थयोर्ऋतुयाज्यावरणहिरण्यदानयोरनुष्ठानं इति भा ।

अधि० २७ पवमानेष्टौ निर्वापानुष्ठानं इति भा-ल-भिन्ने । पवमानेष्टौ सर्वनिर्वापानुष्ठानं इति ल । तर्हि किं दर्शादीष्टौ अर्धनिवाप एव क्रियते ? तस्मात् सर्वेत्यशुद्धम् । पवमानेष्टिषु अग्निहोत्रहवणीलोपेऽपि निर्वापानुष्ठानं इति भा । लोपः प्राक् विद्यमानस्य भवति । पवमानेष्टिभ्यः प्राक् तु अग्निहोत्रहवणी नास्त्येवेति तस्या लोपः कथं स्यात् ? ततश्च अग्निहोत्रहवण्यभावेऽपि इति वक्तव्यम् ।

सू० ६४ ( १ ) पे तु मु इति वृ-ल-सूत्रे, वृ-मूले तु ' पेऽपि मु ' इति । पे न मु इति शाङ्करशारीरभाष्ये रत्नप्रभायां च ( ३।३।४० ब्र०सूत्रे )

अधि० २८ वाजपेये मुष्टिलोपः इति भा-भिन्ने सर्वत्र । तर्हि किं वाजपेये सर्वैः सर्वदा पञ्चाङ्गुलिहस्तः प्रसारयितव्य एव ? न कदापि मुष्टिः कर्तव्या ? । अयि भोः, वाजपेये यः प्राजापत्यः सप्तदशशरावश्चरुः अश्वावघ्राणनार्थं क्रियते तदीयनिर्वापाङ्गभूतो न मुष्टिः किंतु अन्यदेव किंचित् पात्रं, दर्शादौ तु मुष्टिना निर्वापः कर्तव्यः, अत्र तु मुष्टेर्लोपो नाम मुष्टिना निर्वापो न कर्तव्य इत्येव । तथा च वाजपेये मुष्टिलोपः इति शीर्षकं साकूतहास्य-

६५ मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् । ६४ भादौ, ६३ म–सा, ६२ वृ, २८ बिन्दुः.

६६ न निर्वापशेषत्वात् । ६५ भादौ, ६४ म–सा, ६३ वृ.

६७ संख्या तु चोदनां प्रति सामान्यात्तद्विकारः संयोगाच्च परं मुष्टेः । ६६ भादौ, ६५ म–सा, ६४ वृ.

६८ न चोदनाभिसंबन्धात् प्रकृतौ संस्कारयोगात् । ६७ भादौ, ६६ म–सा, ६५ वृ.

अधि० २९, ३० वृ-ल, २८ भाट्ट.

६९ औत्पत्तिके तु द्रव्यतो विकारः स्याद्कार्यत्वात् । ६८ भादौ, ६७ म–सा, ६६ वृ, २९ बिन्दुः.

अधि० ३०, ३१ वृ-ल, २९ भाट्ट.

७० नैमित्तिके तु कार्यत्वात् प्रकृतेः स्यात् तदापत्तेः । ६९ भादौ, ६८ म–सा, ६७ वृ, ३० बिन्दुः.

अधि० ३१, ३२ वृ-ल, ३० भाट्ट.

७१ विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपः स्यात् तेन च कर्मसंयोगात् । ७० भादौ, ६९ म–सा, ६८ वृ, ३१ बिन्दुः.

अधि० ३२, ३३ वृ-ल, ३१ भाट्ट.

---

रसस्य पोषकम् । सप्तदशशरावे चरौ मुष्टिलोपेन चतुःसंख्यानुग्रहः इति भा ।

अधि० २९ धेनुमालभेत इत्यादिश्रुतौ धेन्वादिशब्दानां गोवाचिता इति म–सा । धेन्वादिशब्दानां गोवाचिता इति वि–भाट्ट–शा–वृ–ल । ननु लोके धेनुशब्दो गोवाचक एव । तत्र नास्ति निर्णयापेक्षा । धेनुमालभेत इत्यादौ तु धयन्ती अजाऽपि संभाव्यते तन्निरासार्थमधिकरणमिदम् । धेन्वादिशब्दानां गवान्वितप्रतिपादकता इति बिन्दुः । किमिदं गवान्वितप्रतिपादकतेति ? अर्थशून्यमिदं शीर्षकम् । द्यावापृथिव्यादौ प्रत्यक्षधेन्वादिशब्दोपदिष्टगोद्रव्येण प्रकृताजद्रव्यस्य बाधः इति भा ।

अधि० ३० वायव्यं श्वेतमालभेत इत्यनेन अजस्यैवालम्भनं इति म–सा । इत्यनेन इति तृतीयायाः कोऽर्थः । कथं च वाक्यार्थः ? । अयुक्तं शीर्षकम् । वायव्यं श्वेतं इत्यत्र अजस्यैवालम्भनं इति वि–शा–बिन्दु–ल । इदमप्ययुक्तम् । वायव्यं श्वेतमित्यत्र अजस्यैव ग्रहणं इति भाट्ट । वायव्यपशोरजस्यैवालम्भनं इति वृ । वायव्यपशौ उपदिष्टश्वेतगुणेन प्राकृताजद्रव्यस्याबाधः इति भा ।

सू० ७० ( १ ) 'गुणयोगस्य प्राकृते कर्तुं शक्यत्वात् प्राकृतः स्यात्' इति वृ–मूलम् । तेन प्राकृते इति वा, प्राकृतः इति वा सूत्रे पाठः स्यात् ।

अधि० ३१ सायस्के चित्रायां च खलेवाल्यास्तण्डुलस्य च यथाक्रमं खादिरत्वव्रैहत्वानियमः इति म–सा । खलेवालीतण्डुलयोः खादिरव्रैहत्वानियमः इति वि–भाट्ट–शा–वृ–ल । सायस्कचित्रेष्ट्योः खलेवालीतण्डुलयोः क्रमेण खादिरत्वव्रैहत्व ( व्रैहेयत्व इति अनुक्रमण्याम् ) नियामकता इति बिन्दुः । इतरेषु शीर्षकेषु अनियमं वदत्सु नियमं वदतां बिन्दुसंपादकानां किं प्रमाणम् ? । 'व्रीहिनियमाप्रवृत्तेः' इति तु बिन्दुमूलम् । सायस्के खलेवाल्यां प्राकृतखादिरत्वनियमस्य, चित्रेष्टौ तण्डुलेषु प्राकृतव्रीहियवान्यतरनियमस्य चाभावः इति भा ।

सू० ७१ ( १ ) नात् प्रकृतेर्गुण इति बिन्दु–टी । ( २ ) चशब्दो नास्ति वृ–ल ।

अधि० ३२ खलेवाल्यां तक्षणाद्यननुष्ठानं इति भा–बिन्दुभिन्ने । खलेवाल्यां तक्षणाद्यभावः इति बिन्दुः । खलेवाल्यां तक्षणादीनामननुष्ठानं इति भा ।

भा–पुस्तके पूर्वाधिकरणे एकत्रिंशमङ्कं लिखित्वा पुनरस्मिन्नप्यधिकरणे एकत्रिंश एवाङ्को लिखितः । उत्तरयोश्चाधिकरणयोः द्वात्रिंशत्रयस्त्रिंशौ अङ्कौ लिखितौ तदशुद्धम् । वस्तुतस्तु ३२।३३।३४ इत्यङ्का एव लेखनार्हाः । अस्माभिस्तु वस्तुस्थितिमनुरुध्य अधिकरणाङ्का निवेशिताः ।

७२ परेषां प्रतिषेधः स्यात् । ७१ भादौ, ७० म–सा, ६९ वृ, ३२ बिन्दुः.

७३ विप्रतिषेधाच्च । ७२ भादौ, ७१ म–सा, ७० वृ.

अधि० ३३. ३४ वृ-ल, ३२ भाट्ट.

७४ अर्थाभावे संस्कारत्वं स्यात् । ७३ भादौ, ७२ म–सा, ७१ वृ, ३३ बिन्दुः.

अधि० ३४ ३५ वृ-ल, ३३ भाट्ट.

७५ अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् । ७४ भादौ, ७३ म–सा, ७२ वृ, ३४ बिन्दुः.

॥ उदिता भाष्यकारेण चतुस्त्रिंशत्तु नीतयः ॥

॥ कृष्णलेषु सर्व एकार्थत्वात् शेषेच तेषां काम्यानि वचनं परेषां चतुस्सप्ततिः ॥

॥ इति दशमाध्यायस्य द्वितीयः पादः ॥

*　*　*　*

॥ अथ दशमाध्यायस्य तृतीयः पादः ॥

अधि० १.

१ विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् ।

२ प्रकृतिवत्त्वस्य चानुपरोधः ।

३ चोदनाप्रभुत्वाच्च ।

४ प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात् तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधिरविशेषात् प्रवर्तितः ।

५ न चाङ्गविधिरनङ्गे स्यात् ।

६ कर्मणश्चैकशब्द्यात् संनिधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद् गुणस्य चोपदेश्यत्वात् ।

७ अकार्यत्वाच्च नाम्नः ।

८ तुल्या च प्रभुता गुणे ।

९ सर्वमेवं प्रधानमिति चेत् ।

१० तथाभूतेन संयोगाद् यथार्थविधयः स्युः । ९ य.

---

सू० ७३ ( १ ) प्रतिषेधाच्च इति सूत्र वृ-भिन्ने सर्वत्र । विप्रतिषेधाच्च इति वृ । अत्र भाष्यं '' इतश्च न कर्तव्याः । विप्रतिषेधः कृतो भवेत् क्रियमाणेषु तस्याः खलेवाल्याः '' इति । तेन वृ-वदेव पाठो भाष्यसंमत इति स्पष्टम् ।

अधि० ३३ खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानं इति भाट्ट–बिन्दुभिन्ने । खलेवाल्यां पर्यूहणादिसंस्कारानुष्ठानं इति भाट्ट । खलेवाल्यां पर्यूहणाद्यनुष्ठानं इति बिन्दुः ।

सू० ७४ ( १ ) भावसं इति य । अर्थाभावसंस्कारार्थत्वं इति रत्न ।

अधि० ३४ महापितृयज्ञे धानासु अवघातानुष्ठानं इति बिन्दुभिन्ने । महापितृयज्ञे धानासु अवघाताद्यनुष्ठानं इति बिन्दुः ।

अत्र धानास्ववघातानुष्ठानं इति भाष्यमतेन, मन्थे पेषणस्य प्राकृतता इति तु वार्तिकमतेन । तदेतत् विस्तरेण वर्णकान्तरेणोक्तम् ।

सू० ७५ ( १ ) अर्थे न च इति बिन्दु–वृ । ( २ ) र्थ्यात्तत्त्व इति भा । तत्तु हस्तदोषात् ।

अधि० १ पश्वादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानं इति म–सा–वृ–शा–वि–ल । पश्वादौ प्रयाजादीतिकर्तव्यताऽनुष्ठानं इति भाट्ट । विकृतौ सामिधेन्यादि० इति म-सावत् बिन्दुः । पश्वादिविकृतौ उपदिष्टैरेकादशप्रयाजादिभिरङ्गैः प्राकृतान्तराबाधः इति भा । अङ्गरित्यस्य एकदेशस्यैकदेशे बाधेऽन्वयः मस्तकशूलं जनयति ।

सू० २ (१) वत् तस्य चा इति भाटि–म–सा–वि–भाट्ट–शा–चौ । अर्थानुसारेण तु प्रकृतिवत्त्वस्य इत्येव पाठो युक्तः ।

सू० ६ ( १ ) धानवि इति ल–पाठो न ग्राह्यः ।

सू० ९ ( १ ) प्रधानानामिति इति चौ–पाठो न ग्राह्यः । ''एवं सति सर्वं प्रधानं'' इति तु भाष्यम् । ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० १० ( १ ) न यो इति भाटि–य । ( २ ) थार्थो वि इति भटि ।

११ विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा योगात् तस्मात् सर्वं प्रधानार्थम् । १० य.

१२ समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् । ११ य.

अधि० २.

१३ हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । १२ य, २ बिन्दुः.

१४ प्रकृतिवदनुपरोधाच्च । १३ य.

१५ उत्तरस्य वा मन्त्रार्थित्वात् । १४ य.

१६ विध्यतिदेशाच्छ्रुतौ विकारः स्याद् गुणानामुपदेश्यत्वात् । १५ य.

१७ पूर्वस्मिश्चामन्त्रत्वदर्शनात् । १६ य.

अधि० ३.

१८ संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् । १७ य, ३ बिन्दुः.

१९ प्रकृत्यनुपरोधाच्च । १८ य.

२० विधेस्तु तत्र भावात् संदेहे यस्य शब्दस्तदर्थः स्यात् । १९ य.

२१ संस्कारसामर्थ्याद् गुणसंयोगाच्च । २० य.

२२ विप्रतिषेधात् क्रिया प्रकरणे स्यात् । २१ य.

अधि० ४.

---

सू० ११ ( १ ) शिष्टं प्रा इति य । शिष्टं वै इति वृ । शिष्टमेव प्रा इति मटि । ( २ ) सर्वप्र इति ल ।

अधि० २ वायव्यपशौ हिरण्यगर्भ इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वं इति म-सा । हिरण्यगर्भमन्त्रस्योत्तराघारगुणता इति वि-भाट्ट-शा । वायव्यपशौ हिरण्यगर्भादिमन्त्रस्योत्तराघारे गुणत्वं इति बिन्दुः । हिरण्यगर्भ इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वं इति वृ । हिरण्यगर्भ इत्यादिमन्त्रस्योत्तराघारगुणता इति ल ।

सू० १३ ( १ ) गर्भे पू इति शा-बिन्दु-य ।

सू० १४ ( १ ) प्रकृतिवदनु इति टी । प्रकृत्यनु इति टी-भिन्ने सर्वत्र । भाष्यं तु " प्रकृतिवदिति चोदकस्यानुपरोधो भविष्यति " इति । तेन टी-पाठ एव भाष्यसंमत इति सिध्यति ।

सू० १७ ( १ ) न्त्रद इति वृ-ल ।

अधि० ३ चातुर्मास्येषु सोमेषु आसादननियोजनयोः प्राकृतगुणविधित्वं इति म-सा-वि-शा-ल । सौमिकचातुर्मास्येषु आसादननियोजनयोर्गुणविधित्वं इति भाट्ट । चातुर्मास्यसोमयोरासादननियोजनयोः प्राकृतगुणविधित्वं इति बिन्दुः । आसादननियोजनयोः प्राकृतगुणविधित्वं इति वृ । सौमिकचातुर्मास्येषु प्राकृतासादननियोजनानुवादेन विहिताभ्यामुत्करपरिधिभ्यां प्राकृतयोर्वेदियूपयोर्बाधः इति भा । अत्र बिन्दु-शीर्षके चातुर्मास्यसोमयोः इति द्विवचनं नितान्तमशुद्धम् । भा-भिन्नशीर्षकेषु आसादननियोजनयोर्गुणभूतयोर्विधिः इत्यर्थो भाति सोऽप्ययुक्तः । वाजिनासादने उत्कररूपगुणस्य, पशुनियोजने च परिधिरूपस्य गुणस्य विधिः इति तु प्रतिपाद्यम् । तस्मात् भा-शीर्षकमेव साधु ।

सू० १९ ( १ ) चतुर्दशसूत्रस्य भाष्यादेव प्रकृतिवदनुपरोधाच्च इति पाठः स्पष्टो दृश्यते । अत्र तु " एवं च प्राकृतस्य धर्मस्य प्रापकश्चोदको नोपरोत्स्यते " इति भाष्यम् । तेन सार्वत्रिकपाठ एवात्रास्माभिर्निवेशितः ।

सू० २० ( १ ) तदर्थ स्यात् इति वृ-ल ।

सू० २२ ( १ ) याप्र इति संधाय मुद्रितं म-सा-वि-भाट्ट-शा-ल-चौ । परंतु " तस्मात् क्रियामात्रमदृष्टकार्यकं सौत्रामणीप्रकरणे स्यात् " इति भाष्यात् पदभेद एव सिध्यति ।

अधि० ४ अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानं इति म-सा-वि-शा-वृ-ल । अग्निचयने प्राकृतवैकृतदीक्षाहुतीनां समुच्चयः इति भाट्ट । अग्निचयने प्राकृतवैकृतोभयाहुत्यनुष्ठानं इति बिन्दुः ।

२३ षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् । २२ य, ४ बिन्दुः.

२४ अभ्यासात्तु प्रधानस्य । २३ य.

२५ आवृत्त्या मन्त्रकर्म स्यात् । २४ य.

२६ अपिवा प्रतिमन्त्रत्वात् प्राकृतानामहानं स्यादन्यायश्च कृतेऽभ्यासः । २५ य.

२७ पौर्वापर्यं चाभ्यासे नोपपद्यते नैमित्तिकत्वात् । २६ य.

२८ तत्पृथक्त्वं च दर्शयति । २७ य.

२९ न चाविशेषाद् व्यपदेशः स्यात् ।

अधि० ५.

३० अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद् वाक्यसंयोगात् । २९ य, ५ बिन्दुः.

३१ शिष्टत्वाच्चेतरासां यथास्थानम् । ३० य,

३२ विकारस्त्वप्रकरणे हि काम्यानि । ३१य.

३३ शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते । ३२ य.

अधि० ६.

३४ वासोवत्सं च सामान्यात् । ३३ य.

अधि० ७.

३५ अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याऽभिसंयोगात् । ३४ य.

---

अग्निचयनप्रकरणे श्रुताना दीक्षाऽऽहुतिमन्त्राणां सौमिकदीक्षाऽऽहुतिमन्त्रैः समुच्चयः इति भा ।

सू० २३ ( १ ) तन्त्र इति चौपाठो न ग्राह्यः ।

सू० २६ ( १ ) हानं स्या इति य । हानिः स्या इति य–भिन्ने सर्वत्र । परंतु " तस्मात् प्राकृतानां मन्त्राणामहानम्" "तस्मादपि प्राकृतानामहानमिति " इति भाष्याभ्यां य-पाठ एव भाष्यसंमत इति निश्चीयते ।

सू० २७ ( १ ) वाभ्यासे इति वृ–सूत्रे, वृ–मूले तु " हेत्वन्तरमाह " इत्यवतरणात् " चाभ्यासे " इत्येव सिध्यति ।

सू० २९ ( १ ) न वा वि इति वृ–ल, परंतु वृ–मूले " इतोऽपि न बाध इत्याह " इत्यवतरणं भाष्ये च " इतश्चानिवृत्तिः, समुच्चय इति " इत्युक्तत्वात् वृ–लपाठो न युक्तः । ( २ ) षाद्युप इति य । य–लेखकस्य प्राचीनकायस्थलिपिलिखितस्यान्यथावाचनाद्दोषोऽयं संजातः स्यात् ।

अधि० ५ पुनराधाने अग्न्याधानदक्षिणानां निवृत्तिः इति म–सा–वि–वृ–ल । पुनराधाने दक्षिणादीनां निवृत्तिः इति भाट्ट । महायाज्ञिकस्तत्रभवान् । पुनराधाने दक्षिणा का चिदपि न देया वा? दक्षिणादीनां इति आदिशब्देन किं गृह्यते तत्रभवद्भिः ? । अशुद्धमिदम् । पुनराधाने प्रथमाधानदक्षिणानिवृत्तिः इति बिन्दुः । नैमित्तिके पुनराधाने श्रुतदक्षिणया सामान्यविहितैकादिदक्षिणाया बाधः इति भा ।

अधि० ६ आग्रयणे वासोवत्साभ्यां अन्वाहार्यस्य निवृत्तिः इति म–सा–वि–शा । आग्रयणे वासोवत्साभ्यां अन्वाहार्यस्य बाधः इति भाट्ट । वासोवत्साभ्यामन्वाहार्यस्य निवृत्तिः इति वृ । वासोवत्साभ्यामन्वाहार्यस्याग्रयणे निवृत्तिः इति ल । आग्रयणे उपदिष्टवासोवत्सदक्षिणया प्राकृतान्वाहार्यदक्षिणाया बाधः इति भा ।

इदमुत्तरं चेत्यधिकरणद्वयं बिन्दौ पञ्चमेऽधिकरणे एवान्तर्भावितम् ।

सू० ३४ ( १ ) वासो वत्सं इति च्छित्त्वा मुद्रितं म–सा–वि–भाट्ट–शा–ल–चौ । अशुद्ध एवायं पाठः । वासोवत्सं इति समाहारद्वंद्वोऽयम् ।

अधि० ७ आग्रयणे वासोवत्सयोः अन्वाहार्यधर्मानुष्ठानं इति म–सा–वि–भाट्ट–शा । वासोवत्सयोः अन्वाहार्यधर्मानुष्ठानं इति वृ । वासोवत्सयोः आग्रयणे अन्वाहार्यधर्मानुष्ठानं इति ल । आग्रयणे वासोवत्सयोः प्राकृतान्वाहार्यधर्मानुष्ठानं इति भा ।

सू० ३५ ( १ ) द्धर्मः स्या इति वृ–ल–य । भाष्ये तु " तद्धर्मा वत्सः स्यात्, तद्धर्मकं च वासः " इत्युक्तत्वात् बहुव्रीहिः समासोऽत्र कर्तुं युक्तः । तथाचात्र समासान्तोऽनिच प्रत्ययः ।

अधि० ८, ६ बिन्दुः.

३६ दाने पाकोऽर्थलक्षणः । ३५ य, ६ बिन्दुः.

अधि० ९, ७ बिन्दुः.

३७ पाकस्य चान्नकारितत्वात् । ३६ य, ७ बिन्दुः.

अधि० १०, ८ बिन्दुः.

३८ तथाऽभिघारणस्य । ३७ य, ८ बिन्दुः.

अधि० ११, ९ बिन्दुः.

३९ द्रव्यविधिसंनिधौ संख्या तेषां गुणत्वात् स्यात् । ३८ य, ९ बिन्दुः.

४० समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् । ३९ य.

४१ यस्य वा संनिधाने स्यात् वाक्यतो ह्यभिसंबन्धः । ४० य.

४२ असंयुक्तां तु तुल्यवदितराभिर्विधीयन्ते तस्मात् सर्वाधिकारः स्यात् । ४१ य.

४३ असंयोगाद् विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्यकोपात् क्रतोः । ४२ य.

४४ शब्दार्थश्चापि लोकवत् । ४३ य.

( अधि० १२ म-सा-वृ-ल. )

४५ सा पशूनामुत्पत्तितो विभागात् । ४४ य.

( अधि० १३ वृ-ल. )

४६ अनियमोऽविशेषात् । ४५ य.

४७ भागित्वाद्वा गवां स्यात् । ४६ य.

४८ प्रत्ययात् । ४७ य.

४९ लिङ्गदर्शनाच्च । ४८ य.

अधि० १२, १४ वृ-ल, १३ म-सा, १० बिन्दुः.

---

अधि० ८ आग्रयणे वत्से पाकाभावः इति म-सा-वि-भाट्ट-शा-ल । आग्रयणे वासोवत्सयोः पाकाभावः इति बिन्दुः । उत्तराधिकरणे वासोविषये विचार्यत्वात् अत्र शीर्षके वासःपदप्रयोगो दुष्टः । वत्से पाकाभावः इति वृ । अत्र आग्रयणे इत्यवश्यं वक्तव्यं, अन्यथा यत्र वत्स एवालभ्यते तत्रातिव्याप्तिः स्यात् । आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पाकाननुष्ठानं इति भा ।

अधि० ९ आग्रयणे वाससि पाकाभावः इति भा-वृभिन्ने । वाससि पाकाभावः इति वृ-शीर्षकमतिस्थूलम् । आग्रयणे अन्वाहार्यस्थानापन्ने वाससि पाकाननुष्ठानं इति भा ।

सू० ३७ ( १ ) रित्वात् इति बिन्दु-वृ-ल ।

अधि० १० आग्रयणे वासोवत्सयोरभिघारणाभावः इति भा-बिन्दुभिन्ने । वासोवत्सयोरभिघारणाभावः इति वृ । आग्रयणे वासोवत्सयोरभिघारणाननुष्ठानं इति बिन्दु-भा ।

अधि० ११ ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वं इति भा-भाट्टभिन्ने । ज्योतिष्टोमे गवामेव द्वादशशतसंख्याऽन्वयः इति भाट्ट । ज्योतिष्टोमे दक्षिणान्तर्गतगोष्वेव द्वादशशतसंख्यानिवेशः इति भा ।

सू० ४२ ( १ ) क्तास्तु तुल्य इति वृ-ल ।

सू० ४३ ( १ ) श्रुत्यको इति य । श्रुत्याको इति य-भिन्ने सर्वत्र । भाष्ये तु " एवमेकश्रुतिर्न कोपिता भविष्यति " इत्युक्तम् । तेन श्रुत्यकोपात् इत्येव भाष्यसंमतः पाठः । वृ-मूले तु श्रुतिकोपात् इत्येव मुद्रितम् ।

(अधि० १२) तस्य द्वादशशतं दक्षिणा इत्यनेन पशुगवसंख्याभिधानं इति म-सा । ' गव ' इत्यत्र ' गत ' इति पठनीयम् । तस्य द्वादशशतमित्यनेन पशुगतसंख्याऽभिधानं इति वृ । तस्य द्वादशशतमित्यनेन संख्याऽभिधानं इति ल-शीर्षकमयुक्तम् । द्वादशशतशब्दस्य संख्याऽभिधानत्वे विवादाभावात् ।

( अधि० १३ ) पशुषु गवां नियमः इति वृ । चमत्कारावहं शीर्षकमिदम् । पशुषु गवां दक्षिणानियमः इति ल । दक्षिणात्वनियम इति पठितव्यम् ।

अधि० १२ विभज्य गोदक्षिणाया दानं इति म-सा-वि-शा-वृ-ल । गोदक्षिणाया विभज्य दानं इति भाट्ट । विभागेन यागे दक्षिणाया दानं

५० तत्र दानं विभागेन प्रदानानां पृथक्त्वात् । ४९ य, १० बिन्दुः.

५१ परिक्रयाच्च लोकवत् । ५० य.

५२ विभागं चापि दर्शयति । ५१ य.

अधि० १३, १५ वृ-ल, १४ म-सा, ११ बिन्दुः.

५३ समं स्यादश्रुतत्वात् । ५२ य, ११ बिन्दुः.

५४ अपि वा कर्मवैषम्यात् । ५३ य.

५५ अतुल्याः स्युः परिक्रये विषमाऽऽख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते, दर्शनाद्विशेषस्य तथाऽभ्युदये ।५४ य.

अधि० १४, १६ वृ-ल, १५ म-सा, १२ बिन्दुः.

५६ तस्य धेनुरिति गवां, प्रकृतौ विभक्तं चोदितत्वात् तत्सामान्यात् तद्विकारः स्याद् यथेष्टिर्गुणशब्देन । ५५ य, १२ बिन्दुः.

५७ सर्वस्य वा क्रतुसंयोगादेकत्वाद् दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे, विकृतौ श्रुतिभूता स्यात् तैया समवायाद्धि कर्मभिः । ५६ य.

---

इति बिन्दुः । ज्योतिष्टोमे द्वादशोत्तरशतगोदक्षिणाया विभज्य दानं इति भा ।

सू० ५० ( १ ) तस्य दानं इति वि-शा-चौ । ( २ ) भागार्थेन इति इति टुप् । ( ३ ) क्त्वात् स्यात् इति य ।

अधि० १३ ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागः इति म-सा-वि-शा । समाख्यानुसारेण दक्षिणाविभागः इति भाट्ट-वृ । समाख्यानुसारेण ज्योतिष्टोमे दक्षिणाविभागः इति ल । ज्योतिष्टोमे द्वादशशतदक्षिणायाः अर्ध्यादिसमाख्यानुरोधेन विभागः इति भा ।

सू० ५३ ( १ ) श्रुतित्वात् इति भा-म-सा-बिन्दु-वृ-ल-य । श्रुतत्वात् इति वि-भाट्ट-शा-टुप्-चौ-कौ ( १।२।२९ सूत्रे, २।२।१६ सूत्रे च ) -भाट्ट ( ४।१।१७ अधिकरणे )-सोम ( ५।३।३ अधिकरणे )-स्मृतिचन्द्रिका ( व्यवहार २६० पृ. ) -तन्त्रवार्तिकं ( ३।३।४१ सूत्रे ) । प्रकृतसूत्रभाष्येऽपि " तस्माद् विशेषाश्रवणात् समं देयं " इत्युक्तत्वात् ' अश्रुतत्वात् ' इत्येव पाठः सिध्यति ।

सू० ५५ ( १ ) विषमा आख्या इति पदद्वयम् ।

अधि० १४ भूनामैकाहे ' तस्य धेनुः ' इत्यनेन कृत्स्नक्रतुदक्षिणाबाधः इति म-सा-वृ । भूनाम्नि धेनुदानेन निखिलदक्षिणाबाधः इति वि-शा । अत्र भूनाम्नि इति विशेष्यं चेत् असंभवः स्यात् । विशेषणं चेत् कस्य विशेषणमिति न ज्ञायते । ततश्च एकाहे इति वा क्रतौ इति वा वक्तव्यम् । एवमितरत्रापि । भूनाम्नि धेन्वा निखिलदक्षिणाबाधः इति भाट्ट । भूर्नामैकाहे ' तस्य दक्षिणा ' इत्यनेन कृत्स्नक्रतुदक्षिणाबाधः इति बिन्दुः । ' तस्य दक्षिणा ' इत्युक्त्या दक्षिणाया एव बाधः कथं स्यात् ? । भूनाम्नि धेनुदानेन दक्षिणाविभागः इति ल-शीर्षकं तु अतीव विचित्रम् । भूसंज्ञकैकाहे औपदेशिकधेनुदक्षिणया आतिदेशिककृत्स्नक्रतुदक्षिणाया बाधः इति भा ।

सू० ५६ ( १ ) भक्तं चो इति बिन्दु-वृ-ल । भक्तचो इति अन्यत्र । भाष्ये तु " विभक्तं दाक्षिण्यं " इति त्रिः पठितम् । तेन विभक्तं चोदितत्वात् इत्येव पाठः सिध्यति । ( २ ) त्वात् सामा इति ल-भिन्ने सर्वत्र । त्वात् तत्सामा इति वृ-ल । " अन्यासां दक्षिणानामविकारेण यथाप्रकृतिभावेन चोदकानुग्रहो भविष्यति " इति भाष्यात् तत्सामान्यात् इत्येव पाठः सिध्यतीति मन्यामहे ।

सू० ५७ ( १ ) कत्वं द इति य-क्षभिन्ने सर्वत्र । कत्वाद् द इति तु य-क्ष । "एको हि दक्षिणानामर्थः" इति भाष्ये हेतुत्वबोधकहिशब्दप्रयोगात् य-क्षपाठ एव भाष्यसंमतः । ( २ ) भूतं स्यात् इति य-क्षभिन्ने सर्वत्र । भूता स्यात् इति य-क्ष । " प्राकृतेऽर्थे धेनुः श्रुतिभूता । सा च प्राकृतं कार्यमभिनिर्वर्तयति "

५८ चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात्। ५७ य.
अधि० १५, १७ वृ-ल, १६ म-सा, १३ बिन्दुः.

५९ एकां, पञ्चेति, धेनुवत्। ५८ य, १३ बिन्दुः.
अधि० १६, अन्तरागर्भिणी, १८ वृ-ल, १७ म-सा, १४ बिन्दुः.

६० त्रिवत्सश्च। ५९ य, १४ बिन्दुः.

६१ तथाच लिङ्गदर्शनम्। ६० य.

६२ एके तु श्रुतिभूतत्वात् संख्यया गवां लिङ्गविशेषेण। ६१ य.
अधि० १७, १९ वृ-ल, १८ म-सा, १५ बिन्दुः.

---

इति तु भाष्यम्। तेन श्रुतिभूता इत्येव पाठः स्वीकार्यः। (३) तस्मात् सम इति वृ-ल भिन्ने। तया सम इति वृ-ल। " तया समवायाद्धि कर्मभिर्ऋत्विजः संबध्यन्ते श्रुतिभूतया " इति भाष्यात्तु ' तया ' इत्येव पाठः स्विकृतोऽस्माभिः। (४) वायो हि क इति मटि-टी। वायादि क इति वृ-लसूत्रे, वृ-मूले तु समवायात् संबन्धात् इत्येव। वाये हि क इति य-क्ष।

सू० ५८ (१) चोदनाम इति चौ-पाठो न ग्राह्यः। (२) यालिङ्गेन इति ल-पाठोऽपि न ग्राह्यः।

अधि० १५ ' यस्य सोममपहरेयुः ' इत्यादौ ' एकां गां ' इत्यादिना गोगतसंख्याबाधः इति म-सा। एकां गामित्यनेन गोगतसंख्याबाधः इति वि-शा। एकां गां इत्यादिना गोगतसंख्यामात्रबाधः इति भाट्ट। ' यस्य सोममपहरेयुः ' इत्यादौ एकां गां इत्यनेन गोगतसंख्याबाधः इति बिन्दुः। एकां गां इत्यनेन प्राकृतसंख्याया बाधः इति वृ। एकां गामित्यनेन प्राकृतसंख्याबाधः इति ल। ज्योतिष्टोमे नैमित्तिकैकादिगोदक्षिणया नित्यप्रयोगीयगोगतद्वादशशतसंख्यामात्रबाधः इति भा।

सू० ५९ (१) एका प इति म-सा-बिन्दु-वृ-ल-चौ-रत्न। अन्यत्र तु ' एकां पञ्च ' इत्येव पाठः। " यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यात् अभिदग्धे पञ्च गाः " इति श्रुतिस्थपदयोः ' एकां पञ्च ' इति सूत्रेऽनुकरणात् श्रुतौ च तयोः पदयोर्द्वितीयान्तत्वात् ' एकां पञ्च ' इत्येव पाठः साधुः। भाष्येऽपि " किं प्राप्तं एकां पञ्चेति धेनुवत् " इत्येव पठितम्।

अधि० १६ सूत्रद्वयेन अन्तरागर्भिणीरूपमधिकरणामिदम्। भाष्ये च सूत्रद्वयं अन्तरागर्भिणीत्वेन द्वेधा व्याख्याय " तत्रैवं अन्तरागर्भिणीन्यायो भवतीत्यन्यथा सूत्रं वर्ण्यते " इत्युक्त्वा पञ्चदशाधिकरणशेषत्वेनापि सूत्रद्वयमिदं व्याख्यातम्। द्विषष्टितमं सूत्रं तु पञ्चदशाधिकरणशेषभूतमित्यत्र नास्त्येव संदेहः।

अथ शीर्षकम्। साद्यस्क्रे त्रिवत्सेन सर्वेषां क्रयार्थानां बाधः इति म-सा-वृ। साद्यस्क्रे त्रिवत्सेन सोमक्रयसाधनमात्रबाधः इति वि-शा-ल। साद्यस्क्रे त्रिवत्सेन कृत्स्नसोमक्रयसाधनबाधः इति भाट्ट। साद्यस्क्रे त्रिवत्सेन सर्वक्रयार्थबाधः इति बिन्दुः। साद्यस्क्रे सोमक्रयार्थं विहितेन त्रैवार्षिकेण पुंगवेन प्राकृतसर्वक्रयद्रव्यबाधः इति भा।

सू० ६१ (१) च-शब्दो नास्ति वृ-ल। तत्सत्त्वं त्वावश्यकम्।

सू० ६२ (१) संख्याया इति वृ-ल। "गोविशिष्टया संख्यया संबन्धात्" इति तु भाष्यम्।

अधि० १७ अश्वमेधे प्राकाशौ इत्यनेनाध्वर्युभागबाधः इति म-सा-वृ-ल। अश्वमेधे प्राकाशेनाध्वर्युभागबाधः इति वि-भाट्ट-शा। अत्र प्राकाशेन इत्येकवचनमयुक्तम्। अश्वमेधे प्राकाशौ इत्यस्याध्वर्युबाधः इति बिन्दुः। ' इत्यस्य ' इति षष्ठ्याः कान्वयः? कानि चिदक्षराणि घुणाक्षरन्यायेन संपादकेनात्र संपादितानि, अर्थशून्यता तु विशेषः। अश्वमेधे विहिताभ्यां प्राकाशाभ्यां प्राकृताध्वर्युभागमात्रबाधः इति भा।

अत्र सर्वत्र मूलोक्ते एवाश्वमेधशब्दे शङ्का। तैत्तिरीयके तावत् संहितायां १।८।१८ इत्यत्र राजसू-

६३ प्राकाशौ तथेति चेत् । ६२ य, १५ बिन्दुः.

६४ अपित्ववयवार्थत्वाद् विभक्तप्रकृतित्वाद् गुणेदन्ताविकारः स्यात् । ६२ य.

अधि० १८, २० वृ-ल, १९ म-सा, १६ बिन्दुः.

६५ धेनुवच्चाश्वदक्षिणा सब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य । ६३ य, १६ बिन्दुः.

६६ एके तु कर्तृसंयोगात् स्रग्वत् तस्य लिङ्गविशेषेण । ६४ य.

६७ अपिवा तदधिकाराद्धिरण्यवद् विकारः स्यात् । ६५ य.

अधि० १९, २१ वृ-ल, २० म-सा, १७ बिन्दुः.

६८ तथा च सोमचमसः । ६६ य, १७ बिन्दुः.

---

यान्तर्गतो दशपेय उक्तः । तत्र ' प्राकाशावध्वर्यवे ददाति, स्रजमुद्गात्रे ' इत्यादिना दक्षिणाविशेषा उक्ताः । तद्ब्राह्मणमपि तैब्रा १।८।२ इत्यत्र वर्तते । तथाच प्राकाशौ तैत्तिरीयके राजसूये उक्तौ न त्वश्वमेधे । वेदभाष्यकारेण तत्रतत्रानुवाकान्ते मीमांसा उपन्यस्यत सा च स्वीयाधिकरणन्यायमालाविस्तरस्थैव श्लोकतट्टीकारूपा । तैसं १।८।१८ इत्यत्रापि अधिकरणत्रयमुपन्यस्तम् । तत्र प्राकाशविषयकं यत्तृतीयमधिकरणमुपन्यस्तं, तत्र " राजसूये श्रूयते हिरण्मयौ प्राकाशावध्वर्यवे ददाति इति " इत्युपक्रान्तम् । "दशमाध्यायस्य तृतीयपादे चिन्तितं ' इति चावतरणम् । अथ साक्षात् अधिकरणन्यायमालाविस्तरे तु तस्मिन्नेवाधिकरणे " अश्वमेधे श्रूयते " इत्युपन्यस्तम् । इत्येकमाश्चर्यम् । किंच तैसं, तैब्रा मध्ये 'प्राकाशावध्वर्यवे ददाति ' इत्येतावदेव वाक्यं, हिरण्मयौ इति पदं तत्र नास्ति । वेदभाष्ये विस्तरे च ' हिरण्मयौ प्राकाशौ ' इत्याद्युपन्यस्तम् । इत्यपरमाश्चर्यम् । तथाच प्राकाशौ अश्वमेधे वा राजसूये वा ? हिरण्मयौ इति च विशेषणं तत्र वर्तते नवेति प्रश्नः । शाखान्तरे तु द्रष्टव्यं भवति ।

सू० ६३ ( १ ) प्राकाशौ च त इति वृ-ल-यरत्न । ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० ६४ ( १ ) वार्थाद् वि इति य ।

अधि० १८ उपहव्ये अश्वेन कृत्स्नक्रतुदाक्षिण्यस्य बाधः इति म-सा । उपहव्ये श्यावाश्वेनाखिलदक्षिणाबाधः इति वि-शा-ल । उपहव्ये श्यावाश्वेन निखिलदक्षिणाबाधः इति भाट्ट । उपहव्ये अश्वेन कृत्स्नक्रतुदाक्षिण्यबाधः इति बिन्दुः । उपहव्ये अश्वेन कृत्स्नक्रतुदक्षिणाबाधः इति वृ । उपहव्ये क्रतौ औपदेशिकाश्वदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधः इति भा ।

सू० ६५ ( १ ) स ब्र इति सर्वत्रैव च्छित्त्वा मुद्रितम् । श्रुत्यनुकरणत्वात्तु संधाय मुद्रणं युक्तं मन्यामहे ।

अधि० १९ ' तथा च ' इति सूत्रमारभ्य षड्भिः सूत्रैरेकोनविंशमधिकरणम् । तद्घटकमन्तिमं सूत्रद्वयं एकोनविंशाधिकरणगतपूर्वोत्तरपक्षफलप्रतिपादकत्वेन व्याख्याय पुनर्वर्णकान्तरत्वेन व्याख्यातं भाष्ये । तच्च विंशाधिकरणत्वेन भा-संपादकैः परिगणितम् । म-सासंपादकैस्तु वर्णकान्तरं अधिकरणान्तरत्वेन न स्वीकृतम् । विस्तरे वर्णकान्तरमपि न स्वीकृतं किंतु षड्भिः सूत्रैरधिकरणमेकमेव एकोनविंशं स्वीकृतम् । कृत्वाचिन्तया तु कंचिद्विचारमारचय्य कृत्वाचिन्तोद्घाटनं कृतम् । तत्र च नाङ्कवृद्धिः कृता । अथ शीर्षकम् । ऋतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधः इति म-सा । ऋतपेये सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधः इति वि-शा ल । ऋतपेये सोमचमसेन निखिलदक्षिणायाः पुरुषान्तरस्य च बाधः इति भाट्ट । ऋतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यस्य बाधः इति बिन्दुः । ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणाबाधः इति वृ । ऋतपेये विहितसोमचमसदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधः इति भा ।

६९ सर्वविकारो वा क्रत्वर्थे प्रतिषेधात् पशूनाम् । ६७ य.

७० ब्रह्मदानेऽविशिष्टमिति चेत् । ६८ य.

७१ उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् । ६८ य.

अधि० २०.

७२ यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् । ६९ य.

७३ सर्वं वा पुरुषापनयात् तासां क्रतुप्रधानत्वात् । ७० य.

अधि० २१, २२ वृ–ल, २० वि, १८ बिन्दुः.

७४ यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात् । ७६ म–सा, ७१ य, १८ बिन्दुः.

७५ अपि वा श्रुतिभूतत्वात् सर्वासां तस्य भागो नियम्यते । ७७ म–सा, ७२ य.

॥ न्याया इहैकाधिकविंशतिः स्युः ॥

॥ विकृतौ समत्वाद् विप्रतिषेधाद् विकारस्तु असंयुक्ता विभागं एकेतु यजुर् द्विसप्ततिः ॥

॥ इति दशमाध्यायस्य तृतीयः पादः ॥

* * * *

॥ अथ दशमाध्यायस्य चतुर्थः पादः ॥

अधि० १, १–३ मण्डनः.

---

सू० ६९ ( १ ) रोक्र इति य । अत्राकारप्रश्लेषः कार्यः । ( २ ) पशूनां प्रतिषेधात् इत्यानुपूर्वीभेदः वृ–ल ।

सू० ७० ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ७१ ( १ ) र्मत्वान्न इति वृ–ल । ( २ ) गौणं प्र इति य ।

अधि० २० सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधः इति म–सा–शा । ऋतपेये एकवाक्यतापक्षे ब्रह्मभागबाधः इति भाट्ट । ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणायाः पुरुषान्तरस्य च निवृत्तिः इति भा ।

सू० ७२ ( १ ) ह्मस्त इति ल–चौपाठो न शुद्धः ।

अधि० २१ वाजपेये रथस्य भागनियामकता इति भा–भाट्ट–भिन्ने । वाजपेये यजुर्युक्तरथेन न कस्यापि बाधः इति भाट्ट । वाजपेये श्रुतेन यजुर्युक्तरथेनाध्वर्योर्दास्यादिभागान्तरस्यानिवृत्तिः इति भा ।

अत्र भाष्यमूले ' किं प्राप्तम् । यजुर्युक्ते दक्षिणा त्वध्वर्योर्विकारः स्यात् ' इति सूत्रं पठितम् । तेनाक्षरपरिपाटीभेदः संजायते । इदमत्रावधेयम् । यजुर्युक्ते इति सप्तमीस्थाने यजुर्युक्तः इति प्रथमैव योज्या । सप्तमी त्वर्थतो न संगच्छते । भाष्यमूले च ' किं यजुर्युक्तेऽध्वर्योर्भागस्य निवर्तकः ' ' स रथोऽध्वर्युभागं निवर्त्य ' ' तस्मादध्वर्युभागस्य निवर्तको रथ इति ' इति प्रकृतसूत्रे पङ्क्तयः । उत्तरसूत्रे च 'तत्राध्वर्योर्यजुर्युक्तः पक्षे प्राप्तः स नियम्यते ' इति पङ्क्तिः । तेन ' यजुर्युक्तो दक्षिणा त्वध्वर्योर्विकारः स्यात् ' इत्येव सूत्रपाठो भाष्यसंमत इति निश्चिन्महे ।

यथामुद्रितसूत्रपाठेऽपि दक्षिणा इति विकार इति च पदभेद एवेति भाष्यमूलपठितसूत्राज्ज्ञातुं शक्यम् । सर्वेषु पुस्तकेषु तु ' यजुर्युक्ते त्वध्वर्योर्दक्षिणो विकारः स्यात् ' इत्येव सूत्रं लिखितं मुद्रितं च । सत्यप्येवं भाष्यमूलानुसारात् सूत्रं परिवर्तितमस्माभिः । तदिदं साहसमपि क्षन्तव्यं विपश्चिद्भिः । तत्र च पाठभेदः इत्थम् । क्तेध्व इति रत्न । क्तोऽध्व इति वृ–ल । ( २) णावि इति संशय्य मुद्रितं भाट्टबिन्दु–वृ ।

सू० ७५ ( १ ) भागेन नि इति म । ( २ ) यम्येत इति य–वृ–सूत्रे । वृ–मूले तु यम्यते इत्येव ।

अधि० १ सूत्रद्वयात्मकमाधिकरणं भाष्ये । पुनश्च सूत्रद्वयेनैव अधिकं वर्णकद्वयमिति वर्णकत्रयं भाष्ये ।

१ प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ।
( अधि० २ म-सा-वि-भाट्ट-ल. )

२ चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् ।
अधि० २, ४ मण्डनः, ३ म-सा-वि-भाट्ट-ल.

३ सर्वत्र तु ग्रहाम्नानेमधिकं स्यात् प्रकृतिवत् । २ बिन्दुः.

४ अधिकैश्चैकवाक्यत्वात् ।

५ लिङ्गदर्शनाच्च ।
अधि० ३, ५ मण्डनः, ४ म-सा-वि-भाट्ट-ल.

म-सा-संपादकैस्तु प्रथमं वर्णकं प्रथमाधिकरणत्वेन स्वीकृत्य द्वितीयतृतीये वर्णके द्वितीयाधिकरणत्वेन स्वीकृते । तदिदमयुक्तम् । वि-भाट्टयोस्तु सूत्रद्वयेन प्रथमाधिकरणमारचय्य द्वितीयसूत्रेण द्वितीयमधिकरणमेव स्वीकृतम् । ल-संपादकैस्तु प्रथमसूत्रेण प्रथमाधिकरणं, द्वितीयसूत्रेण च वर्णकद्वययुक्तं द्वितीयमधिकरणं स्वीकृतम् । मण्डनेन तु भाष्यस्थं वर्णकत्रयं अधिकरणत्रितयत्वेनैव स्वीकृतम् ।

अथ शीर्षकम् । अग्न्यादौ नारिष्ठहोमादिभिर्नक्षत्रेष्टयादीनां समुच्चयः इति म-सा-बिन्दु-वृ । विजयाक्षीबकल्पितमिदम् । असंबद्धमिदं सर्वथा, रूपादौ पृथिव्यादिभिः कर्मादीनां समुच्चयः इतिवत् । नारिष्ठहोमादिभिर्नक्षत्रेष्टयादीनां समुच्चयः इति वि-शा । इदमपि तादृगेव । नक्षत्रेष्टौ नारिष्ठहोमरूपहोमानां समुच्चयः इति भाट्ट । नक्षत्रेष्टयादौ उपदिष्टैरुपहोमादिभिः आतिदेशिकानां नारिष्ठहोमादीनां बाधाभावः इति भा । इदं तु समीचीनम् ।

अथद्वितीयवर्णके शीर्षकम् । शरमयबर्हिषा कौशबर्हिर्बाधः इति म-सा-वि-वृ । अभिचारविशेषे शरमयबर्हिषा कौशबर्हिषो बाधः इति भाट्ट । वाजपेये शरमयबर्हिषा कौशबर्हिषो बाधः इति ल । अत्र वाजपेये इत्यसंभवि, वाजपेये शरमयबर्हिषोऽभावात् । सौमारौद्रयागे उपदिष्टैः शरैः आतिदेशिकानां कुशानां बाधः इति भा ।

अथतृतीयवर्णके शीर्षकम् । वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरेव बाधः इति म-सा । रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोर्बाधः इति वि । एवकारवर्जं म-सावत् वृ-ल । वाजपेये माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितरथघोषादिना प्राकृतदर्भमन्त्रयोर्बाधः इति भा ।

सू० २ (१) नाल्लिङ्ग इति मटि-पाठो न शुद्धः ।

अधि० २ बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयः इति म-सा-वि ( अनुक्रमण्याम् )-वृ । बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयः इति वि-शा-ल । बृहस्पतिसवे बार्हस्पत्यग्रहादिभिरैन्द्रवायवादिग्रहाणां समुच्चयः इति भाट्ट । बृहस्पतिसवादिषु बार्हस्पत्यग्रहैः प्राकृतैन्द्रवायवादिग्रहाणां समुच्चयः इति बिन्दुः । अत्र बार्हस्पत्यग्रहैः इति बहुवचनमशुद्धं बृहस्पतिदेवताकस्य ग्रहस्यैकत्वात् । अर्क-शुक्रग्रहयोः संग्रहार्थं तु बार्हस्पत्यादिग्रहैः इति वक्तव्यम् । बृहस्पतिसवादिविकृतौ औपदेशिकैर्ग्रहणैः आतिदेशिकानामैन्द्रवायवादिग्रहणानां समुच्चयः इति भा । अत्र ग्रहण-शब्दस्य स्थाने ग्रहशब्द एव प्रयोक्तव्यः । सूत्रे भाष्ये च ग्रहाम्नानं इति ग्रहशब्दस्यैव प्रयुक्तत्वात् ।

सू० ३ ( १ ) त्र ग्र इति य । ( २ ) म्नातम इति वृ-ल । ( ३ ) धिके स्यात् इति रत्न ।

सू० ४ ( १ ) अधिकश्चै इति वृ-ल ।

अधि० ३ वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयः इति भा-बिन्दुभिन्ने । वाजपेये क्रतुपशूनां प्राजापत्यपशुभिः समुच्चयः इति बिन्दुः । म-सा शीर्षकस्थपदद्वयस्य पौर्वापर्यपरिवर्तनं संपाद्य पदाक्षरपरिवर्तनशीलैर्बिन्दुसंपादकैः स्वकुतूहलं सार्थं कृतम् । वाजपेयोपदिष्टैः प्राजापत्यैः पशुभिः आतिदेशिकानां क्रतुपशूनां समुच्चयः इति भा ।

६ प्राजापत्येषु चाम्नानात् । ३ बिन्दुः.
अधि० ४, ६ मण्डनः, ५ म-सा-वि-भाट्ट-ल.

७ आमने लिङ्गदर्शनात् । ४ बिन्दुः.
अधि० ५, ७ मण्डनः, ६ म-सा-वि-भाट्ट-ल.

८ उपगेषु शरवत् स्यात् प्रकृतिलिङ्गसंयोगात् । ५ बिन्दुः.

९ आनर्थक्यात् त्वधिकं स्यात् ।
अधि० ६, ८ मण्डनः, ७ म-सा-वि-भाट्ट-ल.

१० संस्कारे चान्यसंयोगात् । ६ बिन्दुः.

११ प्रयाजवदिति चेत् ।

१२ नार्थान्यत्वात् । ११ वृ-ल-य.
अधि० ७, ९ मण्डनः, ८ म-सा-वि-भाट्ट-ल.

---

अधि० ४ सांग्रहणीष्टौ आमनहोमैरनुयाजानां समुच्चयः इति म-सा-वि-भाट्ट-शा-वृ । सांग्रहण्यां आमनहोमानुयाजानां समुच्चयः इति बिन्दुः । सांग्रहिणीष्टौ आमनहोमैरनुयाजानां समुच्चयः इति ल । अत्र सांग्रहिणी इति अपप्रयोगः । सांग्रहणेष्टौ उपदिष्टैरामनहोमैरातिदेशिकानां समुच्चयः इति भा । अत्र कर्मधारये पूर्वपदस्य विशेषणस्य पुंवद्भावे निष्पन्नं पदं प्रयुक्तम् । तदेव च साधीयो न तु सांग्रहणीष्टौ इति ।

अधि० ५ महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयः इति म-सा-बिन्दु-वृ । महाव्रते पत्न्युपगानेन ऋत्विगुपगानस्य समुच्चयः इति वि-भाट्ट-शा । म-साशीर्षकात् पदपौर्वापर्यभेदादेव भेदोऽत्र । पत्न्युपगाने नर्त्विगुपगानस्य महाव्रते समुच्चयः इति ल । अत्र पत्न्युपगाने इति सप्तम्यन्तमशुद्धं, तृतीयान्तमेव पदं स्वीकार्यं भवति । गवामयनान्तर्गते महाव्रते उपगानान्तरकर्त्रीभिः पत्नीभिः आतिदेशिकोपगानकर्तॄणामृत्विजामबाधः इति भा ।

सू० ८ ( १ ) प्रति इति ल-पाठो न ग्राह्यः ।

अधि० ६ अञ्जनाभ्यञ्जने नावनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयः इति भा-भाट्ट-भिन्ने । अञ्जनाभ्यञ्जनाख्ये सत्रे गौग्गुलवाभ्यञ्जनेन नावनीताभ्यञ्जनस्य समुच्चयः इति भाट्ट । अञ्जनाभ्यञ्जनाख्ये सत्रे समाम्नातेन गौग्गुलवाभ्यञ्जनादिना प्राकृतनावनीताभ्यञ्जनस्य समुच्चयः इति भा । अत्र भाट्ट-शीर्षके आदिशब्दो न पठितः इतरत्र तु पठितः । तत्र विचार्यते । सुबोधिनीवृत्तौ भाट्टदीपिकायां च प्रातःसवनगतगौग्गुलवाभ्यञ्जनस्यैव समुच्चय उक्तः न पौतुदारव-सौगन्धिकयोरभ्यञ्जनस्य माध्यंदिनतृतीयसवनगतस्य । अन्यत्र भाष्यादिमूले तु सवनत्रितयगतस्यापि अभ्यञ्जनस्य समुच्चय उक्तः । तेन भाट्ट-शीर्षके आदिशब्दाभावो युक्त एव । सुबोधिन्यां तु आदिशब्दो न मूलसंमतः । तत्रापि भाट्टवदेव प्रातःसवनगताभ्यञ्जनसमुच्चयस्यैव प्रतिपादनात् । यदि तु न्यायसाम्यात् उपलक्षणार्थत्वाद्वा उत्तरसवनद्वयगताभ्यञ्जनयोरपि समुच्चयो विवक्षितः स्यात्, तदा भाट्ट-वृ-शीर्षकयोरपि आदिशब्दस्य प्रयोगो युक्तः कर्तुम् । भाष्यादिशीर्षके आदिशब्दप्रयोगो युक्त एव । तत्र सवनत्रयगतस्यापि अभ्यञ्जनस्य नावनीताभ्यञ्जनेन सह समुच्चयस्य प्रतिपादनात् । कालभेदेपि विषयैक्यात् ।

सू० ११ ( १ ) चेदन्तमुत्तरेणैकं वृ-ल-य ।

अधि० ७ महाव्रते अहतवाससः तार्यादिभिः समुच्चयः इति म-सा-वि-शा-बिन्दु-वृ । स्वतन्त्रे महाव्रते तार्प्यादिभिः अहतवाससः समुच्चयः इति भाट्ट । अहतवाससः तार्यादिभिः महाव्रते समुच्चयः इति ल । महाव्रते तार्यादिभिः प्राकृताहतवाससः समुच्चयः इति भा ।

अत्र म-सामूले तार्य्यं यजमानः परिधत्ते इति मुद्रितम् । भा-मूले तु तार्प्यं यजमानः परिधत्ते इति पाठः । भाट्टेऽपि तार्प्य-शब्दस्यैव पाठः । अथ विस्तरे शास्त्रदीपिकायां मयूखमालिकायां

१३ आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात्। १२ वृ—ल—य, ७ बिन्दुः.

१४ अधिकं वाऽन्यार्थत्वात्। १३ वृ—ल—य.

१५ समुच्चयं च दर्शयति। १२ ल—य.

अधि० ८, १० मण्डनः, ९ म-सा-वि-भाट्ट—ल, ८ शा-बिन्दु-वृ.

१६ सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत। १५ ल—य, १४ वृ, ८ बिन्दुः.

(वर्णकं द्वितीयं भा-म-सा, अधि० ११ मण्डनः, १० वि-भाट्ट-ल, ९ शा-बिन्दु-वृ).

१७ अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात्। १६ ल—य, १५ वृ, ९ बिन्दुः.

अधि० ९, १२ मण्डनः, ११ वि-ल, १० म-सा-शा-बिन्दु-वृ.

१८ सर्वेषामविशेषात्। १७ ल—य, १६ वृ, १० बिन्दुः.

१९ एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारात्। १८ ल—य, १७ वृ.

अधि० १०, १३ मण्डनः, १२ वि—ल, ११ म-सा-भाट्ट-शा-बिन्दु-वृ.

---

बिन्दौ वृत्तौ च तार्य-शब्दस्यानेकवारं पाठः। तैत्तिरीयसंहितायां १।७।९ इत्यत्र भाष्ये विस्तरस्थमेवाधिकरणमुदाहृतम्। परंतु तत्र अनेकवारं तार्प्य-शब्द एव प्रयुक्तो न तार्य-शब्दः। विस्तरे १०।४।८ तार्यशब्दः, वेदभाष्यस्थे विस्तरे एव च तार्प्यशब्दः इति महदाश्चर्यम्। तैत्तिरीयवैदिकाश्च 'तार्प्यं यजमानं परिधापयति' इत्येव ब्राह्मणवाक्यं (१।३।७) पठन्ति, न 'तार्यं' इति। मण्डनप्रणीतमीमांसानुक्रमणिकायाष्टीकायां महामहोपाध्यायो गङ्गानाथझामहाशयोऽपि तार्यं इत्येव पठति। किंच, 'घृताक्तः कम्बलस्तार्यमित्युच्यते इति माधवः' इति म-टिप्पणी, 'तार्प्यं घृताक्तकम्बल इति माधवः' इति भाट्टमूलं इति द्वितीयं महदाश्चर्यम्। वयं तु मन्यामहे अनेकग्रन्थेषु अनेकवारं तार्य-शब्दप्रयोगः संपादकमहाशयानामेव भ्रान्तानां कर्म। भा-म-सा इति पुस्तकत्रयं शाबरभाष्यात्मकमेव। तत्र म-सापुस्तकस्थे भाष्यमूले तार्य-शब्दः, भा-पुस्तकस्थे भाष्यमूले तु तार्प्य-शब्दः इति संपादककर्तृ विना कथं संगच्छेत। सर्वथापि तु तार्प्यशब्द एव युक्तो न 'तार्य, ताप्र्य, तार्ष्य-' शब्दः इति मन्तव्यम्।

सू० १३ (१) कार्थत्वात् इति बिन्दुपाठो न शुद्धः। ऐकार्थ्यत्वात् इति हि तदा पदच्छेदः स्यात्।

सू० १५ नास्तीदं सूत्रं वृ।

अधि० ८ महाव्रते रथंतरादिसाम्नां श्लोकादिसामाभिः समुच्चयः इति भा-भाट्टभिन्ने। श्लोकादिसामाभिः रथंतरादिसाम्नां समुच्चयः इति भाट्ट। महाव्रते स्तोत्रान्तरसाधनीभूतैः श्लोकादिसामाभिः प्राकृतसाम्नां समुच्चयः इति भा।

सू० १६ (१) श्रुतिविका इति य।

सप्तदशं सूत्रं पूर्वाधिकरणशेषतया व्याख्याय पुनर्वर्णकान्तरत्वेन भाष्यकारैर्व्याख्यातम्। तच्च अधिकरणान्तरत्वेनैव वि-भाट्ट-शा-बिन्दु-वृ-ल-मण्डनैः स्वीकृतम्। तत्र शीर्षकं यथा, विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधः इति म-सा-वि-शा-वृ। विकृतिविशेषे कौत्सादिसामाभिः प्राकृतसाम्नां बाधः इति भाट्ट। क्वचिद् विकृतौ कौत्सादिभिः प्राकृतानां बाधः इति बिन्दुः। अत्र सामशब्दप्रयोगं महान्तं भारं मेनिरे बिन्दुसंपादकाः। विकृतिविशेषे श्रूयमाणैः कौत्सादिभिः प्राकृतसाम्नां बाधः इति भा।

अधि० ९ कौत्सादिभिर्व्यवस्थया एकादिबाधः इति भा-भिन्ने। विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिः तत्समसंख्यप्राकृतसामबाधः इति भा।

अधि० १० विवृद्धाविवृद्धस्तोमकक्रतुषु क्रमेण प्राकृतसामबाधाबाधौ इति म-सा-वि-शा-ल। वृद्धस्तोमकक्रतुषु प्राकृतसाम्नां बाधः इति भाट्ट। विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसाम-

२० स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च । १९ ल–य, १८ वृ, ११ बिन्दुः.

अधि० ११, १४ मण्डनः, १३ वि–ल, १२ म–सा–भाट्ट–शा–बिन्दु–वृ.

२१ पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् । २० ल–य, १९ वृ, १२ बिन्दुः.

२२ वचनानि त्वपूर्वत्वात् । २१ ल–य, २० वृ.

अधि० १२, १५ मण्डनः, १४ वि–ल, १३ म–सा–भाट्ट–शा–बिन्दु–वृ.

२३ विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना । २२ ल–य, २१ वृ, १३ बिन्दुः.

२४ शेषाणां चोदनैकत्वात् तस्मात् सर्वत्र श्रूयते । २३ ल–य, २२ वृ.

अधि० १३, १६ मण्डनः, १५ वि–ल, १४ म–सा–भाट्ट–शा–बिन्दु–वृ.

२५ तथोत्तरस्यां ततौ तत्प्रकृतित्वात् । २४ ल–य, २३ वृ, १४ बिन्दुः.

अधि० १४, १७ मण्डनः, १६ वि–ल, १५ म–सा–भाट्ट–शा–बिन्दु–वृ.

२६ प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ।२५ ल–य, २४ वृ, १५ बिन्दुः.

२७ अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत् । २६ ल–य, २५ वृ.

---

बाधाबाधौ इति बिन्दु–वृ । विवृद्धस्तोमकक्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नां अबाधस्य, अविवृद्धस्तोमकक्रतुषूपदिष्टैः सामभिः प्राकृतसाम्नां बाधस्य च निरूपणं इति भा ।

सू० २० ( १ ) स्तोमवृ इति वृ । ( २ ) च–शब्दो नास्ति बिन्दु–वृ–ल–य ।

अधि० ११ पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापौ इति म–सा–शा–बिन्दु–वृ । पवमाने विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापौ इति वि । पवमाने विवृद्धाविवृद्धस्तोमकक्रतुषु सामावापोद्वापौ इति भाट्ट । पवमाने इति दुष्टं पदं, बहिष्पवमानेऽतिव्याप्तेः । विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव साम्नामावापोद्वापौ इति भा ।

सू० २१ (१) पाव इति ल । (२) स्यात् इति सोम ( ५।३।५ अधि० ) । परंतु भाष्ये आवापोद्वापौ इति कर्तृपदस्याध्याहृतत्वात् स्यातां इति द्विवचनमेव युक्तम् ।

अधि० १२ यागादौ विधिशब्देनैव देवताभिधानं इति भा–भाट्ट–भिन्ने । यागादौ इत्यत्र त्यागादौ इति आवश्यकम् । किंच विधिशब्देन इत्यस्य विधिरितिशब्देन इति वा लिङादिना इति वाऽर्थः स्यात् । उभयेनापि देवताऽभिधानमसंभवि । यागादौ विधिगतशब्देनैव देवताऽभिधानं इति भाट्ट । त्यागादौ विधिगतस्यैव देवताशब्दस्योच्चारणनियमः इति भा ।

सू० २३ ( १ ) नात् इति बिन्दुः ।

सू० २४ ( १ ) णां वा चो इति वृ–ल । (२) र्वतः श्रू इति य ।

अधि० १३ अतिदेशस्थलेऽपि विधिशब्देनैव देवताऽभिधानं इति म–सा–भाट्ट–बिन्दु–वृ । अतिदेशस्थलेऽपि वैधशब्देनैव देवताऽभिधानं इति वि–शा–ल । अतिदेशस्थले इत्यत्र विकृतौ सौर्यादिविकृतौ इति वा वक्तव्यम् । सौर्यादिविकृतावपि आवाहनादिमन्त्रेषु विधिगतशब्देनैव देवताप्रकाशनं इति भा ।

सू० २५ ( १ ) तिकत्वात् इति टी ।

अधि० १४ आधाने अग्नेः सगुणेनाभिधानं इति भा–भाट्टभिन्ने । सगुणेन केन ? विशेषणस्यापि लेखने न महान् प्रयासः । आधाने सविशेषणेनाभिपदेन देवताऽभिधानं इति भाट्ट । विकृतौ देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोगः इति भा ।

२८ आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् । २७ ल-य, २६ वृ.

२९ द्रव्येष्वारम्भगामित्वादर्थेऽविकारे सामर्थ्यात् । २८ ल-य, २७ वृ.

अधि० १५, १८ मण्डनः, १७ वि-ल, १६ म-सा-भाट्ट-शा-बिन्दु-वृ.

३० बुधन्वान् पवमानवद् विशेषानिर्देशात् । २९ ल-य, २८वृ, १६ बिन्दुः.

३१ मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् । ३० ल-य, २९ वृ.

अधि० १६, १९ मण्डनः, १८ वि-ल, १७ म-सा-भाट्ट-शा-बिन्दु-वृ.

---

सू० २८ ( १ ) तथारम्भा इति भा-म-सा-वि-भाट्ट-शा-चौ । आरम्भा इति भाटि-वृ । आरम्भस इति य । तथाशब्दो भादिपुस्तके मुद्रितोऽपि भा-मूले अदृष्टत्वादस्माभिः प्रत्याख्यातः । ( २ ) शासनम इति वृ-ल ।

सू० २९ ( १ ) र्थे वि इति म-सा-वि-भाट्ट-शा-ल-चौ । ( २ ) कारः सा इति प्रायः सर्वत्र । परंतु भाष्ये " तस्मादर्थे साधने सति अविकारेऽप्यर्थे वचनसामर्थ्यमुपपद्यते " इत्युक्तत्वात् सप्तम्यन्तमेव पदं सिध्यति । वृत्तौ च यद्यपि विकार-शब्द एव पठ्यते तथापि स सप्तम्यन्त एव ' र्थे विकारे ' इति ।

अधि० १५ आधानाज्ययोः अग्नेर्निर्गुणेनाभिधानं इति म-सा-शा-बिन्दु-वि-ल । आधाने आज्ययोरग्नेर्निगुणेनाभिधानं इति वृ । आधानाज्ययोः इत्यस्य, आधाने आज्ययोः इत्यस्य च कोऽर्थः ? नूनमेते संपादकाः मीमांसान्यायालये उत्तमसाहसदण्डेन दण्ड्याः । यत् कथमपि प्रलपन्ति वितोदकम् । अग्नेर्निर्गुणेन, अग्नेःसगुणेन इत्यपि प्रलपनमेवोन्मत्तवत् । आज्यभागयोर्निर्विशेषणेनाग्न्यादिपदेनैव देवताभिधानं इति भाट्ट । पवमानेष्टिषु आज्यभागयोर्निर्गुणस्यैव देवतापदस्याभिधानं इति भा ।

सू० ३० ( १ ) वृधन्वान् इति वि-मूले, भाट्ट-बिन्दु-वृसूत्रे च मूले च, ल । बुधत्वात् इति य-क्ष । अत्र य-क्षपाठो हस्तदोषात् । बुधन्वान् इत्येव तु युक्तम्। तैब्रा. (१।३।१) सायणभाष्योपन्यस्ते विस्तरस्थाधिकरणे बुधन्वान् इत्येव । एक एव विस्तरकारः वेदभाष्योदाहृतेऽधिकरणे बुधन्वान् इति पठति स्वतन्त्रे तदीये एव विस्तरग्रन्थे तु वृधन्वान् इति पठति । वैदिकवाक्यमपि वेदभाष्ये ' बुधन्वानाग्नेयः कार्यः ' इत्युदाहरति, 'वृधन्वानाग्नेयः कार्यः' इति तु विस्तरमूले उदाहरति । विस्तरमूले च ' अग्निं स्तोमेन बोधय ' इति मन्त्र एव वेदभाष्यवत् उदाहृतः । स च मन्त्रः सर्व इत्थं- ' अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ' इति (ऋसं. ५।१४।१, वासं.२२।१५, तैसं.४।४।११। १९, मैसं. ४।१०।३०, कासं. १९।३७ ) अत्र सर्वत्र मन्त्रे बोधय इत्येव पदं वर्तते, न ' वर्धय ' इति । भाट्टदीपिकाकारस्तु मन्त्रे च ग्रन्थे च वृधधातुमेव प्रयुङ्क्ते न बुधधातुम् । अत्रायं निष्कर्षः, वृधन्वान् इति मीमांसासूत्रे पाठः तदनुसारि च सर्वं विस्तरादिमूलं अशुद्धमेव । विस्तरस्तु स्वव्याहत इत्यधिकमिति । सर्वथाऽपि मीमांसासूत्रे बुधन्वान् इत्येव पाठो न वृधन्वान् इति ।

अधि० १६ गवानुबन्धपृषदाज्यहोमयोर्विधिशब्दाभ्यामेवोस्रावनस्पतिशब्दाभ्यामभिधानं इति म-सा-वि-शा । कोयं गवानुबन्धो नाम ? ' अइउण् ' इत्यादौ णकाराद्यनुबन्ध इव न श्रौते कर्मणि गवानुबन्धो नाम कश्चिद् दृष्टचरो भवति । किंच, उस्रावनस्पतिशब्दौ किं विधिशब्दावेव ? लिङादिशब्दस्तर्हि द्रव्यशब्दः स्यात् । गवानुबन्ध्यपृषदाज्यहोमयोरुस्रावनस्पतिशब्दाभ्यामेवाभिधानं इति भाट्ट । अत्रत्यगवानुबन्ध्यशब्दस्य सैव गतिर्या गवानुबन्धशब्दस्य प्रागुक्ता । गवानुबन्धपृषदाज्ययोर्विधिशब्दाभ्यामेवोस्रावनस्पतिशब्दाभ्यामभिधानं इति बिन्दुः । प्रागुक्तेनेदमपि पराक्षिप्तम् । गवानुबन्धस्यैव साक्षात् उस्राशब्देनाभिधानं, पृषदाज्यद्रव्यस्य च वनस्पतिशब्देनाभिधानं, गवानुबन्ध-

३२ विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद् विकृतावपि भेदः स्यात् । ३१ ल–य, ३० वृ, १७ बिन्दुः.

३३ यथोक्तं वा विप्रतिपत्तेर्न चोदना । ३२ल–य, ३१ वृ.

अधि० १७, २० मण्डनः, १९ वि–ल, १८ म–सा–भाट्ट–शा–बिन्दु–वृ.

३४ स्विष्टकृद् देवतान्यत्वे तच्छब्दत्वान्निवर्त्येत । ३३ ल–य, ३२ वृ, १८ बिन्दुः.

३५ संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात । ३४ ल–य, ३३ वृ.

अधि० १८, २१ मण्डनः, २० वि–ल, १९ म–सा–भाट्ट–शा–बिन्दु–वृ.

३६ सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् । ३५ ल–य, ३४ वृ, १९ बिन्दुः.

३७ सर्वस्य वैककर्म्यात् । ३६ ल–य, ३५ वृ.

अधि० १९, २२ मण्डनः, २१ वि–ल, २० म–सा–भाट्ट–शा–बिन्दु–वृ.

३८ स्विष्टकृदावापिकोऽनुयाजे स्याद् प्रयोजनवदङ्गानामर्थसंयोगात् । ३७ ल–य, ३६ वृ, २० बिन्दुः.

---

उस्राशब्दौ पर्यायौ, पृषदाज्यवनस्पतिशब्दौ च पर्यायौ इत्यधिकं कोशपाण्डित्यं बिन्दुसंपादकानाम् । गवानुबन्धनपृषदाज्यहोमयोर्विधिशब्दाभ्यामेवोस्रावनस्पतिशब्दाभ्याममभिधानं इति वृ । ' पुनरपि तद्वत् शेषं पुवत् ' । आनुबन्ध्यवनस्पतियागयोर्निगमेषु विधिगतोस्रावनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोरभिधानं इति भा ।

सू० ३२ ( १ ) तिकत्वाद् इति टी ।

सू० ३३ ( १ ) पत्तेरचोदनात् इति य ।

अधि० १७ अवभृथेऽग्नीवरुणयोः सास्विष्टकृच्छब्देनाभिधानं इति भा–बिन्दुभिन्ने । अवभृथेऽग्नीवरुणयोः स्विष्टकृच्छब्देनाभिधानं इति बिन्दुः । अग्नीवरुणशब्दमनुच्चार्य स्विष्टकृच्छब्द एवोच्चार्य इति महत्पाण्डित्यं प्रदर्शयन्ति बिन्दुसंपादकाः । अवभृथे स्विष्टकृद्यागीयनिगमादिषु स्विष्टकृद्गुणकयोरग्नीवरुणयोरभिधानं इति भा ।

सू० ३४ ( १ ) निवर्तेत इति वि । निवर्त्येत इति भा–मूलम् । निवर्तेत इति भा–सूत्रम् । निवर्तेते इति य । अत्र वृ–मूले ' स्विष्टकृति देवतायाः ' इत्युक्तत्वात् समासः स्पष्टः । अर्थस्वारस्यात्तु पदभेदं मन्यामहे ।

अधि० १८ अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानं इति इति म–सा–वि–शा । सर्वत्रैव प्रयोगे इत्यस्य कोऽर्थः ? अग्निशब्दः सगुणः कथं भवति निर्गुणो वेति वक्तव्यम् । यद्यपि तार्किकमते शब्दस्य गुणत्वात् पुनः सगुणत्वं न संभवति तथापि मीमांसकमते शब्दस्य द्रव्यत्वात् स्यान्नाम सगुणत्वम् । तथापि कोऽसौ शब्दस्य गुणः, योऽसौ पशौ सर्वत्रैव त्याज्यः । अग्नीषोमीयपशौ निर्विशेषणेनाग्निपदेनाभिधानं इति भाट्ट । पशौ इत्यस्य कोऽर्थः ?। अभिधाने च केन संबन्धेनान्वयः पशौ इत्यस्य ? अग्नीषोमीये सप्रयोगेषु निर्गुणेनाग्निपदेनाग्नेरभिधानं इति बिन्दुः । सप्रयोगेषु इत्यस्यार्थं बिन्दुसंपादका एव कथयन्तु । अग्निपदं च कथं निर्गुणं संपादयितव्यमित्यपि वक्तव्यं तैः । अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्नेरभिधानं इति वृ । सर्वत्रैव इत्यस्य कोऽर्थः ? निर्गुणेन केन ? । अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणाग्निशब्देनाग्नेरभिधानं इति ल । उक्तमत्र यद्वक्तव्यम् । अग्नीषोमीयपशौ पशुपुरोडाशाङ्गस्विष्टकृद्यागे त्यागे निगदेषु च निर्गुणस्यैवाग्नेरभिधानं इति भा ।

सू० ३६ ( १ ) षु गुणस्थाने या इति भाटि–मटि–वृ । षु गुणास्थाने या इति ल–पाठस्तु त्याज्यः ।

अधि० १९ अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मता इति भा–भिन्ने । दर्शपूर्णमासयोः अग्निस्विष्टकृद्देवत्यस्य तृतीयानुयाजस्य शेषसंस्कारार्थावापिकस्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकत्वं इति भा ।

सू० ३८ ( १ ) ऽनूया इति वृ–य–रत्न ।

अधि० २०, २३ मण्डनः, २२ वि-ल, २१ म-सा-भाट्ट-शा-बिन्दु-वृ.

३९ अन्वाहेति च शब्दवत् कर्म स्याच्चोदनान्तरात् । ३८ ल-य, ३७ वृ, २१ बिन्दुः.

४० संस्कारो वा चोदितस्य शब्दस्य वचनार्थत्वात् । ३९ ल-य, ३८ वृ.

४१ अवाच्यत्वान्नेति चेत् । ४० ल-य, ३९ वृ.

४२ स्याद् गुणार्थत्वात् । ४१ भादौ, ४० वृ-य.

अधि० २१, २४ मण्डनः, २३ वि-ल, २२ म-सा-भाट्ट-शा-बिन्दु-वृ.

४३ मनोतायां तु वचनादविकारः स्यात् । ४२ भादौ, ४१ वृ-य, २२ बिन्दुः.

अधि० २२, २५ मण्डनः, २४ वि-ल, २३ म-सा-भाट्ट-शा-बिन्दु-वृ.

४४ पृष्ठार्थेऽन्यद् रथंतरात् तद्योनिपूर्वत्वात् स्याद्दचां प्रविभक्तत्वात् । ४३ भादौ, ४२ वृ-य, २३ बिन्दुः.

४५ स्वयोनौ वा सर्वाख्यत्वात् । ४४ भादौ, ४३वृ-य.

४६ यूपवदिति चेत् । ४५ भादौ, ४४ वृ-य.

४७ न कर्मसंयोगात् । ४६ भादौ, ४५ वृ, ४४ य.

अधि० २३, २६ मण्डनः, २५ वि-ल, २४ म-सा-शा-बिन्दु-वृ.

---

अधि० २० दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मता इति भा-भाट्टभिन्ने । विकृतौ प्राकृतयाज्यानुवाक्ययोर्बाधः इति भाट्ट । याज्यापुरोनुवाक्ययोः संस्कारार्थत्वं इति भा ।

सू० ३९ ( १ ) ति श इति बिन्दुः ।

सू० ४० ( १ ) ब्दस्य व इति वृ-ल-य । ब्दव इति अन्यत्र । वृ-ल-यपाठमेव साधीयांसं मन्यामहे ।

एतत्सूत्रोत्तरं 'अवाच्यत्वान्नेतिचेत्' इति सूत्रं वृ-ल-य । अन्यत्र तु नास्तीदं सूत्रं मुद्रितम् । अत्र अवतरणत्वेन मुद्रितो भाष्यग्रन्थ इत्थम्, 'अवाच्यत्वान्नेतिचेदिति यदुक्तं तत्परिहर्तव्यम्' इति । तेन इदं सूत्रत्वेनैव भाष्यसंमतमिति । संपादकैस्तु सूत्रत्वेन न स्वीकृत तदनवधानात् । १०।४।१२ सूत्रात् प्राक् 'प्रयाजवदितिचेत् इति यदुक्तं तत्परिहर्तव्यम्' इति भाष्यग्रन्थः । तत्र तु 'प्रयाजवदितिचेत्' इति वाक्यं सूत्रत्वेन स्वीकृतम् । १०।५।२४ सूत्रात् प्राक् 'धुर्येष्वपीतिचेत् । अथ यदुपवर्णितं, यथा धुरि सामसु इति तत्परिहर्तव्यम्' इति । अत्र 'धुर्येष्वपीतिचेत्' इति वाक्यं सूत्रत्वेन स्वीकृतम् । १०।५।२९ सूत्रात् प्राक्तनं 'अविशेषान्नेतिचेत् इति यदुक्तं तत्परिहर्तव्यम्' इति वाक्यं सूत्रत्वेन स्वीकृतम् । बहूनि चैतादृशान्युदाहरणानि प्रदर्शयितुं योग्यानि । एवं सति प्रकृतं अवाच्यत्वान्नेति चेत् इत्येव कुतः सूत्रत्वेन न स्वीक्रियते तत्रभवद्भिः ?

सू० ४१ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० २१ मनोतायामूहाभावः इति भा-भाट्टभिन्ने । मनोतायां ऊहस्य नैव संभवः इति तदभावोऽपि न प्रतिपादनीयः । मनोतामन्त्रे इति वक्तव्यम् । मनोतामन्त्रस्य विकृतावनूहः इति भाट्ट । मनोतामन्त्रस्य वायव्यादिपशौ नोहः इति भा ।

अधि० २२ कण्वरथंतरस्य स्वयोनौ गानं इति भा-भाट्टभिन्ने । वैश्यस्तोमे कण्वरथंतरस्य स्वयोनौ गानं इति भाट्ट । वैश्वस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य कण्वरथंतरस्य स्वयोनौ गानं इति भा ।

सू० ४४ ( १ ) स्याद्द इति वृ-ल ।

सू० ४५ ( १ ) वास इति संधाय मुद्रितं चौ । (२) सर्वाख्यातत्वात् इति टुप् ।

सू० ४६ ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० २३ कण्वरथंतरस्य स्वयोन्युत्तरयोर्गानं इति म-सा-वि-शा-वृ-ल । कण्वरथंतरस्य स्वयोन्युत्तरयोन्योर्गानं इति बिन्दुः । योन्युत्तरयोन्योः इत्यसंभवि । नहि सामयोनिभूताया ऋचः परस्तात् पुनर्योनिरेव भवति । वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य कण्वरथंतरस्य स्वयोन्युत्तरयोर्गानं इति भा ।

४८ कार्यत्वादुत्तरयोर्यथाप्रकृति। ४७ भाट्टौ, ४६ वृ, ४५ य, २४ बिन्दुः.

४९ समानदेवते वा तृचस्याविभागात्। ४८ भाट्टौ, ४७ वृ, ४६ य.

अधि० २४, २७ मण्डनः, २६ वि-ल, २५ म सा-शा-बिन्दु-वृ.

५० ग्रहाणां देवताऽन्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्। ४९ भाट्टौ, ४८ वृ, ४७ य, २५ बिन्दुः.

अधि० २५, २८ मण्डनः, २७ वि-ल, २६ म -सा-शा-बिन्दु-वृ.

५१ उभयपानात् पृषदाज्ये दध्नोऽपि स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात्। ५० भाट्टौ, ४९ वृ, ४८ य, २६ बिन्दुः.

५२ न वा परार्थत्वात् यज्ञपतिवत्। ५१ भाट्टौ, ५० वृ, ४९ य.

५३ स्याद् वाऽऽवाहनस्य तादर्थ्यात्। ५२ भाट्टौ, ५१ वृ, ५० य.

५४ न वा संस्कारशब्दत्वात्। ५३ भाट्टौ, ५२ वृ, ५१ य.

५५ स्याद् वा द्रव्याभिधानात्। ५४ भाट्टौ, ५३ वृ, ५२ य.

५६ दध्नस्तु गुणभूतत्वादाज्यपानिगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात्। ५५ भाट्टौ, ५४ वृ, ५३ य.

५७ दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात्। ५६ भाट्टौ, ५५ वृ, ५४ य.

५८ अपिवाऽऽज्यप्रधानत्वाद् गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात्। ५७ भाट्टौ, ५६ वृ, ५५ य.

५९ अपिवाऽऽख्याविकारत्वात् तेन स्यादुपलक्षणम्। ५८ भाट्टौ, ५७ वृ, ५६ य.

---

सू० ४८ कार्यत्वात् इत्यादि सूत्रद्वयस्य पूर्वाधिकरणशेषत्वमेव स्वीकृतं भाट्टदीपिकायाम्।

सू० ४९ (१) तृचस्य वि इति ल-चौ।

अधि० २४ अग्निष्टुति स्तुतशस्त्रयोरविकारः इति भा-भिन्ने। अग्निष्टुद्यागे स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेवाविकारेण प्रयोगः इति भा।

अधि० २५ चातुर्मास्येषु आज्यशब्दस्याविकारेणावाहनं इति भा-भाट्टभिन्ने। शब्दस्यावाहनं कथं नाम संभवति ? देवतायास्तु आवाहनं 'अग्निमावह' इत्यादिरूपेण क्रियते। शब्दस्य च विकारेण आवाहनं कथमिति वक्तव्यं, ततोऽविकारेणापि ज्ञातुं शक्येत। यथा 'अस्मिन् पूगीफले साङ्गं सपरिवारं सायुधं सशक्तिकं महागणपतिमावाहयामि' इति याज्ञिका देवताया आवाहनं पूगीफले कुर्वन्ति तथा अत्रापि. तत्र महागणपतेः अत्र तु आज्यशब्दस्य, तत्र पूगीफले अत्र तु चातुर्मास्येषु इत्येव विशेषः शेषं समानम्। धन्याः स्थ मीमांसकवर्याः शीर्षकसपादकाः। अथ पशौ आवाहनादिषु पृषदाज्यपदोहः इति भाट्ट। सिद्धान्तविरुद्धमिदम्। सिद्धान्तः पूर्वदिग्गामी। शीर्षकं तु वारुणदिग्गामि। अत्र नास्ति तथोहः। चातुर्मास्येषु अनुयाजीयदेवताप्रकाशनार्थं प्राकृतावाहनमन्त्रस्याविकारेणैव प्रयोगः इति भा।

सू० ५१ (१) दध्नः स्या इति भा। दध्नोऽप्युप इति वृ-ल। अत्र भाष्यं 'किं प्राप्तम्। दध्नोऽप्युपलक्षणं स्यात् आज्यस्यापि' इति, तेन स्यात्-पदं अपि-पदं चोभयमपि भाष्यसंमतमत्रेति मन्यामहे। (२) क्षणत्वात् इति बिन्दु-वृ-ल।

सू० ५६ (१) पानि इति संधाय मुद्रितं ल-चौ। अन्यत्र तु सर्वत्र ज्यपा निगमाः इति भित्त्वैव मुद्रितम्। भाष्यमूलेऽपि 'आज्यपाः निगमाः' इति भित्त्वैव मुद्रितम्। वृ-मूलेऽपि 'आज्यपाः इत्येवं निगमाः' इति साध्याहारं व्याख्यातम्। वयं तु तन्न रोचयामहे। वयं तु ऐकपद्यायैव स्पृहयामः आज्यपापदघटिताः निगमाः आज्यपानिगमाः। आज्यपानिगमाः स्युः, न तु पृषदाज्यपदघटिताः निगमाः स्युः इति सिद्धान्त उक्तोऽत्र। आज्यपाशब्दो विश्वपावत्।

सू० ५९ (१) ख्या वि इति भाट्ट।

६० न वा स्याद् गुणशास्त्रत्वात् । ५९ भादौ, ५८ वृ, ५७ य.

॥ न्यायाश्चतुर्थपादेऽस्मिन्नष्टाविंशतिरीरिताः ॥

॥ प्रकृति प्रयाजवद् वचनानि विधि मनोतायां नवा सप्तपञ्चाशत् ॥

॥ इति दशमाध्यायस्य चतुर्थः पादः ॥

* * * *

॥ अथ दशमाध्यायस्य पञ्चमः पादः ॥

अधि० १.

१ आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवद्न्त्यलोपः स्यात् ।

२ लिङ्गदर्शनाच्च ।

३ विकल्पो वा समत्वात् ।

४ क्रमादुपजनोऽन्ते स्यात् ।

५ लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ।

६ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद् वचनादन्त्यविधिःस्यात् ।

अधि० २.

७ एकत्रिके तृचादिषु माध्यंदिने, छन्दसां श्रुतिभूतत्वात् । २ बिन्दुः.

८ आदितो वा तन्न्यायत्वादितरस्याऽऽनुमानिकत्वात् ।

९ यथानिवेशं च प्रकृतिवत् संख्यामात्रविकारत्वात् ।

अधि० ३.

१० त्रिकस्तृचे धुर्ये स्यात् । ३ बिन्दुः.

११ एकस्यां वा स्तोमस्याऽऽवृत्तिधर्मत्वात् ।

अधि० ४.

१२ चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् । ४ बिन्दुः.

१३ प्राप्तिस्तु रात्रिशब्दसंबन्धात् ।

अधि० ५.

---

अधि० १ एकदेशग्रहणे प्राथमिकानामेव ग्रहणं इति भा-भिन्ने । विकृतौ एकदेशग्रहणे यावत्संख्यमाद्यानामेव ग्रहणं इति भा । विकृतौ प्राकृतैकदेशग्रहणे इत्यवश्यं वक्तव्यम् ।

सू० ४ ( १ ) पसर्जनो इति वृ-ल ।

सू० ५ ( १ ) ख्यापायाद्धि त इति य ।

सू० ६ ( १ ) दन्यवि इति य ।

अधि० २ एकत्रिके आद्ये तृचे गानं इति भा-भिन्ने । अत्र एकत्रिके इति सामान्योक्त्या सवनत्रयेऽपीति भाति । विचारस्तु माध्यंदिनपवमानविषयक एवेति कृत्वा अयुक्तं शीर्षकम् । एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे आद्य एव तृचे गानं इति भा ।

सू० ७ ( १ ) दिनस्थच्छन्द इति शा । दिनच्छन्द इति बिन्दु-ल-रत्न । दिनश्छन्द इति वृ-य ।

अधि० ३ एकस्यामृचि धुर्गानं इति भा-भाट्टभिन्ने । तत् किमग्निष्टोमादावपि धूर्गानमेकस्यामेव ऋचि कर्तव्यम् ? । एकत्रिके इति पदमधिकं ग्राह्यम् । न च तावता संपादकानां महान् श्रमः । एकत्रिके एकस्यामृचि धूर्गानं इति भाट्ट । एकत्रिके क्रतौ एकस्या एव ऋचस्त्रिरभ्यासेन त्रिकस्तोमधूर्गानं इति भा ।

सू० १० ( १ ) त्रिकं तृचेषु धु इति शा-सोम । धूर्ये इति सोमपाठस्तु हस्तदोषात् । त्रिकं स्तृचेषु इति बिन्दु-पाठस्तु अशुद्ध एव । त्रिका तृचे इति य-क्ष । अत्र लेखकदोष एवेति भाति अर्थासाङ्गत्यात् ।

सू० ११ (१) स्यां स्तोम इति य । (२) मस्य वृ इति वृ-सूत्रे, वृ-मूले तु मस्यावृ इत्येव ।

अधि० ४ द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानं इति भा-भिन्ने । द्विरात्राद्यहर्गणेषु द्वादशाहिकदशाहधर्माणामनुष्ठानं इति भा ।

सू० १२ ( १ ) त्वालिङ्गे इति ल-पाठो न ग्राह्यः । ( २ ) न नि इति य ।

सू० १३ ( १ ) त्रिसं इति वृ । ( २ ) नास्तीदं सूत्रं य ।

अधि० ५ सप्तभिराधुनोति इत्यनेनाग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानं इति म-सा । अग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानं इति वि-शा-ल । आधूननवपनार्थमन्त्राणामुपादानानियमः

१४ अपूर्वासु तु संख्यासु विकल्पः स्यात् सर्वासामर्थवत्त्वात् । १३य, ५ बिन्दुः.

अधि० ६.

१५ स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात् संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् । १४ य, ६ बिन्दुः.

१६ आगमेन वाऽभ्यासस्याश्रुतित्वात् । १५ य.

१७ संख्यायाश्च पृथक्त्वनिवेशात् । १६ य.

१८ पराक्शब्दात् । १७ य.

१९ उक्ताविकाराच्च । १८ य.

२० अश्रुतित्वादिति चेत् । १९ य.

२१ स्यादर्थचोदितानां परिमाणशास्त्रम् । १९ य.

२२ आवापवचनं चाभ्यासे नोपपद्यते । २० य.

२३ साम्नां चोत्पत्तिसामर्थ्यात् । २१ य.

२४ धुर्येष्वपीति चेत् । २२ य.

२५ नाऽऽवृत्तिधर्मत्वात् । २२ य.

अधि० ७.

---

इति भाट्ट । तर्हि किं मन्त्रा उपादातव्या नैव वा उपादातव्या इति मन्यन्ते संपादकाः ? अयुक्तमिदम् । सप्तभिराधुनोति इत्यनेनाग्नौ धूननाद्यर्थकमन्त्राणामनियमेनोपादानं इति बिन्दुः । चयनप्रकरणे पठ्यमानानां वपनार्थानामाधूननार्थानां च मन्त्राणां श्रुतसंख्यासंपत्तये अनियमेनोपादानं इति भा । आधूननोपयुक्ता मन्त्रा सप्तभ्योऽधिकाः पठ्यन्ते वेदे । सप्तभिराधुनोति इति वाक्येन तु सप्तैव पठनीया इत्युक्तम् । तथा सति आदितो वा सप्त मन्त्रा ग्राह्या अन्ततो वा मध्यतो वा ये के चिद्वा इति नियमो न ज्ञायते । तत्र सिद्धान्तः 'आदित एवेति न नियमः, किंतु ये के चित् ग्राह्याः, परंतु सप्तैव ग्राह्याः, इति विशेषः ' इति । सोयमर्थः शीर्षकेषु ज्ञातव्यो भवति ।

सू० १४ ( १ ) ख्यावि इति य ।

अधि० ६ विवृद्धस्तोमकेषु अप्राकृतानां साम्नामागमः इति भा-बिन्दुभिन्ने । विवृद्धस्तोमकेऽप्राप्तानामागमः इति बिन्दुः । अप्राकृतानां इत्यस्य स्थाने अप्राप्तानां इति विपरिवर्तनं न मनोरमम् । विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये सामान्तरागमः इति भा ।

सू० १५ ( १ ) कृतीना इति वृ-सूत्रे, वृ-मूले तु प्राकृताना इत्येव । ( २ ) न तु सं इति बिन्दुः । ( ३ ) मधिका इति बिन्दु-वृ । ( ४ ) ख्याया गु इति बिन्दु-य ।

सू० १६ ( १ ) श्रुतत्वात् इति टी ।

सू० १७ ( १ ) थक्त्वे नि इति वृ-ल ।

सू० १८ ( १ ) शब्दत्वात् इति य-भिन्ने सर्वत्र, शब्दात् इति य । भाष्ये तु ' पराक् शब्दो हि भवति ' इत्युक्तम् । तेन य-पाठ एव भाष्यसंमत इति मन्यामहे ।

सू० २० ( १ ) त्वान्नेति इति वृ-लभिन्ने । भाष्यं तु ' इतिचेत् •इति पुनर्यदुक्तं आगमोपि नैव श्रूयत इति । तत्परिहर्तव्यम् ' इति तेन भाष्यमतेन सूत्रे न-शब्दो नास्तीति निश्चीयते । ( २ ) चेदन्तमुत्तरेणैकं य ।

सू० २२ ( १ ) वाभ्यासे इति वृ-सूत्रे, वृ-मूले तु च-शब्दो वा-शब्दो वा नास्त्येव । भाष्ये तु ' इतश्चागम इति पश्यामः ' इति च-शब्दो व्याख्यातः ।

सू० २३ ( १ ) साम्ना चो इति ल-पाठो न ग्राह्यः ।

सू० २४ ( १ ) धूर्ये इति मटि-सापाठो न ग्राह्यः । ( २ ) चेदन्तमुत्तरेणैकं य ।

अधि० ७ बहिष्पवमाने ऋगागमः इति भा-भिन्ने । नहि सर्वत्र बहिष्पवमानस्तोत्रे ऋगागमः कर्तव्यो भवति इति ' विवृद्धस्तोमके क्रतौ ' इति प्रथमतो वक्तव्यम् । विवृद्धस्तोमके क्रतौ बहिष्पवमाने साम्नामभ्यासः इति भा । अत्र साम्नां इति बहुवचनमयुक्तम् । ' एकं हि तत्र साम' इति श्रुतिरेव एकसामकत्वं ब्रूते । तथा च सामाभ्यास इति ऋगागम इति वा वक्तव्यम् । भाष्येऽपि ' साम्ने-

२६ बहिष्पवमाने तु ऋगागमः सामैकत्वात्। २३ य, ७ बिन्दुः.

अधि० ८.

२७ अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् । २४ य, ८ बिन्दुः.

२८ अविशेषान्नेति चेत् । २५ य.

२९ स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येताऽऽसंख्यापूरणात्। २५ य.

३० यावदुक्तं वा कृतपरिमाणत्वात् । २६ य.

३१ अधिकानां च दर्शनात् । २७ य.

३२ कर्मस्वपीति चेत् । २८ य.

३३ न चोदितत्वात् । २८ य.

अधि० ९.

३४ षोडशिनो वैकृतत्वं, तत्र कृत्स्नविधानात् । २९ य, ९ बिन्दुः.

३५ प्रकृतौ चाभावदर्शनात् । ३० य.

३६ अयज्ञवचनाच्च । ३१ य.

३७ प्रकृतौ वा शिष्टत्वात् । ३२ य.

३८ प्रकृतिदर्शनाच्च । ३३ य.

३९ आम्नानं परिसंख्यार्थम् । ३४ य.

४० उक्तमभावदर्शनम् । ३५ य.

४१ गुणादयज्ञत्वम् । ३६ य.

अधि० १०.

४२ तस्याऽऽग्रयणाद् ग्रहणम् । ३७ य, १० बिन्दुः.

---

कत्वे ज्ञाते ऋगागमेन संख्या पूरणीया इति सामाभ्यसितव्यमिति ' इत्युक्तम् ।

सू० २६ ( १ ) अत्र ऋत्यकः इति प्रकृतिभावः स्वीकृतः । तच्च युक्तमेव उच्चारणसुखकरत्वात् ।

अधि० ८ सामिधेनीषु अवशिष्टानामागमेन संख्यापूरणं इति भा–भाट्टभिन्ने । सामिधेनीषु अवशिष्टानामागमेन संख्यापूर्तिः इति भाट्ट । सामिधेनीषु अवशिष्टानामागमेन सामिधेनीविवृद्धौ प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामागमेन संख्यापूरणं इति भा । भा–भिन्नशीर्षकद्वयं तु भ्रामकम् । सामिधेनीविवृद्धौ विहितसंख्यापूरणार्थं ऋगागमः इति शीर्षकं युक्तम् ।

सू० २७ ( १ ) न सं इति बिन्दुः । ' तु–शब्दः पक्षव्यावर्तकः ' इति तु भाष्यम् ।

सू० २८ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० २९ ( १ ) स्याद्ध इति य । ( २ ) पूरणत्वात् इति य । सूत्र–संग्रहीता कश्चित्तद्धितप्रियो दाक्षिणात्यः स्यात् । भाष्ये तु ' आसंख्यापूरणात् ' इत्येव ।

सू० ३२ ( १ ) न कर्म इति वि–शा–चौ । अत्र नञ् व्यर्थ एव । भाष्येऽपि नास्त्येव नञ् । ( २ ) चेदन्तमुत्तरेणैकं य ।

अधि० ९ षोडशिनां प्राकृतत्वं इति भा–भाट्टभिन्ने । अयि भोः कति सन्ति षोडशिसंज्ञका ग्रहाः ? अयुक्तं बहुवचनं तस्यैकत्वात् । षोडशिनः प्राकृतत्वं इति भाट्ट । अत्र शीर्षकद्वयेऽपि प्राकृतत्वं इति पदस्य प्रकृतिगतत्वं, प्रकृत्यङ्गत्वं, प्रकृतिज्योतिष्टोमस्तदङ्गत्वं इति स्यादर्थः । परंतु ' ज्योतिष्टोमे निवेशः ' इत्येव कुतो नोक्तम् ? । विस्तरमूले च ' प्रकृतौ निवेशः ' इत्येवोपसंहृतं तत् कुतस्त्यक्तम् । षोडशिनो ज्योतिष्टोमाङ्गत्वं इति भा । अत्र सर्वत्र षोडशिग्रहस्य इति वक्तुं युक्तम् । षोडशी ग्रहः षोडशी नाम क्रतुश्चेति द्विविधः षोडशी । तत्र क्रतौ प्रसक्तिज्योतिष्टोमाङ्गत्वस्य मा भूत् इति ग्रहपदं प्रयोक्तव्यमेव ।

सू० ३७ ( १ ) प्राकृते वा इति य । प्रकृतौ वा विशि इति टुप्–टी ।

सू० ३९ ( १ ) आम्नानं इति वृ–ल–य । आम्नातं इति तद्भिन्ने । वृ–यपाठ एव तु युक्तः ।

अधि० १० आग्रयणादेव षोडशिग्रहणं इति भा–भिन्ने । आग्रयणादेव षोडशिनो ग्रहणं इति भा । ' आग्रयणपात्रादेव षोडशिनो ग्रहणं इति तु शीर्षकं युक्तम् । केवलाग्रयणशब्दात्तु श्यामाकाग्रयणादेरुपस्थितिर्भवति ।

४३ उक्थ्याच्च वचनात् । ३८ य.

अधि० ११ अन्तरागर्भिणी.

४४ तृतीयसवने वचनात् स्यात् । ३९ य, ११ बिन्दुः.

दशमाधिकरणशेषसूत्राणि.

४५ अनभ्यासे पराक्शब्दस्तादर्थ्यात् । ४० य.

४६ उक्थ्यविच्छेदवचनत्वात् । ४१ य.

४७ आग्रयणाद् वा, पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् । ४२ य.

४८ विच्छेदः स्तोमसामान्यात् । ४३ य.

अधि० १२.

४९ उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात् सति हि संस्थाऽन्यत्वम् । ४४ य, १२ बिन्दुः.

५० सस्तुतशस्त्रो वा तदङ्गत्वात् । ४५ य.

५१ लिङ्गदर्शनाच्च । ४६ य.

५२ वचनात् संस्थाऽन्यत्वम् । ४७ य.

अधि० १३.

५३ अभावादतिरात्रेषु गृह्यते । ४८ य, १३ बिन्दुः.

५४ अन्वयो वाऽनारभ्यविधानात् । ४९य.

अधि० १४.

५५ चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् । ५० य, १४ बिन्दुः.

५६ अपिवा संख्यावत्त्वान्नानाऽहीनेषु गृह्यते पक्षवदेकस्मिन् संख्यौऽर्थभावात् । ५१ य.

---

अधि० ११ इदमेकसूत्रात्मकमधिकरणं अन्तरागर्भिणीरूपम् । उत्तरं सूत्रचतुष्टयं तु दशमाधिकरणशेषभूतमेव । तृतीयसवन एव षोडशिग्रहणं इति भा-भिन्ने । ज्योतिष्टोमे तृतीयसवन एव षोडशिग्रहणं इति भा ।

सू० ४४ (१) स तृ इति शा । (२) चने स्यात् इति य-रत्न ।

सू० ४५ (१) ब्दस्ता इति य । ब्दस्य ता इति य-भिन्ने सर्वत्र । अत्र भाष्यं " अनभ्यासे पराक्शब्दो वर्तते । कुतः । तादर्थ्यात् " इति । तेन य-पाठ एव भाष्यसंमतः ।

सू० ४६ (१) उक्थ्यावि इति वि-शा-चौ । (२) चनाच्च इति वृ-ल-य ।

अधि० १२ षोडशिग्रहस्य सस्तोत्रशस्त्रता इति भा-भिन्ने । षोडशिनः सस्तुतशस्त्रता इति भा ।

सू० ४९ (१) सति सं इति वृ-ल ।

अधि० १३ अङ्गिरसां द्विरात्रे षोडशिनः परिसंख्या इति भा-भिन्ने । अङ्गिरसां द्विरात्रे षोडशिग्रहणोपसंहारः इति भा ।

अत्राधिकरणे वर्णकद्वयम् । प्रथमं वृत्तिकारमतेन द्वितीयं तु स्वमतेन । उदाहृतं शीर्षकद्वयं प्रथमवर्णकस्य । तत्र भा-भिन्नशीर्षकं निरर्थकम् । नहि षोडशिनः परिसंख्या, किंतु इतरद्विरात्रस्य परिसंख्या षोडश्युत्तरे इति वाक्येन । तस्मात् ' अङ्गिरसां द्विरात्रे षोडशिना द्विरात्रान्तरपरिसंख्या ' इति शीर्षकं कल्पनीयम् । भा-शीर्षकस्यापि ' उत्तरेऽहन् द्विरात्रस्य गृह्यते ' इत्यस्य ' षोडश्युत्तरे ' इत्यनेनोपसंहारः इत्यर्थो ग्राह्यः । अथ द्वितीयवर्णके षोडश्युत्तरे इत्यस्य वैखानससामविध्यर्थवादत्वं इति भा-शीर्षकम् । इतरग्रन्थेषु तु शीर्षकान्तरं नास्त्येव ।

अधि० १४ नानाऽहीने षोडशिग्रहणं इति भा-भिन्ने । स्थूलमिदम् । नानाऽहीने प्रत्येकं चतुर्थेऽहनि षोडशिग्रहणमिति वक्तव्यम् । नानाऽहीने चतुर्थेऽहनि षोडशिग्रहणं इति भा । अत्रापि ' प्रत्येकं ' इति वक्तव्यम् ।

सू० ५५ (१) चतुर्थेऽह इति चतुर्थे-पदस्य वीप्साशून्यत्वं वृ-सूत्रे, वृ-मूले तु वीप्सा वर्तते । सर्वत्र चतुर्थे चतुर्थे इति सत्यामपि वीप्सायां भित्त्वा मुद्रितम् । संधाय मुद्रणं तु युक्तं वीप्साया ऐकपद्यात् ।

सू० ५६ (१) ख्यात्वान्नाही इति ल-पाठो न ग्राह्यः । (२) गृह्येत इति य । (३) संख्याभावात् इति य ।

५७ भोजने तत्संख्यं स्यात् । ५२ य.

अधि० १५, १५ तः १६ मण्डनः.

५८ जगत्साम्नि सामाभावादक्तः साम तदाख्यं स्यात् । ५३ य, १५ बिन्दुः.

अधि० १६, १७ मण्डनः.

५९ उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् । ५४ य, १६ बिन्दुः.

६० मुख्येन वा नियम्येत । ५५ य.

६१ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् । ५६ य.

अधि० १७, १८ मण्डनः.

६२ ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् । ५७ य, १७ बिन्दुः.

६३ अपिवा धर्मविशेषात् तद्धर्माणां स्वे स्थाने प्रकरणादग्रत्वमुच्यते । ५८ य.

६४ धारासंयोगाच्च ।

अधि० १८, १९ मण्डनः.

६५ कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् । ५९ य, १८ बिन्दुः.

---

सू० ५७ ( १ ) भोजने च तत् इति वृ–ल । ‘ भोजने संख्यावत्त्वात् ततोऽधिसंख्या स्यात् ’ इति सूत्रं य ।

अधि० १५ अत्र वर्णकद्वयम् । तच्च मण्डनाचार्येण पञ्चदश–षोडशाधिकरणद्वयत्वेन स्वीकृतम् । तत्र प्रथमवर्णके शीर्षकं यथा, विकृतौ ग्रहाणामाग्रयणाग्रता इति म–सा–वि–बिन्दु–वृ–ल । वर्णकद्वयविशिष्टमधिकरणं इति वि–शा । विषुवत्–संज्ञिकायां विकृतौ आग्रयणाग्रताया निवेशः इति भा । अथ द्वितीयवर्णके, जगत्सामा इति शब्देन विषुवतो ग्रहणं इति म-सा–वृ । जगत्साम्नो जगत्यृगुत्पन्नसामता इति वि । जगच्छब्दो जगतीपर्यायः इति भाट्ट । प्रपञ्चवाचको जगच्छब्दः जगतीवाचकः नाम पृथिवीवाचकः इत्यप्यर्थोऽस्य शीर्षकस्य निष्पद्यते । स चात्राधिकरणे नैव ग्रहीतुं शक्यः । जगत्सामा इत्यत्र जगच्छब्दः जगतीछन्दोवाचकः इति तु वक्तव्यम् । जगत्साम्नो जगत्यृगुत्पन्नसामताकत्वं इति ल । ल-संपादकानां उत्स्वप्नायितमेतत् निरर्थकं जरद्गवादिवाक्यवत् । जगत्सामशब्दार्थनिर्वचनं इति भा ।

सू० ५८ ( १ ) वादुक्तः इति य–क्ष । द–स्थाने ‘ दु ’ इति लेखो लेखकप्रमादादेव ।

अधि० १६ संसवे उपवत्यग्रवत्योरभावः इति म–सा–बिन्दु–वृ । गोसवे उपवत्यग्रवत्योरभावः इति वि–शा–ल । संसवादिषु उपवत्यग्रवत्योरभावः इति भाट्ट । संसवादिविकृतौ प्राकृतयोर्नैमित्तिकयोः उपवत्यग्रवत्योरननुष्ठानं इति भा । ‘ पृष्ठप्रतिपदोः ’ इतिपदं सर्वत्रावश्यकम् ।

सू० ६० ( १ ) नियम्यते इति ल ।

सू० ६१ ( १ ) विधानाद्वा इति चौ–पाठो न ग्राह्यः । अत्र वृ-मूले ‘ क्रतुयुक्तं क्रतुनिमित्तं ततोऽन्यदेव स्यात् ’ इति पङ्क्तिः । तेन वृ-मूलमतेन ‘ क्रतुयुक्तं ततोऽन्यत् स्यात् ’ इति वा ‘क्रतुयुक्तमन्यत् स्यात्’ इति वा पाठः सिध्यति ।

अधि० १७ ऐन्द्रवायवस्य सर्वादौ अप्रतिकर्षः इति म–सा–वि–शा–बिन्दु–वृ । ऐन्द्रवायवस्य न सर्वादितः प्रतिकर्षः इति भाट्ट । ऐन्द्रवायवस्य असर्वादौ अतिकर्षः इति ल । निरर्थकमेवैतत् दशदाडिमादिवाक्यवत् । ऐन्द्रवायवस्य मैत्रावरुणादिग्रहापेक्षया प्रथममनुष्ठानं इति भा । भाष्येतराणि शीर्षकाणि निषेधकतां हित्वा विधायकतां कुतो नाङ्गीचक्रुरिति प्रश्न एव ।

सू० ६२ ( १ ) ग्रताव इति य ।

सू० ६३ ( १ ) धर्मवि इति वृ–ल–य । ( २ ) षाद्ध इति वृ । ( ३ ) स्वस्थाने इति य-भिन्ने सर्वत्र । स्वे स्थाने इति य । भाष्यमूलेऽपि ‘स्वे स्थाने ये ग्रहा ऐन्द्रवायवाग्राः ’ इत्युक्तत्वात् य–वत् पाठः स्वीकर्तुं युक्तः । ( ४ ) प्रतिक इति ल–पाठस्तु न ग्राह्यः ।

सू० ६४ नास्तीदं सूत्रं य ।

अधि० १८ कामसंयोगेऽपि ऐन्द्रवायवस्य आदावप्रतिकर्षः इति भा–भाट्टभिन्ने । ऐन्द्रवायवस्य कामसंयोगेऽपि न प्रतिकर्षः इति भाट्ट । कामसंयोगेऽपि ऐन्द्रवायवस्य पाठप्राप्तस्वस्थान एवानुष्ठानं इति भा ।

सू० ६५ ( १ ) तः क इति य ।

६६ तद्देशानां वाऽग्रसंयोगात्, तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात्। ६० य.

अधि० १९, २० मण्डनः.

६७ परेषु चाग्रशब्दः पूर्ववत् स्यात् तदादिषु। ६१ य, १९ बिन्दुः.

६८ प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात्। ६२ य.

६९ प्रतिकर्षं च दर्शयति। ६३ य.

अधि० २०, २१ मण्डनः.

७० पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात्। ६४ य, २० बिन्दुः.

७१ तुल्यधर्मत्वाच्च। ६५ य.

७२ तथा च लिङ्गदर्शनम्। ६६ य.

अधि० २१. २२ मण्डनः.

७३ सादनं चापि शेषत्वात्। ६७ य, २१ बिन्दुः.

७४ लिङ्गदर्शनाच्च। ६८ य.

अधि० २२, २३ मण्डनः.

७५ प्रदानं चापि सादनवत्। ६९ य, २२ बिन्दुः.

७६ न वा प्रधानत्वाच्छेषत्वात् सादनं तथा। ७० य.

अधि० २३, २४ मण्डनः.

७७ त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात्। ७१ य, २३ बिन्दुः.

---

सू० ६६ (१) युक्ते क्त इति वृ-ल-य।

अधि० १९ आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षः इति म-सा-वि-शा-ल। आश्विनाग्रो नाम नैव कश्चिद् ग्रहः। अग्रशब्दो व्यर्थोऽत्र। शुक्रमन्थ्यादेस्तु प्रतिकर्षः इति भाट्ट। पूर्वशीर्षकसापेक्षत्वात् तु-शब्दोऽत्र व्यर्थः। आश्विनादिग्रहाणां प्रतिकर्षः इति बिन्दुः। आश्विनादीनां ग्रहाणां प्रतिकर्षः इति वृ। काम्याग्रताविधौ शुक्रादिग्रहस्य सर्वादितः प्रतिकर्षः इति भा।

सू० ६७ (१) वाग्र इति वृ-ल। वृ-मूले तु वा शब्दो नास्ति।

सू० ६८ (१) त्याग्र इति लटि-चौ पाठो न युक्तः।

अधि० २० आश्विनादीनां ग्रहाणां ऐन्द्रवायवस्य पुरस्तात् प्रतिकर्षः इति म-सा-वि-शा-वृ-ल। तत्रापि ऐन्द्रवायवादौ प्रतिकर्षः इति भाट्ट। 'तत्रापि' इति प्रयोगः पूर्वशीर्षकसापेक्षत्वात् शीर्षके न युक्तः। आश्विनादिग्रहाणां ऐन्द्रवायवस्य पुरस्तात् प्रतिकर्षः इति बिन्दुः। काम्याग्रताविधौ शुक्रादिग्रहस्य ऐन्द्रवायवादिग्रहापेक्षया पूर्वं प्रतिकर्षः इति भा। भा-शीर्षकापेक्षया इतरशीर्षकेषु न्यूनतादोषः निगदपाठेनैव ज्ञातुं शक्यः।

सू० ७० (१) यवादग्र इति मटि-वृ-ल। ऐन्द्रवायवपदस्य वृत्तौ पञ्चमी भाष्ये तु षष्ठी इति उभयमपि प्रामाणिकम्। भाष्यं तु प्रमाणतरम्।

अधि० २१ सादनस्यापि प्रतिकर्षः इति म-सा-वि-शा-वृ-ल। तथा सादनस्यापि प्रतिकर्षः इति भाट्ट। अत्र तथा-शब्दो व्यर्थः। सादनस्य प्रतिकर्षः इति बिन्दुः। ग्रहणप्रतिकर्षेण सादनस्यापि प्रतिकर्षः इति भा।

सू० ७३ (१) चाविशेषात् इति शा-सोम। शेषत्वात् अङ्गत्वात् इति वृत्तौ व्याख्यातं, अविशेषात् वचनतात्पर्याविशेषात् इति च सोमनाथेन व्याख्यातं इत्युभयथापाठः। भाष्ये तु शेषत्वात् इत्येव।

अधि० २२ प्रदानस्याप्रतिकर्षः इति भा-भिन्ने। ग्रहणप्रतिकर्षेऽपि प्रदानानपकर्षः इति भा।

अधि० २३ त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थता इति भा-भाट्टभिन्ने। त्र्यनीकायामैन्द्रवायवाग्रताया विधिः इति भाट्ट। त्र्यनीकायां प्रथमद्वितीययोरह्नोः ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणस्य अनैमित्तिकार्थता इति भा। अत्र भामूले समानविधित्वं सिद्धान्तितम्। तथा च तदेव शीर्षके वक्तव्यम्। न तु अनैमित्तिकत्वार्थता वक्तव्या। भा-भिन्नशीर्षकाणि तु शिथिलान्येव।

७८ अपिवाऽहर्गणेष्वग्निवत् समानविधानं स्यात् । ७२ य.

अधि० २४, २५ मण्डनः.

७९ द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत् समानविधानं स्यात् । ७३ य, २४ बिन्दुः.

८० व्यूढो वा लिङ्गदर्शनात् समूढविकारः स्यात् । ७४ य.

८१ कामसंयोगात् ।

८२ तस्योभयथा प्रवृत्तिरैककर्म्यात् । ७५ य.

अधि० २५, २६ मण्डनः.

८३ ऐकादशिनवत् त्र्यनीकापरिवृत्तिः स्यात् । ७६ य, २५ बिन्दुः.

८४ स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसंख्यत्वात् । ७७ य.

८५ पृष्ठयाऽऽवृत्तौ चाऽऽग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् । ७८ य.

८६ वचनात् परिवृत्तिरैकादशिनेषु । ७९ य.

---

सू० ७८ ( १ ) मानं वि इति वृ-ल-य ।

अधि० २४ व्यूढद्वादशाहस्य समूढविकारत्वं इति भा-भिन्ने । व्यूढस्य समूढविकारत्वं इति भा ।

सू० ८० ( १ ) रः स्यात् इति वृ-ल-य । अन्यत्र तु 'स्यात्' इति पदं नास्ति । परंतु भा-मूले "व्यूढः समूढविकारः स्यात्" इति पठितम् ।

सू० ८१ नास्तीदं सूत्रं य ।

अधि० २५ संवत्सरसत्रे अनीकानां विवृद्धिः इति म-सा-बिन्दु-वृ-ल । संवत्सरसत्रे अनीकानां त्रिवृद्धिः इति वि-भाट्ट-शा । विवृद्धि-शब्दस्य स्थाने हस्तदोषात् त्रिवृद्धि-शब्दः पतित इति भाति । गवामयने त्र्यनीकायाः स्वस्थानविवृद्धयाऽभ्यासः इति भा ।

सू० ८३ ( १ ) एकादशिनवत् इति म-सा-वि-शा-चौ-रत्न । एकादशनवत् इति भाट्ट । एकादशिनीवत् इति सोम-वृ-ल-य । ऐकादशिनशब्दः ८।१।१४. १०।५।८३ * ८६. १०।६।६ इति सूत्रचतुष्टये समायातः । तत्र प्रथमस्थे सर्वग्रन्थेषु ऐकादशिन इत्येव प्रातिपदिकं पठितम् । द्वितीयस्थलीयः अस्माभिरिदानीमेव उपरि निर्दिष्टः पाठभेदः । तृतीयस्थले भाट्टे, चतुर्थस्थले च ल-पुस्तके एकादाशिन इति प्रातिपदिकं पठितम् । तत्र भाट्टे एकादशन १०।५।८३, एकादशिन १०।५।८६, ऐकादशिन १०।६।६ इति त्रेधा पाठः । म-सा-वि-शा-चौ इत्येतेषु एकादशिन, ऐकादशिन इति द्वेधा पाठः । सोमे तु एकादशिनी, ऐकादशिन इति द्वेधा । ल-पुस्तके एकादशिन, एकादशिनी ऐकादशिन इति त्रेधा । य पुस्तकेऽपि एकादशिनी ऐकादाशिन इति द्वैधम् । एवमेकैकस्मिन्नपि ग्रन्थे द्वेधा त्रेधा वा पाठभेदेन पदस्वरूपे स्थिते कथं निर्णयः । तत्रेदमवधेयम् । एकादशिनी इति पदं साध्वेव । ऐकादशिन इत्यपि प्रातिपदिकं 'यदेत ऐकादशिनाः पशव आलभ्यन्ते' ( तैब्रा. ३।९।२३ ) इति वैदिकादेव प्रयोगात् साधुत्वे निःशङ्कम् । एकादशन, एकादशिन इति पाठौ तु चिन्त्यौ । 'सप्तनोऽञ् छन्दसि' इति सूत्रे 'शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणं इत्यर्थे वाच्यः' इति वार्तिकमुपन्यस्य पञ्चदशिनः अर्धमासाः, त्रिंशिनो मासाः इति चोदाहरन्ति दीक्षिताः वैदिक्यां प्रक्रियायां पञ्चमेऽध्याये । एवमत्र एकादशिन् इति शब्दे निष्पन्ने स्वार्थेऽणि वृद्धौ ऐकादशिन इत्यकारान्तं प्रातिपदिकं सिध्यति । परंतु वृद्धेरत्रावश्यकता । तथा च एकादशन इति वा एकादाशिन इति वा पाठः सर्वथा अशुद्ध एव । ( २ ) का प इति म-सा-वि-शा-चौ । का प्रवृ इति वृ-ल । का विप इति य ।

सू० ८४ ( १ ) य-पुस्तके ८।३।७ इत्यत्र अप्रत्यक्षसंख्यात्वात् इति पाठः, अत्र सूत्रे तु अप्रत्यक्षसंख्यत्वात् इति । उभयथा शुद्धत्वेपि एकरूपः पाठ एव सर्वत्र समीचीनः ।

सू० ८६ ( १ ) वृत्तिरेका इति भाट्ट ।

८७ लिङ्गदर्शनाच्च । ८० य.

अधि० २६, २७ मण्डनः.

८८ छन्दोव्यतिक्रमाद् व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात् । ८१ य, २६ बिन्दुः.

॥ सप्ताधिका विंशतिर्नीतयोऽत्र ॥

॥ आनुपूर्व्यं एकस्यां साम्नां अयज्ञ उक्थ्य अपिवा परेषु त्र्यनीका छन्द एकाशीतिः ॥

॥ इति दशमाध्यायस्य पञ्चमः पादः ॥

* * * *

॥ अथ दशमाध्यायस्य षष्ठः पादः ॥

अधि० १.

१ एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ।

२ तृचे वा लिङ्गदर्शनात् ।

अधि० २.

३ स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् । २ बिन्दुः.

अधि० ३.

४ पृष्ठ्यस्य युगपद्विधेरेकाहवत् द्विसामत्वम् । ३ बिन्दुः.

५ विभक्ते वोऽसमस्तविधानात् तद्विभागेऽविप्रतिषिद्धम् ।

अधि० ४.

६ समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् । ४ बिन्दुः.

७ विहारप्रतिषेधाच्च ।

८ श्रुतितो वा लोकवद् विभागः स्यात् ।

९ विहारप्रकृतित्वाच्च ।

१० विशये च तदासत्तेः ।

---

सू० ८७ ( १ ) इदं सूत्रं य-क्ष इति द्वयोरपि पुस्तकयोर्नास्ति । परंतु तदावश्यकमेव । अन्यथा तदुक्ता एकाशीतिसंख्या न संपद्येत ।

अधि० २६ व्यूढे मन्त्राणां छन्दोव्यतिक्रमः इति भा–भिन्ने । व्यूढात्मकद्वादशाहे मन्त्राणामेव च्छन्दोव्यतिक्रमः इति भा ।

सू० ८८ ( १ ) लम इति बिन्दु–वृ–ल–य । ( २ ) यथापत्तिव इति य ।

अधि० १ रथंतरादीनां साम्नां तृचे गानं इति भा–भिन्ने । यज्ञे रथंतरादिसाम्नां तृचे गानं इति भा ।

सू० १ ( १ ) एकर्क्स्था इति बिन्दु–वृ–ल–पाठः अशुद्धः । /

अधि० २ स्वर्दृक्शब्देन वीक्षणस्य कालार्थता इति भा–भाट्टभिन्ने । शब्देनेति तृतीयायाः क्वान्वयः ? स्वर्दृक्शब्दोच्चारणस्य मीलनकालावधितायोतकत्वं इति भा । वीक्षणे स्वर्दृक्पदपाठकालविधानं इति भा ।

अधि० ३ गवामयनिके पृष्ठ्यषडहे बृहद्रथंतरयोर्विभागः इति म–सा–वि–बिन्दु–ल । गवामयनिके इत्यत्र आदिवृद्ध्यभावो न युक्तः । गवामयने पृष्ठ्यषडहे बृहद्रथंतरयोर्विभागः इति भाट्ट–शा–वृ । गावामयनिके पृष्ठ्यषडहे बृहद्रथंतरयोः प्रत्यहमेकैकस्यैवानुष्ठानं इति भा ।

सू० ५ ( १ ) वा स इति भित्त्वा अवग्रहरहितं मुद्रणं भा–भिन्ने सर्वत्र । ( २ ) भागे वि इति भित्त्वा अवग्रहरहितं मुद्रणं भा–वृ– लभिन्ने सर्वत्र । भागेऽप्र इति वृ–लसूत्रे । भागेऽविप्र इति वृमूले । भाष्ये तु ' न समस्ते सामनी विधीयेते' ' एतच्चोक्तमेव विभागेऽपि साम्नोरविप्रतिषिद्धो बृहद्रथंतरसामशब्दः इति ' इत्युक्तम् ।

अधि० ४ प्रायणीयोदयनीययोरैकादशिनानां विभागः इति भा–भाट्टभिन्ने । प्रायणीयोदयनीययोः एकादशिनविभागः इति भाट्ट । प्रायणीयोदयनीययोरैकादशिनानां विभज्यानुष्ठानं इति भा ।

सू० ६ ( १ ) सस्त्वेका इति ल ।

सू० १० एतत्सूत्रस्थाने ' यावच्छक्यं तावद् विहारस्यानुग्रहीतव्यं, विशये च तदासत्तिः ' इति सूत्रं वृ–ल । अत्र भाष्ये पूर्वसूत्रान्ते ' यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यं ' इति वाक्यं मुद्रितम् । ' विशये च तदासत्तेः ' इति च प्रकृतं सूत्रं मुद्रितम् । तत्र पूर्ववाक्यं भाष्यमिव भाति न सूत्रमिव । तेन वृ–लपाठो ग्रहीतुं न शक्यते ।

११ अयस्तथेति चेत्।
१२ न समत्वात् प्रयाजवत्। ११ य.
अधि० ५.
१३ सर्वपृष्ठे पृष्ठशब्दात् तेषां स्यादेकदेशत्वं, पृष्ठस्य कृतदेशत्वात्। १२ य, ५ बिन्दुः.
१४ विधेस्तु विप्रकर्षः स्यात्। १३ य.
अधि० ६.
१५ वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात्। १४ य, ६ बिन्दुः.
१६ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात्। १५ य.
१७ त्रिवृद्वदिति चेत्। १६ य.
१८ न प्रकृतावकृत्स्नसंयोगात्। १६ य.
१९ विधित्वान्नेति चेत्। १७ य.
२० स्याद्विशये तन्न्यायत्वात् कर्माविभागात्। १७ य.
२१ प्रकृतेश्चाविकारात्। १८ य.
अधि० ७.
२२ त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात्। १९ य, ७ बिन्दुः.
२३ स्तोमस्य वा तल्लिङ्गत्वात्। २० य.
अधि० ८.
२४ उभयसाम्नि विश्वजिद्वद् विभागः स्यात्। २१ य, ८ बिन्दुः.
२५ पृष्ठार्थे वाऽतदर्थत्वात्। २२ य.
२६ लिङ्गदर्शनाच्च। २३ य.
अधि० ९.

---

सू० ११ (१) चेदन्तमुत्तरेणैकं य।

अधि० ५ विश्वजित् सर्वपृष्ठः इत्यत्र एकस्यैव पृष्ठदेशे निवेशः इति म-सा-बिन्दु-वृ। सर्वपृष्ठे देशविशेषव्यवस्था इति वि-भाट्ट-शा-ल। निरर्थकमेवेदं शीर्षकम्। विश्वजिति षाडहिकरथंतरादिसाम्नां मध्ये वैरूपस्यैव होतुः पृष्ठस्तोत्रे निवेशः इति भा।

अधि० ६ वैरूपसामवैराजसाम्नोः पृष्ठकार्ये निवेशः इति म-सा। वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशः इति वि-भाट्ट-शा-बिन्दु-वृ-ल। उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां वैरुपादिसाम्नां होतुः पृष्ठे एव निवेशः इति भा।

सू० १५ (१) वृदे इति भाट्ट।

सू० १७ (१) चेदन्तमुत्तरेणैकं य।

सू० १८ (१) न प्राक्रु इति ल-पाठो न ग्राह्यः।

सू० १९ (१) चेत्-पदं नास्ति वृ-सूत्रे, वृ-मूले त्वस्ति। चेदन्तमुत्तरेणैकं य।

सू० २० (१) न स्या इति वृ-ल। (२) कर्मवि इति चौ-पाठो न ग्राह्यः। कर्मविधानात् इति य।

अधि० ७ त्रिवृदाग्निष्टोम इत्यत्र स्तोमगतसंख्याविकारः इति म-सा-बिन्दु-वृ। त्रिवृति स्तोमगतसंख्याविकारः इति वि-शा-भाट्ट। अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य स्तोत्रीयानवकरूपस्य स्तोत्रान्तरगतस्तोममात्रबाधकत्वं इति भा।

सू० २२ (१) संख्यात्वात् स इति शा-बिन्दु-य-रत्न।

अधि० ८ उभयसाम्नि बृहद्रथंतरयोः समुच्चयः इति भा-भिन्ने। उभयसामके संसवादिक्रतौ बृहद्रथंतरयोः पृष्ठस्तोत्रे एव समुच्चित्य निवेशः इति भा।

सू० २४ (१) जिद्विभा इति भाट्ट-बिन्दुः। भाष्ये तु विश्वजिद्वत् इत्येव। भाट्टमूलं तु भाष्यवदेव पाठं ध्वनयति। बिन्दुमूलं तु विश्वजितमुपमानतया निर्दिशतीव। तेन भाट्ट-बिन्दुसूत्रपाठः स्वमूलविरुद्धः। (२) भागात् स्यात् इति य।

अधि० ९ मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानं इति भा-भिन्ने। वैकल्पिकमध्वशनघृताशनयोः गवामयने षडहान्तेऽनुष्ठानं इति भा।

२७ पृष्ठ्ये रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्, तदानन्तर्यात् प्रकृतिवत्। २४ य, ९ बिन्दुः.

२८ अन्ते वा कृतकालत्वात्। २५ य.

अधि० १०.

२९ अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात्। १० बिन्दुः.

३० अन्ते वा कृतकालत्वात्।

अधि० ११.

३१ आवृत्तिस्तु व्यवाये कालभेदात् स्यात्। २६ य, ११ बिन्दुः.

अधि० १२.

३२ मधु न दीक्षिता ब्रह्मचारित्वात्। २७ य, १२ बिन्दुः.

३३ प्राश्येत वा यज्ञार्थत्वात्। २८ य.

अधि० १३.

३४ मानसमहरन्तरं स्याद् भेदव्यपदेशात्। २९ य, १३ बिन्दुः.

३५ तेन च संस्तवात्। ३० य.

३६ अहरन्ताच्च परेण चोदना। ३१ य.

३७ पक्षे संख्या सहस्रवत्। ३२ य.

३८ अहरङ्गं वांऽशुवच्चोदनाऽभावात्। ३३ य.

३९ दशमविसर्गवचनाच्च। ३४ य.

४० दशमेऽहनीति च तद्गुणशास्त्रात्। ३५ य.

---

सू० २७ ( १ ) पृष्ठये इति बिन्दुः। पृष्ठे इत्येव तु अन्यत्र सर्वत्र। परंतु पृष्ठ्ये इत्येव युक्तम्। नहि पृष्ठे माध्यंदिनगते पृष्ठे स्तोत्रे संस्थिते मधु प्राश्यते किंतु पृष्ठ्ये षडहे संस्थिते सति प्राश्यते। त्रयस्त्रिंशेऽहनि संस्थिते मध्वशनं इति पूर्वपक्षः। परंतु पृष्ठ्ये इति समानमेव। ( २ ) वृत्ते त्र इति य।

अधि० १० षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानं इति भा-भाट्टभिन्ने। षडहावृत्तावपि तयोः सकृदनुष्ठानं इति भाट्ट। तयोः इत्यस्य मध्वशनघृताशनयोरित्यर्थः। परंतु पूर्वाधिकरणशीर्षकस्य पूर्वाधिकरणेन व्यवहितत्वात् तच्छब्देन व्यवहितनिर्देशः कर्तुं न शक्यते। शीर्षकाणामेवाव्यवधानेन यदि निवेशः स्यात् तदा पूर्वनिर्देशः सर्वनाम्ना कर्तुं योग्यः। षडहावृत्तौ सर्वषडहान्ते मध्वशनादेः सकृदेवानुष्ठानं इति भा।

सू० २९ ( १ ) एतदादि सूत्रद्वयं नास्ति य। ( २ ) क्रमेण इति भा। कर्मणः इति भा-भिन्ने सर्वत्र। भामूले तु " कुतः। कर्मणः पुनःपुनः प्रयोगात्। तद्धि कर्म पुनरावर्तते " इत्युक्तत्वात् कर्मणः इति सूत्रे भाष्यसंमतं पदम्। क्रमेणेति मुद्रणं तु अनवधानेन स्यात्।

अधि० ११ गवामयने मध्वशनघृताशनयोः प्रतिमाससमावृत्तिः इति भा-भाट्टभिन्ने। गवामयने तयोः प्रतिमाससमावृत्तिः इति भाट्ट। गवामयने अहरन्तरव्यवधानेन पृष्ठ्यषडहावृत्त्या मध्वशनादेरप्यावृत्तिः इति भा।

सू० ३१ ( १ ) स्यात्-पदं नास्ति वृ-ल।

अधि० १२ द्वादशाह सत्रिभिरपि मध्वशनं इति भा-भाट्टभिन्ने। द्वादशाहे सात्रिणामपि मध्वशनं इति भाट्ट। सत्रात्मकद्वादशाहे सत्रिभिर्मध्वशनं कर्तव्यमेव इति भा।

सू० ३३ ( १ ) प्राश्यते वा इति शा।

अधि० १३ मानसस्य द्वादशाहाङ्गता इति म-सा-वि-भाट्ट-शा-ल। मानसस्य दशमाहाङ्गत्वं इति बिन्दु-वृ। मानससंज्ञकमहस्य दशमाहाङ्गत्वं इति भा।

सू० ३४ (१) स्याद् द्वादशाहव्य इति बिन्दुः। स्याद् द्वादशाहे व्य इति वृ-ल।

सू० ३५ ( १ ) तेन सं इति चौ।

सू० ४० ( १ ) हनिति इति वृ-ल-यभिन्ने। हनीति इति वृ-ल-य। भाष्ये तु ' एवं गुणशास्त्रं युक्तं भविष्यति दशमेऽहनि मानसाय प्रसर्पन्तीति।

४१ संख्यासामञ्जस्यात् ।

४२ पश्वतिरेके चैकस्य भावात् । ३६ य.

४३ स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं व्रतवत् । ३७ य.

४४ वचनादतदन्तत्वम् । ३८ य.

अधि० १४.

४५ सत्रमेकः प्रकृतिवत् । ३९ य, १४ बिन्दुः.

४६ वचनात्तु बहूनां स्यात् । ४० य.

४७ अपदेशः स्यादिति चेत् । ४१ य.

४८ नैकव्यपदेशात् । ४१ य.

४९ संनिवापं च दर्शयति । ४२ य.

५० बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् । ४३ य.

अधि० १५.

५१ अन्ये स्युर्ऋत्विजः प्रकृतिवत् । ४४ य, १५ बिन्दुः.

५२ अपिवा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात् तेषां स्याद्यजमानत्वम् । ४५ य.

५३ कर्तृसंस्कारो वचनादाधातृवदिति चेत् । ४६ य.

५४ स्याद् विशये तन्न्यायत्वात् प्रकृतिवत् । ४६ य.

५५ स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् । ४७ य.

५६ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण । ४७ य.

५७ बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते । ४८ य.

५८ दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् । ५७ म–सा–वि–भाट्ट–शा–चौ, ४९ य.

५९ अदक्षिणत्वाच्च । ५८ म–सा–वि–भाट्ट–शा–चौ, ५० य.

अधि० १६.

---

दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्तीति... ' इति वैदिकवाक्योदाहरणात् वैदिकवाक्ये च ' अहन् ' इति पदस्याभावात् दशमेऽहनीति इत्येव पाठः साधुः ।

सू० ४१ नास्तीदं सूत्रं य ।

सू० ४३ ( १ ) ङ्गेन वि इति अनेकत्र । ङ्गेन न वि इति मटि । ङ्गेनाप्र इति वृ–मूलम् । भाष्ये तु " नैतद्विप्रतिषिद्धम् । अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा " इत्युक्तम् ।

अधि० १४ सत्रस्य बहुकर्तृकत्वं इति भाट्ट–भिन्ने । सत्रे बहूनां कर्तृत्वं इति भाट्ट ।

सू० ४६ ( १ ) बहुवच इति वृ–ल ।

सू० ४७ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ४९ ( १ ) संनिपातं च इति भाटि–य ।

सू० ५० ( १ ) वचने व्यर्थ इति वृ–ल सूत्रे, वृ–मूले तु वचनं इत्येव ।

अधि० १५ सत्रे यजमानानामेव ऋत्विक्त्वं इति भाट्ट–भिन्ने । सत्रे यजमाना एव ऋत्विजः इति भाट्ट ।

सू० ५२ ( १ ) नयो इति भाटि ।

सू० ५३ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ५५ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ५७ ( १ ) इदं सूत्रं मुद्रितेषु नास्ति इति भाटि । नास्ति सूत्रं म–सा–वि–भाट्ट–शा–चौ । परंतु म–सापुस्तकयोः एतत्सूत्रं भाष्यसमानाक्षरैर्भाष्यमध्ये एव मुद्रितम् । महद्भिरक्षरैः सूत्रत्वेन तु न मुद्रितम् । तदयुक्तम् । वि–भाट्ट–शा–चौसंपादकास्तु भ्रान्त्यैव सूत्रं निष्कासयांचक्रिरे । ( २ ) च–शब्दो नास्ति वृ–ल ।

अधि० १६ सत्राहीनयोर्विवेकः इति भा–भिन्ने । सत्राहीनयोर्लक्षणं इति भा । अत्र मण्डनाचार्येण सत्रलक्षणार्थं अहीनलक्षणार्थं च पृथक् द्वे आधिकरणे स्वीकृते । भाष्ये तु सूत्रद्वयात्मकमेवाधिकरणम् ।

६० द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात्। ५९ म–सा–वि–भाट्ट–शा–चौ, ५१ य, १६ बिन्दुः.

( अधि० १७ मण्डनः )

६१ यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात्। ६० म–सा–वि–भाट्ट–शा–चौ, ५२ य.

अधि० १७, १८ मण्डनः.

६२ अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदः स्यात्। ६१ म–सा–वि–भाट्ट–शा–चौ, ५३ य, १७ बिन्दुः.

६३ सर्वस्य वैककर्म्यात्। ६२ म–सा–वि–भाट्ट–शा–चौ, ५४ य.

६४ पृषदाज्यवद् वाऽह्नां गुणशास्त्रं स्यात्। ६३ म–सा–वि–भाट्ट–शा–चौ, ५५ य.

६५ ज्योतिष्टोमे्यस्तु दक्षिणाः सर्वासामेककर्मत्वात् प्रकृतिवत्, तस्मात्तासां विकारः स्यात्।६४ म–सा–वि–भाट्ट–शा–चौ, ५६ य.

६६ द्वादशाहे तु वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात् परेषु तासां संख्याविकारः स्यात्। ६५ म–सा–वि–भाट्ट–शा–चौ, ५७ य.

६७ परिक्रयाविभागाद् वा समस्तस्य विकारः स्यात्। ६६ म–सा–वि–भाट्ट–शा–चौ, ५८ य.

६८ भेदस्तु गुणसंयोगात्। ६७ म–सा–वि–भाट्ट–शा–चौ, ५९ य.

अधि० १८, १९ मण्डनः.

६९ प्रत्यहं सर्वसंस्कारः प्रकृतिवत्, सर्वासां सर्वशेषत्वात्। ६८ म–सा–वि–भाट्ट–शा–चौ, ६० य, १८ बिन्दुः.

७० एकार्थत्वान्नेति चेत्। ६९ म–सा–वि–भाट्ट–शा–चौ, ६१ य.

७१ स्यादुत्पत्तौ कालभेदात्। ७० म–सा–वि–भाट्ट–शा–चौ, ६१ य.

---

सू० ६० (१) सवत्व इति य। (२) नोपेयि इति वृ–ल। (३) दने यज इति बिन्दु–पाठो न युक्तः। तृतीयाद्वयं विना च–शब्दस्यानुपपन्नत्वात्। (४) संबन्धात् इति भाटि।

अधि० १७ पौण्डरीके सकृदेव दक्षिणादानं इति भा–भिन्ने। पौण्डरीके अयुताश्वसहस्रयोः सकृद्दानं इति भा।

सू० ६२ (१) कर्म भेदः इति म–पाठो न शुद्धः। कर्मभेदात् स्यात् इति भाटि–मटि–बिन्दु–वृ–य। भाष्यात्तु न किमपि सिध्यति।

सू० ६५ (१) तस्मान्नासां इति वृ–ल–य भिन्ने। तस्मात्तासां इति भाटि–वृ–ल–य। भाष्ये तु 'तथाभूतानां तासा च समुदायानस्यर्थानां...या इह दक्षिणा दीयन्ते तासामयं विचार इति गमयति' इत्युक्तत्वात् तासां इत्येव भाष्यसंमतः पाठः। न आसां विकारः इति च विरुद्धमेव स्यात्।

सू० ६६ (१) शाहव इति भाटि। शाहे व इति म–सा–वि–भाट्ट–शा–चौ। (२) तासां वि इति वृ–ल।

सू० ६७ (१) परिक्रिया इति भाट्ट–पाठो न युक्तः।

अधि० १८ पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनं इति भा–भिन्ने। पौण्डरीके प्रत्यहं विभज्य दक्षिणानयनं इति भा। पूर्वं सकृद्दानमुक्तं, अत्र तु केवलं दक्षिणादेशात् उत्तरदेशे नयनमात्रमुक्तं इति न पूर्वोत्तरविरोधः।

'प्रत्यहं' इत्येवमादीनि चत्वारि सूत्राणि भाट्टे प्राचीने एवाधिकरणेऽन्तर्भावितानि।

सू० ७० (१) चेदन्तमुत्तरेणैकं य।

सू० ७१ (१) स्यात् पदं नास्ति वृ–ल।

७२ विभज्य तु संस्कारो वचनाद् द्वादशाहवत् । ७१ म–सा–वि–भाट्ट–शा–चौ, ६२ य.

अधि० १९, २० मण्डनः, १८ भाट्ट.

७३ लिङ्गेन द्रव्यनिर्देशे सर्वप्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् । ७२ म–सा–वि–भाट्ट–शा–चौ, ६३ य, १९ बिन्दुः.

७४ यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् । ७३ म–सा–वि–भाट्ट–शा–चौ, ६४ य.

७५ आग्नेये कृत्स्नविधिः । ७४ म–सा–वि–भाट्ट–शा–चौ, ६५ य.

७६ ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् । ७५ म–सा–वि–भाट्ट–शा–चौ, ६६ य.

अधि० २०, २१ मण्डनः, १९ भाट्ट.

७७ वासंसि मानोपाहवरेणे प्रकृतौ सोमस्य वचनात् । ७६ म–सा–वि–भाट्ट–शा–चौ, ६७ य, २० बिन्दुः.

अधि० २१, २२, मण्डनः, १९ भाट्ट.

७८ तत्राहर्गणेऽर्थाद् वासंःप्रक्लृप्तिः स्यात् । ७७ म–सा–वि–भाट्ट–शा–चौ, ६८ य, २१ बिन्दुः.

---

सू० ७२ ( १ ) स्कारो व इति वृ । स्कारव इति वृ-भिन्ने । भाष्ये तु ' विभज्य संस्क्रियेरन् । कुतः । वचनात् । द्वादशाहे प्रत्यहं नयनादिसंस्कारो वचनात् क्रियते ' इति ग्रन्थः । तेन संस्कारो वचनात् इत्येव पाठः सिध्यति ।

अधि० १९ मनोर्ऋच इत्यनेन यावदर्थमृचामुपादानं इति म–सा–बिन्दु–वृ । मानवीषु पञ्चदशानामेव सामिधेनीत्वं इति वि–भाट्ट–शा । मानवीषु पञ्चदशानामेव सामिधेनीविधिः इति ल । सामिधेनीत्वेन विधिः इति पठनीयम् । विकृतिविशेषे सामिधेनीकार्ये मनुलिङ्गानामृचामेकादशानां दाशतयीभ्यः समानयनं इति भा । पूर्वशीर्षके पञ्चदशानां इति यदुक्तं तदशुद्धमेव। एकादशानामेव हि सतीनां त्रिः प्रथमया त्रिरुत्तमया पञ्चदश संपद्यन्ते । आदित एव पञ्चदशानामृचामानयने तु एकोनविंशतिः स्युः सामिधेन्यः ।

सू० ७३ ( १ ) सर्वत्र प्र इत्येव प्रायः सर्वत्र पाठः । सर्वप्र इति भाटि–क्ष–रत्न । सर्वसंस्कारः प्रकृतिप्र इति तु य । अस्माभिस्तु अर्थसामीचीन्यात् भाटि–क्ष–रत्नपाठ एव स्वीकृतः । ( २ ) आग्नेयवत् इति पदं नास्ति वृ–ल सूत्रे, वृ मूले तु अस्त्येव ।

सू० ७४ ( १ ) वार्थशेषत्वादतोऽर्थेन परि इति वृ–ल ।

अधि० २० वाससि मानोपावहरणयोरनुष्ठानं इति भा–भिन्ने । ज्योतिष्टोमे वाससि मानोपावहरणयोरनुष्ठानं इति भा । वाससि सोमस्य मानोपावहरणयोरनुष्ठानं इति वक्तव्यम् । सोमशब्दाभावे तु वासस एव मानं उपावहरणं चेति स्यात् कस्य चिन्मतिः ।

सू० ७७ ( १ ) वाससा मा इति भाटि । ( २ ) हरणौ प्र इति वृ–ल सूत्रे, वृ–मूले तु हरणे प्र इत्येव ।

अधि० २१ अहर्गणेऽर्थाद् वासोऽन्तरोत्पादनं इति म–सा–वृ । अहर्गणे वासोऽन्तरोत्पादनं इति वि–शा–ल । अहर्गणे अहर्भेदे वासोऽन्तरं इति बिन्दुः । एतानि त्रीण्यपि शीर्षकाणि अपूर्णार्थप्रकाशकत्वादयुक्तानि। अहर्गणे उपावहरणार्थं वासोऽन्तरोत्पादनं इति भा । अत्रापि सोमोपावहरणार्थं इति वक्तव्यमेव ।

सू० ७८(१) वासः प्रकृतिः स्यात् इति भा–बिन्दु–वृ–यभिन्ने सर्वत्र पाठो विद्यमानोऽपि न युक्तः । ' वाससि ' इति सूत्रमारभ्य चत्वार्यपि सूत्राणि भाट्टे एकाधिकरणत्वेनोपन्यस्तानि ।

अधि० २२, २३ मण्डनः, १९ भाट्ट.

७९ मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य । ७८ म-सा-वि-भाट्ट-शा-चौ, ६९ य, २२ बिन्दुः.

८० हरणे वा श्रुत्यसंयोगादर्थाद्धि प्रकृतौ तेन । ७९ म-सा-वि-भाट्ट-शा-चौ, ७० य.

त्रयोविंशतिनीतयः ॥

एकर्च त्रयः उभय अहर् अपदेशो द्वादशाहस्य एकार्थत्वात् सप्ततिः ॥

॥ इति दशमाध्यायस्य षष्ठः पादः ॥

*   *   *   *

॥ अथ दशमाध्यायस्य सप्तमः पादः ॥

अधि० १.

१ पशोरेकहविष्ट्वं समस्तचोदितत्वात् ।

२ प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ।

अधि० २.

३ हविर्भेदात् कर्मणोऽभ्यासस्तस्मात् तेभ्योऽवदानं स्यात् । २ बिन्दुः.

४ आज्यभागवद् वा निर्देशात् परिसंख्या स्यात् ।

५ तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात् ।

६ अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात् प्रदानत्वात् तेषां निरवदानप्रतिषेधः स्यात् ।

७ अपिवा परिसंख्या स्यादनवदानीयशब्दत्वात् ।

८ अब्राह्मणे च दर्शनात् ।

९ शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् ।

अधि० ३.

१० इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् । ३ बिन्दुः.

११ त्र्यङ्गैर्वा शरवद् विकारः स्यात् ।

अधि० ४.

---

अधि० २२ उपावहरणार्थमेव वासोऽन्तरोत्पादनं इति भा-भिन्ने । अहर्गणे तत्तदहःसंबन्धिसोमोपावहरणकाले एव वासोऽन्तरोत्पादनं इति भा ।

सू० ८० (१) दर्थाद् विकृ इति भा-य-भिन्ने ।

अधि० १ ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदः इति म-सा-वि-शा-बिन्दु-ल । म-सादिसंपादकानां षण्णामपि कार्यान्तरव्यग्रचित्तत्वात् तद्धस्तस्थिता जडा लेखनी घुणाक्षरन्यायेन कानि चिदक्षराण्यलिखदिति भाति । ज्योतिष्टोमे प्रत्यहं हविर्भेदः इति वृ-शीर्षकमपि म-सादिवद् व्याख्यातम् । पशुः प्रत्यङ्गं हविः इति भाट्ट । अग्नीषोमीये पशौ हृदयाद्यङ्गानामेव हविष्ट्वं इति भा ।

सू० १ (१) पशावेक इति वृ-ल ।

सू० २ (१) थक् कल्प इति वृ-ल-य ।

अधि० २ पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानं इति भा-बिन्दुभिन्ने । पशोर्हृदयादिभिरेव यागः इति बिन्दुः । हृदयादीनामेवावदानसंबन्धितया श्रूयमाणाना हविष्ट्वेन तदितरावयवानां हविष्ट्वपरिसंख्या इति भा ।

सू० ५ (१) वा त्र्यव इति य-पाठो हस्तदोषात् । (२) क्षन्नभि इति य । क्षन्नभिनिर्देशात् इति भाटि ।

सू० ६ (१) नन्यायत्वात् इति भाटि-मटि-वृ-ल-य ।

सू० ७ (१) दव इति वि-भाट्ट-शा चौ । दवदीय इति ल । उभयमपि न ग्राह्यम् ।

सू० ९ (१) षत्वं सर्वेषां श्रपणं स्यात् इति भाटि । षत्वं सर्वेषां न श्रपणं स्यात् इति वृ-ल ।

अधि० ३ ज्योतिष्टोमे अनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमः इति भा-भिन्ने । असंभवदुक्तिकं शीर्षकं यथाश्रुतम् । अग्नीषोमीये पशौ अनिज्याशेषैस्त्रिभिरङ्गैः स्विष्टकृद्यागानुष्ठानं इति भा ।

अधि० ४ अध्यूध्न्या इडाभक्षविकारता इति म-सा-बिन्दु-वृ-ल । अध्यूध्न्या इडाविकारता इति

१२ अध्यूघ्नी तु होतुरुयजवदिडाभक्षविकारः स्यात्। ४ बिन्दुः.

१३ शेषे वा समवैति, तस्माद् रथवन्नियमः स्यात्।

१४ अशास्त्रत्वात्तु नैवं स्यात्।

१५ अपिवा दानमात्रं स्याद् भक्षशब्दानभिसंयोगात्।

१६ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात्।

अधि० ५.

१७ अग्नीधश्च वनिष्ठुरध्यूघ्नीवत्। ५बिन्दुः.

अधि० ६.

१८ अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम्। ६ बिन्दुः.

१९ स्याद्वा होत्रध्वर्युविकारत्वात् तयोः कर्माभिसंबन्धात्।

अधि० ७.

२० द्विभागः स्याद् द्विकर्मत्वात्। ७ बिन्दुः.

२१ एकत्वाद् वैकभागः स्याद् भागस्याश्रुतिभूतत्वात्।

अधि० ८.

२२ प्रतिप्रस्थातुश्च वपाश्रपणात्। ८ बिन्दुः.

२३ अभक्षो वा कर्मभेदात् तस्याः सर्वप्रदानत्वात्।

अधि० ९.

२४ विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात्। ९ बिन्दुः.

२५ अपिवाऽऽग्नेयवद् द्विशब्दत्वं स्यात्।

---

वि-भाट्ट-शा। अध्यूघ्न्या होतुः प्राकृतकृत्स्नेडाभक्षनिवृत्तिः इति भा।

सू० १२ (१) घ्नी हो इति वृ-ल-रत्न।

सू० १३ (१) स्माद् द्रव्यव इति वृ।

सू० १५ (१) संबन्धात् इति य-भिन्ने। संयोगात् इति भाटि - य। अत्र ' नात्र भक्षशब्देनाभिसंयोगो विधीयते ' इति भाष्यम्। तेन अभिसंयोगात् इत्येव भाष्यसंमतः पाठः।

अधि० ५ वनिष्ठोर्भक्षविकारता इति भा-भिन्ने। वनिष्ठ्वा अग्नीधः प्राकृतकृत्स्नेडाभक्षनिवृत्तिः इति भा।

सू० १७ (१) आग्नीध्रश्च इति चौ-पाठो न शुद्धः। (२) वनिष्ठु इति भाट्ट-शा-सोमपाठोपि न शुद्धः। ष्ठुरप्यध्यू इति भाटि।

अधि० ६ मैत्रावरुणस्यापि शेषभक्षास्तित्वं इति म-सा-वि-शा-वृ-ल। मैत्रावरुणस्य शेषभक्षोस्ति इति भाट्ट। मैत्रावरुणस्यापि इडाभक्षितृत्वं इति बिन्दुः। पशौ मैत्रावरुणस्यापि शेषभक्षः इति भा। भाष्येतरशीर्षकमप्रयोजकम्। पशौ एव मैत्रावरुणस्य शेषभक्षोऽस्ति न वेति विचारितं मूले। सौमिके तु चमसभक्षोऽस्त्येवेति न तस्य विचार्यता।

अधि० ७ मैत्रावरुणस्यैकभागता इति भा-भाट्टभिन्ने। मैत्रावरुणस्यैको भागः इति भाट्ट। पशौ मैत्रावरुणस्यैकभागत्वं इति भा। भा-भिन्नं शीर्षकमप्रयोजकं पूर्ववत्।

अधि० ८ प्रतिप्रस्थातुर्भक्षाभावः इति भा-भाट्ट-भिन्ने। प्रतिप्रस्थातुर्भक्षो नास्ति इति भाट्ट। इदं शीर्षकद्वयमपि अप्रयोजकं पूर्ववत्। पशौ प्रतिप्रस्थातुर्भक्षाभावः इति भा।

अधि० ९ आज्यभागौ यजति इत्यनेन अपूर्वगृहमेधीयविधानं इति म-सा-बिन्दुः। नूनमाश्चर्यकरं मीमांसानिष्णातत्वं संपादकमहाशयानाम्। को हि आज्यभागौ यजति इति वाक्ये अपूर्वस्य गृहमेधीयस्य विधाने श्रद्दध्यात्। गृहमेधीये अपूर्वाज्यभागविधानं इति वि-शा-ल। गृहमेधीये अपूर्वाज्यभागादिविधानं इति भाट्ट। आज्यभागौ यजति इत्यनेनापूर्वगृहमेधीयाज्यभागविधानं इति वृ। गृहमेधीयस्य आज्यभागपुनःश्रवणेनापूर्वत्वं इति भा।

सू० २४ (१) कृतेऽस्य इति य। (२) नर्थकं स्यात् इति ल।

सू० २५ (१) अपिवाग्नेयशब्दवद् इति टी।

२६ न वा शब्दपृथक्त्वात् ।
२७ अधिकं वाऽर्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ।
२८ प्रतिषेधः स्यादिति चेत् ।
२९ नाश्रुतत्वात् । २८ य.
३० अग्रहणादिति चेत् । २९ य.
३१ न तुल्यत्वात् । २९ य.
३२ तथा तद्ग्रहणे स्यात् । ३० य.
३३ अपूर्वतां तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् । ३१ य.
अधि० १०, ९ भाट्ट.
३४ ततोऽपि यावदुक्तं स्यात् । ३२ य, १० बिन्दुः.
अधि० ११, ९ भाट्ट.
३५ स्विष्टकृति भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात् । ३३ य, ११ बिन्दुः.
३६ अप्रतिषेधो वा दर्शनादिडायां स्यात् । ३४ य.
३७ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् । ३५ य.
अधि ० १२, १० भाट्ट.
३८ शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् । ३६ य, १२ बिन्दुः.
३९ नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् । ३७ य.
अधि० १३, ११ भाट्ट.

---

सू० २६ ( १ ) न चाश इति य ।
सू० २८ ( १ ) चेदन्तमुत्तरेणैकं य ।
सू० २९ ( १ ) श्रुतित्वात् इति भाटि–य ।
सू० ३० ( १ ) चेदन्तमुत्तरेणैकं य ।
अधि० १० गृहमेधीये स्विष्टकृदाद्यनुष्ठानं इति भा – भिन्ने । गृहमेधीये प्रत्यक्षश्रुतस्य स्विष्टकृदादेरप्यनुष्ठानं इति भा ।

सू० ३४ एतदादीनि चत्वारि सूत्राणि भाट्टे नवमाधिकरणशेषत्वेनैव स्वीकृतानि । अत्राधिकरणे म–पुस्तके दशमस्याधिकरणाङ्कस्य स्थाने १७ इत्येवाङ्को मुद्रितोऽनवधानात् । न तत् तादृशमाश्चर्यं मन्यामहे हस्तदोषस्य सुकरत्वात् । आश्चर्यं तु विद्यासागरस्य । तेन हि सा– पुस्तकेऽपि तथैव सप्तदशाङ्क एवाशुद्धः सन् मुद्रितः । म–पुस्तकस्थदोषो हि विद्यासागरेण कथमज्ञातः स्यात् म–पुस्तकं आदर्शपुस्तकेषु संगृहीता । तेन मन्यामहे म–पुस्तके विद्यमानं दोषमपि अदोषत्वेन स्वीकृत्य मुद्रणं कृतमिति । वस्तुस्थितिस्तु अनभिज्ञद्वारेणैव मुद्रितसंशोधनमत्र दोषकारणं, न विद्यासागरस्य भ्रमोऽत्र कारणम् । तथापि अनभिज्ञद्वारा मुद्रितसंशोधनमेव दोष इति न दोषान्मुक्तता विद्यासागरस्य विद्यासागरस्यापि सतः ।

अधि० ११ गृहमधीये प्राशित्रादिभक्षणाभावः इति भा–भाट्टभिन्ने । गृहमेधीये आज्यभागपुनःश्रवणस्य परिसंख्यार्थत्वं इति पञ्चमे पक्षे स्विष्टकृच्छ्रवणमपि स्वसजातीयप्रतिपत्त्यन्तराणां शेषकार्याणां निवर्तकमिति प्रयोजनप्रतिपादनं इति भा ।

सू० ३५ ( १ ) कृद्भक्ष इति भाटि–म–सा–वि–चौ । कृद्भक्षः प्र इति भाट्ट ।

अधि० १२ प्रायणीयातिथ्ययोः शंय्विडान्ततानियमः इति म–सा–वि–शा–बृ–ल । प्रायणीयातिथ्ययोः शंय्विडान्तता इति भाट्ट–बिन्दुः । प्रायणीयातिथ्ययोर्नियमेन शंय्विडान्तत्वं इति भा ।

सू० ३८ (१) पत्न्यनूयाज इति शा–सोम–बिन्दु–बृ–य । (२) षेधादानर्थक्यं स्यात् इति शाटि–सोम । षेधादनर्थको हि स्यात् इति बिन्दुटि–य । ( ३ ) र्थको हि स्यात् इति भा । र्थकः स्यात् इति भा–भिन्ने । भाष्यमूले तु ‘ पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ’ इत्येवानूदितम् । तेन भाष्यकारो हिकारं नानुमन्यते इति गम्यते ।

अधि० १३ प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थानं इति म–सा–वि–शा । प्रायणीयापूर्वाभ्यामेव शंय्विडाभ्यां संस्था इति भाट्ट ।

४० प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात् प्रतिषेधः स्यात् । ३८ य, १३ बिन्दुः.

४१ प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् । ३९ य.

४२ प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम् । ४० य.

अधि० १४, १२ भाट्ट.

४३ उपसत्सु यावदुक्तमकर्म स्यात् । ४१ य, १४ बिन्दुः.

४४ स्रौवेण वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् । ४२ य.

४५ अप्रतिषिद्धं वा प्रतिषिध्ये प्रतिप्रसवात् । ४३ य.

४६ अनिज्या वा शेषस्य मुख्यदेवताऽनभीज्यत्वात् । ४४ य.

अधि० १५, १३ भाट्ट.

---

समाप्तिः इत्यस्य स्थाने संस्थासंस्थान-शब्दप्रयोगं शीर्षकेऽपि क्षमामहे परंतु भाट्ट-शीर्षके प्रायणीया-पूर्वाभ्यां इत्यादेः कोऽप्यर्थो ज्ञातुं न शक्यते । प्रायणीया इति पदस्यासमस्तत्वे संस्था-पदेन तस्य सामानाधिकरण्यं न घटते । नहि प्रायणीयैव संस्था, समाप्तिरित्यर्थः । समस्तत्वमपि न घटते । प्रायणीयापदस्य शंय्विडाशब्देन सामर्थ्यात् पूर्वापदेनासामर्थ्यात् समासासंभवात् ।

सू० ४० ( १ ) षेधवचो इति वृ-ल । र्थत्वाद्वोत्त इति य-रत्न । र्थवत्त्वाद् वोत्त इति बिन्दुः । ( २ ) स्य परस्य पर इति य ।

सू० ४१ ( १ ) क्रमे स्यात् इति टी ।

अधि० १४ षडुपसद उपसाद्यन्ते इत्यादिना अपूर्वोपसत्कर्मविधानं इति म-सा । उपसदामपूर्वार्थत्वं इति वि-भाट्ट-शा-ल । तत्तन्मूलविरुद्धमिदम् । उपसत् नाम कर्म अपूर्वमेव विधीयते इति हि मूले साधितं, न तूपसदामपूर्वार्थत्वम् । यदि चोपसदामदृष्टार्थत्वं, तत् किमन्येषां कर्मणां दृष्टार्थत्वं प्रतियन्ति तत्रभवन्तः ? उपसत्संनिधौ पठितानामाघारादीनामपूर्वाङ्गत्वं इति बिन्दुः । अत्रादिशब्दो मूलविरुद्धः । बिन्दु-मूले तु आघारस्यैवापूर्वत्वमुक्तम् । षडुपसद इत्यादिना अपूर्वोपसत्कर्मविधानं इति वृ । उपसदामपूर्वत्वं इति भा ।

सू० ४३ ( १ ) दुक्तं कर्म इति य । दुक्तमकर्म इति य-भिन्ने । अत्र भाष्यं ' किं प्राप्तम् । उपसत्सु यावदुक्तं न कर्तव्यम् । अप्रयाजास्ता अननुयाजाः इति प्रयाजानुयाजानां प्रतिषेधं कृत्वा कृतार्थः शब्दोऽवशिष्टांश्चोदकप्राप्तान् न वारयति । तस्मादविशिष्टं सर्वं कर्तव्यमिति ' ।

सू० ४४ ( १ ) वा गु इति म-सा-वि-भाट्ट-शा-चौ । वाऽगु इति भा-वृ-ल । ' न तत्र कश्चित् गुणो विशिष्टः श्रूयते ' इति भाष्यं तु स्पष्टम् ।

सू० ४५ ( १ ) अप्रतिषेधो वा इति भाटि-वृ-ल-य । भाष्यमूले तु ' सर्वं कर्तव्यं प्रतिषिद्धं वर्जयित्वा ' इति । तेन अप्रतिषिद्धं इति पाठो भाष्यसंमत इति । ( २ ) ध्यप्र इति संधाय मुद्रितं म-सा-भाट्ट-शा । ( ३ ) प्रसववत् इति ल-पाठस्तु चिन्त्यः ।

अधि० १५ वारुणेनैककपालेन इत्यादिना अपूर्वस्यावभृथस्य विधानं इति म-सा-वृ । अवभृथे अपूर्वकर्मता इति वि-शा-बिन्दु-ल । अवभृथे इति सप्तमी न युक्ता । षष्ठी तु प्रयोक्तव्या । अवभृथस्यापूर्वार्थता इति भाट्ट । इदं तु सिद्धान्तात् भिन्नमेव किमप्युक्तम् । अवभृथस्यापूर्वत्वं इति भा ।

४७ अवभृथे बर्हिःप्रतिषेधाच्छेषकर्म स्यात्। ४५ य, १५ बिन्दुः.

४८ आज्यभागयोर्वाऽगुणत्वाच्छेषप्रतिषेधः स्यात्। ४६ य.

४९ प्रयाजानां त्वेकदेशप्रतिषेधादवाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात्। ४७ य.

५० गृहमेधीयवद् वा स्यात्। ४८ य.

अधि० १६, १४ भाट्ट.

५१ विरोधिनामेकश्रुतौ नियमः स्याद् ग्रहणस्यार्थवत्त्वाच्छरवच्छ्रुतितो विशिष्टत्वात्। ४९ य, १६ बिन्दुः.

५२ उभयप्रदेशान्नेति चेत्। ५० य.

५३ शरेष्वपि। ५० य.

५४ विरोध्यग्रहणात् तथा शरेष्विति चेत्।

५५ तथेतरस्मिन्। ५१ य.

५६ श्रुत्यानर्थक्यमिति चेत्। ५२ य.

५७ ग्रहणस्यार्थवत्त्वादुभयोरप्रवृत्तिः स्यात्। ५२ य.

अधि० १७, १५ भाट्ट.

---

सू० ४७ (१) बर्हिषः प्र इति बिन्दु–यभिन्ने। बर्हिःप्र इति बिन्दु–य। भाष्ये तु 'सर्वं कर्तव्यम्। कुतः। बर्हिःप्रतिषेधात्' इत्युक्तम्। तेन य–पाठ एव भाष्यसंमतः।

सू० ४८ (१) वा गु इति भा–भिन्ने। भाष्यं 'निर्गुणमेवेदं वचनं इतरेषामङ्गानां परिसंख्यापकं भवितुमर्हति' इति। तेन वाऽगु इत्येव भाष्यसंमतः पाठः प्रतीयते। सूत्रस्वारस्यं तु गुणत्वात् इत्यत्रेति मन्यामहे।

सू० ४९ (१) धाद्वाक्य इति भाटि–म–सा–वि–भाट्ट–शा–चौ। षेधवाक्य इति वृ–ल। भाष्ये तु 'वाक्यशेषो नावकल्पते' इत्युक्तम्। तेन 'षेधादवाक्य' इत्येव पाठः प्रतीयते।

सू० ५० 'आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत् स्यात्' इति सूत्रं प्रायः सर्वपुस्तकेषु विद्यते। 'वादो वा गृह' इति वा–शब्दोऽधिको वृ–ल। 'गृहमेधीयवद् वा स्यात्' इत्येव सूत्रं अष्टाचत्वारिंशं य। अत्र भाष्यमूलं, 'अथवाऽपूर्वोऽवभृथः। यद्वद् गृहमेधीयः तद्वत् स्यात्। आज्यभागाभ्यां प्रत्यक्षश्रुताभ्यामेकवाक्यतामित्वा निराकाङ्क्षो नान्यैः प्राकृतैरेकवाक्यतामेति। तस्मादपूर्वोऽवभृथ इति।' इति। तेन 'गृहमेधीयवद् वा स्यात्' इत्येव सूत्रं य–वत् भाष्यसंमतं इति सिध्यति। 'आज्यभागयोर्ग्रहणं नित्यानुवादः' इति न सूत्रांशः किंतु पूर्वसूत्रीयभाष्यस्यान्तिमं वाक्यं इति जायते मतिः। किंच पूर्वसूत्रे नित्यानुवादत्वमुक्तमेवेति नित्यानुवादत्वस्य पुनरुक्तिर्व्यर्था।

अधि० १६ वाजपेयादौ यूपादीनां खादिरत्वादिनियमः इति भा–भाट्टभिन्ने। वाजपेयादौ यूपादीनां खादिरत्वं इति भाट्ट। वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानां मध्येऽन्यतमपुनःश्रुतौ नियमविधित्वं इति भा।

सू० ५१ (१) वच्छ्रुति इति बिन्दु–य। वच्च श्रुति इति अन्यत्र। भाष्ये तु च–शब्दो नोपलभ्यते न चावश्यकता दृश्यते।

सू० ५२ (१) शादिति इति वृ–ल। (२) चेदन्तमुत्तरेणैकं य।

सू० ५३ (१) शरेष्वपि इत्येव सूत्रं य। शरेष्वपीतिचेत् इति सूत्रं य–भिन्ने सर्वत्र। भाष्यात् य–वदेव पाठः सिध्यति।

सू० ५४ (१) शरेष्वपीति इति वृ। (२) चेदन्तमुत्तरेणैकं य।

सू० ५५ (१) तथोत्तर इति वृ।

सू ५६ (१) चेदन्तमुत्तरेणैकं य।

सू० ५७ (१) प्रतिपत्तिः इति वृ–यभिन्ने। प्रवृत्तिः इति वृ–य। भाष्ये 'तस्मात् खादिरस्यैव प्रवृत्तिर्नोभयोः' इत्युक्तत्वात् वृ–यवदेव पाठो भाष्यसंमतः।

अधि० १७ काम्येष्टिषु प्राकृतद्रव्यदैवतस्य निवृत्तिः इति भा–बिन्दुभिन्ने। काम्येष्टिषु प्राकृतद्रव्यदैवतनिवृत्तिः इति बिन्दुः। विकृतौ उपदिष्टे-

५८ सर्वासां गुणानामर्थवत्त्वाद् ग्रहणमप्रवृत्ते स्यात्। ५३ य, १७ बिन्दुः.

५९ अधिकं स्यादिति चेत्। ५४ य.

६० नार्थाभावात्। ५४ य.

अधि० १८, १६ भाट्ट.

६१ तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात्। ५५ य, १८ बिन्दुः.

६२ यावच्छ्रुतीति चेत्। ५६ य.

६३ न प्रकृतावशब्दत्वात्। ५६ य.

अधि० १९, १७ भाट्ट.

६४ विकृतौ त्वनियमः स्यात् पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदीति स्यात्। ५७ य, १९ बिन्दुः.

६५ ऐकार्थ्याद् वा नियम्येत श्रुतितो विशिष्टत्वात्। ५८ य.

६६ विरोधित्वाच्च लोकवत्। ५९ य.

६७ क्रतोश्च तद्गुणत्वात्। ६० य.

६८ विरोधिनां च तच्छ्रुतावशब्दत्वाद् विकल्पः स्यात्। ६१ य.

६९ पृषदाज्ये समुच्चयाद् ग्रहणस्य गुणार्थत्वम्। ६८ वृ, ६२ य.

७० यद्यपिचतुरवत्तीति तु नियमे नोपपद्यते। ६३ य.

७१ क्रत्वन्तरे वा तन्न्यायत्वात् कर्मभेदात्। ६९ वृ, ६४ य.

अधि० २०, १८ भाट्ट.

---

द्रव्यदेवतादिभिः प्राकृतद्रव्यदेवतादीनां बाधः इति भा।

सू० ५८ (१) सां च गु इति शा-ल-चौ-य। (२) मर्थत्वा इति मटि-रत्न। (३) वृत्तेः स्यात् इति बिन्दुः। वृत्तौ ५७-५८ सूत्राङ्कस्थाने ५६-५७ अङ्कौ हस्तदोषादुत्पन्नौ।

सू० ५९ (१) चेदन्तमुत्तरेणैकं य।

सू० ६० (१) नार्थैकत्वात् इति चौ। भाष्ये तु नार्थाभावादित्येव।

अधि० १८ सोमापौष्णपशौ खादिरयूपस्य नियमः इति म-सा-वि-शा-वृ-ल। नियमः इत्युक्तमयुक्तम्। निवृत्तिरिति वक्तव्यम्। सोमापौष्णपशौ खादिरयूपस्य निवृत्तिः इति भाट्ट। औदुम्बरत्वस्य खादिरताबाधकत्वं इति बिन्दुः। विकृतौ श्रूयमाणेनौदुम्बरत्वेन प्राकृतखादिरत्वादेर्निवृत्तिः इति भा।

सू० ६२ (१) चेदन्तमुत्तरेणैकं य।

अधि० १९ ब्रह्मवर्चसकामेर्व्रीहिभिरेव यागः इति भा-बिन्दुभिन्ने। व्रीहयः कथं ब्रह्मवर्चसकामा वा अन्यकामा वा भवेयुः ?। अथवा ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागः 'कर्तव्यः' इति पदं निवेशितव्यम्। उत्पत्तिवाक्ये श्रुतेन गुणान्तरसहितप्राकृतवैकल्पिकद्रव्येण वैकल्पिकद्रव्यान्तरबाधः इति बिन्दुः। सौमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयवानां निवृत्तिः इति भा।

सू० ६४ (१) विकृते त्व इति मटि-वृ-रत्न। (२) यदीति इति भा। यदेति इति भाटि-म-सा इत्यादौ सर्वत्र। य-क्ष पुस्तकयोस्तु यदीति इत्येव। 'यद्यपि चतुरवत्ती' इति श्रुतिस्थस्य यदिशब्दस्यानुकरणमिदं सूत्रे। तेन यदीति इत्येव पाठो युक्तः।

सू० ६८ नास्तीदं सूत्रं वृ।

सू० ६९ (१) णगु इति य।

सू० ७० नास्तीदं सूत्रं वृ।

सू० ७१ (१) वाऽत इति वृ। (२) न्न्याय्यत्वात् इत्यन्तमेव सूत्रं चौ।

अधि० २० पञ्चावत्तैव वपा कार्या इत्यनेनाङ्गेष्वपि पञ्चावत्तविधानं इति म-सा-वृ। पञ्चावदानतायाः सर्वाङ्गसाधारणता इति वि-शा-ल। पञ्चावदानतायाः सर्वाङ्गसाधारण्यं इति भाट्ट। पञ्चावत्तैव वपा

७२ यथाश्रुतीति चेत् । ७० वृ, ६५ य, २० बिन्दुः.

७३ न चोदनैकत्वात् । ७१ वृ, ६५ य.

महर्षिणा लोकहिताय सम्यक् समीरिता विंशतिर्नीतयोऽत्र ॥

पशोः स्यङ्गैः एकत्वाद् अपूर्वतां उपसत्सु विरोधि विरोधिनां पञ्चषष्टिः ॥

॥ इति दशमाध्यायस्य सप्तमः पादः ॥

* * * *

॥ अथ दशमाध्यायस्याष्टमः पादः ॥

अधि० १.

१ प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात् ।

२ अर्थप्राप्तवदिति चेत् ।

३ न तुल्यहेतुत्वादुभयं शब्दलक्षणम् । २ य.

४ अपितु वाक्यशेषः स्यादन्याय्यत्वाद् विकल्पस्य विधीनामेकदेशः स्यात् । ३ य.

अधि० २.

५ अपूर्वे चार्थवादः स्यात् । ४ य, २ बिन्दुः.

अधि० ३, ३ तः ४ मण्डनः.

६ शिष्ट्वा तु प्रतिषेधः स्यात् । ५ य, ३ बिन्दुः.

---

कार्या इत्यत्र वपापदस्याङ्गोपलक्षकत्वं इति बिन्दुः । अग्नीषोमीयपशौ हृदयाद्यङ्गेष्वपि पञ्चावदानानि इति भा । वि-शा-ल-भाट्टशीर्षके अतिप्रसञ्जकत्वादशुद्धे । भाशीर्षके तु अवदानशब्दस्य स्थाने अवत्त शब्दप्रयोग एव कर्तुं युक्तः । अत्राधिकरणे म-सा-पुस्तकयोः क्रमाङ्को नैव निवेशितः ।

सू० ७२ ( १ ) श्रुति चेत् इति य ( २ ) चेदन्तमुत्तरेणैकं य-टी ।

अधि० १ प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासता इति म-सा-वि-शा-वृ-ल । नार्षेयं इत्यादौ निषेधस्य पर्युदासरूपता इति भाट्ट । पर्युदास इति बिन्दुः । अनुयाजमहापितृयज्ञयोः येयजामहहोतृवरणपर्युदासः इति भा ।

सू० १ ( १ ) रभ्यावि इति बिन्दुः । ( २ ) ने प्रा इति ल । ( ३ ) प्रतिषेधत्वाद् इति शा ।

सू० २ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ४ ( १ ) न्यायत्वा इति य ।

अधि० २ न तौ पशौ करोति इत्यादिनिषेधस्यार्थवादता इति म-सा-वृ । निषेधस्यार्थवादता इति वि-शा । न तौ पशौ करोति इत्यादौ निषेधस्यार्थवादता इति भाट्ट । न तौ पशौ इत्यस्य निषेधत्वं इति बिन्दुः । सोमे आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशौ आज्यभागप्रतिषेधार्थवादत्वं इति भा । अत्र पशौ आज्यभागयोर्विकल्पः । न सोमेऽध्वरे इति निषेधस्तु अर्थवादः इति हि सिद्धान्तः । भा-शीर्षकमिन्ने तु अस्पष्टार्थता । वि-शाशीर्षकं तु सर्वगामित्वादतिप्रसञ्जकत्वादनर्थकम् । बिन्दु-शीर्षकमपि अयुक्तमेव ।

सू० ५ ( १ ) अपूर्वो वार्थ इति बिन्दुः ।

अधि० ३ नातिरात्रे गृह्णाति षोडशिनं इत्यादिनिषेधस्य विकल्परूपता इति म-सा । निषेधः कथं विकल्परूपः स्यात् ? विधिनिषेधाभ्यां तु विकल्पः सिध्यतीति सिद्धान्तितम् । नातिरात्रे इत्यत्र नञः प्रतिषेधार्थता इति तु वक्तव्यम् । अतिरात्रे षोडशिग्रहनिषेधस्य विकल्परूपता इति वि-शा-ल । अत्रापि पूर्ववत् व्याघातः । नातिरात्रे षोडशिनं इत्यादौ विकल्पः इति भाट्ट । नातिरात्रे इत्यादौ नञः प्रतिषेधार्थत्वात् विकल्पः इति बिन्दुः । नातिरात्रे षोडशिनं इति निषेधस्य विकल्परूपत्वं इति वृ । अतिरात्रे षोडशिग्रहणप्रतिषेधः इति भा । भाष्ये तु ' अथ किंलक्षणकः प्रतिषेध इति लक्षणमुच्यते ' इत्युपक्रम्यारचितमधिकरणं प्रतिषेधलक्षणप्रतिपादकत्वेन । तस्मात् भा-शीर्षकमपि नैव युक्तम् । अत्रत्यानि सर्वाण्येव शीर्षकाणि शिथिलानि । मण्डनाचार्येणात्र ' शिष्टे नञ् प्रतिषेधार्थः ' ' पर्युदासेऽन्यता

अधि० ४, ५ मण्डनः.

७ न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च । ६ य, ४ बिन्दुः.

अधि० ५, ६ मण्डनः.

८ पूर्वैश्च तुल्यकालत्वात् । ७ य, ५ बिन्दुः.

अधि० ६, ७ मण्डनः.

९ उपवादश्च तद्वत् । ८ य, ६ बिन्दुः.

१० प्रतिषेधादकर्मेति चेत् । ९ य.

११ न शब्दपूर्वत्वात् । ९ य.

अधि० ७, ८ मण्डनः.

१२ दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात् ।

१० य, ७ बिन्दुः.

१३ अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् । ११ य.

१४ तस्य वाऽप्यानुमानिकमविशेषात् । १२ य.

१५ अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात् । १३ य.

अधि० ८, ९ मण्डनः.

१६ अविशेषेण यच्छास्त्रमन्याय्यत्वाद् विकल्पस्य तत् संदिग्धमाराद् विशेषशिष्टं स्यात् । १४ य, ८ बिन्दुः.

---

भवेत् ' इत्यधिकरणद्वयं स्वीकृतम् । अत एव ' न्यायास्त्वेकोनविंशतिः ' इत्युपसंहृतं पादान्ते आचार्येण ।

अधि० ४ अनाहुतिर्वै जर्तिलाश्च इत्यादिनिषेधस्यार्थवादता इति म–सा–वृ । जर्तिलोक्तौ निषेधस्यार्थवादता इति वि–शा–ल । जर्तिलवाक्ये इति वक्तव्यम् । जर्तिलयवाग्वा इत्यादौ अर्थवादः इति भाट्ट । अर्थवादता इति वक्तव्यम् । अनाहुतिर्वै जर्तिलाश्च इत्यादेरर्थवादत्वं इति बिन्दुः । जर्तिलयवाग्वा निषेधस्य पयोहोमविध्यर्थवादत्वं इति भा–शीर्षकं तु साधीयः ।

सू० ७ ( १ ) च–शब्दो नास्ति ल ।

अधि० ५ त्रैयम्बकादौ अभिघारणानभिघारणादीनामर्थवादता इति म–सा–वि–शा–वृ–ल । आदिशब्दो व्यर्थोऽत्र । होतव्यमग्निहोत्रं इत्यादौ अर्थवादः इति भाट्ट । इत्यादेरर्थवादता इति वक्तव्यम् । त्र्यम्बकादौ अभिघारणानभिघारणवाक्ययोरर्थवादत्वं इति भा ।

अधि० ६ आधाने उपवादस्य विकल्पता इति म–सा–वि–शा–वृ–ल । अयुक्तमिदम् । नहि उपवाद एव विकल्पः । आदाने उपवादे विकल्पः इति भाट्ट । आदाने इत्यत्र आधाने इति द्रष्टव्यम् । उपवादविषयको विकल्पः इत्यर्थकरणमप्ययुक्तमेव । आधाने उपवादस्य विकल्पपरत्वं इति बिन्दुः । आधाने निन्दावादेन विहितसामगानप्रतिषेधात् सामविकल्पः इति भा ।

सू० १० ( १ ) चेदन्तमुत्तरेणैकं य ।

अधि० ७ दीक्षितो न ददाति इत्यादिनिषेधस्य पर्युदासता इति म–सा–वृ । दीक्षितदाननिषेधस्य पर्युदासता इति वि–भाट्ट–शा–ल । निषेधस्तावत् प्रसक्तप्रतिषेध एव । स एव कथं पर्युदासो भविष्यति ? । दीक्षितो न ददाति इत्यादेः क्रत्वर्थतया प्रतिषेधत्वं इति बिन्दुः । प्रतिषेधकत्वं इति वक्तव्यम् । पुरुषार्थदानपाकहोमानां दीक्षितकर्तृकत्वपर्युदासः इति भा ।

सू० १२ ( १ ) प्रतिषेधेऽवि इति ल । ( २ ) कनिषे इति वृ ।

अधि० ८ वर्त्महोमादिभिः आहवनीयस्य बाधः इति म–सा–वि–शा–वृ–ल । पदहोमादिभिः आहवनीयस्य बाधः इति भाट्ट । उभयमपि शीर्षकमशुद्धम् । नहि आहवनीयस्य बाधो होमेन स्यात् । नहि होमाहवनीयौ समानभूमिकौ । वर्त्मना पदेन वा आहवनीयस्य बाधस्तु वक्तव्यः । विशेषशास्त्रस्य सामान्यशास्त्रबाधकत्वं इति बिन्दुः । ज्योतिष्टोमादौ

अधि० ९, १० मण्डनः.

१७ अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम्। १५ य, ९ बिन्दुः.

१८ विकारे तु तदर्थं स्यात्। १६ य.

१९ वाक्यशेषो वा क्रतुनाऽग्रहणात् स्यादनारभ्यविधानस्य । १८ वृ, १७ य.

अधि० १०, ११ मण्डनः.

२० मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात् स्यात्। १९ वृ, १८ य, १० बिन्दुः.

२१ अनाम्नाते च दर्शनात् । २० वृ, १९ य.

२२ प्रतिषेधाच्च। २१ वृ, २० य.

अधि० ११, १२ मण्डनः.

२३ अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात्। २२ वृ, २१ य, ११ बिन्दुः.

२४ मासिग्रहणं च तद्वत्। २३ वृ, २२ य.

२५ ग्रहणं वा तुल्यत्वात्। २४ वृ, २३ य.

२६ लिङ्गदर्शनाच्च। २५ वृ, २४ य.

२७ ग्रहणं समानविधानं स्यात्। २६ वृ, २५ य.

२८ मासिग्रहणमभ्यासप्रतिषेधार्थम् । २७ वृ, २६ य.

अधि० १२, १३ मण्डनः.

२९ उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् । २८ वृ, २७ य, १२ बिन्दुः.

३० तत्संस्कारश्रुतेश्च। २९ वृ, २८ य.

३१ ताभ्यां वा सह, स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात्। ३० वृ, २९ य.

---

विशेषविहितवर्त्मादिना सामान्यविहिताहवनीयबाधः इति भा।

अधि० ९ वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषता इति भा-बिन्दुभिन्ने। विकृतौ श्रुतस्य साप्तदश्यस्य अनारभ्याधीतविध्युपसंहारत्वं इति बिन्दुः। उपसंहारत्वं इत्यशुद्धं उपसंहार इत्येव वक्तव्यम् । नहि साप्तदश्यमेवोपसंहारः । वैमृधादिषु साप्तदश्यपुनःश्रवणस्यानारभ्याधीतसाप्तदश्योपसंहारार्थत्वं इति भा।

सू० १८ नास्तीदं सूत्रं वृ।

सू० १९ (१) ना ग्र इति अवग्रहरहितः छित्त्वा च पाठः भाटि-म-सा-वि-भाट्ट-शा-ल-चौ। 'न तु तत् क्रतुना गृह्यते' इति भाष्यात्तु अवग्रह आवश्यक एव।

अधि० १० पृथिव्यै स्वाहा इत्यादिविधिना अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानं इति म-सा-वृ। अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानं इति वि-शा-ल। प्रदानेषु स्वाहाकारनियमः इति भाट्ट। पृथिव्यै स्वाहा इत्यादिमन्त्रेषु स्वाहाकाराम्नानस्य नियमार्थत्वं इति बिन्दुः। क्वचिद्दर्विहोमे स्वाहाकारपुनःश्रवणस्य अनारभ्याधीतस्वाहाकारानुपसंहारकत्वं इति भा।

सू० २० (१) मन्त्रे त्ववा इति टी।

सू० २१ (१) ते द इति वृ-सूत्रे। तेऽपि द इति वृ-मूलात् सिध्यति।

अधि० ११ अग्न्यतिग्राह्यस्य विकृतौ उपदेशः इति भा-बिन्दुभिन्ने। प्रकृत्या सामानविध्यसिद्ध्यर्थं विकृतौ अग्न्यतिग्राह्ययोरुपदेशः इति बिन्दुः। अग्न्यतिग्राह्ययोर्विकृतौ उपदेशः इति भा।

सू० २७ (१) ग्रहणे स इति टुप्।

अधि० १२ उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तं इति म-सा-वि-शा-बिंदु-मृ-ल। चतुरवत्तत्वं इति वक्तव्यम्। उपस्तरणाभिघारणाभ्यां चतुरवत्तत्वोपपत्तिः इति भाट्ट। उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तसंपत्तिः इति भा।

सू० २९ (१) दुपपत्ते इति बिन्दुः। उत्पत्तेः इत्येव तु युक्तः पाठः।

सू० ३१ (१) आभ्यां इति टुप्। (२) सहत्वे इति ल। (३) रवघा इति वि-शा।

३२ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् । ३१ वृ—य.

अधि० १३, १४मण्डनः.

३३ साप्तदश्यवन्नियम्येत । ३३ वृ—य. १३ बिन्दुः.

३४ हविषो वा गुणभूतत्वात् तथाभूतविवक्षा स्यात् । ३३ वृ—य.

अधि० १४, १५ मण्डनः.

३५ पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद् वैश्यस्तोमवत् । ३४ वृ—य, १४ बिन्दुः.

३६ न त्वनित्याधिकारोऽस्ति विधेर्नित्येन संबन्धस्तस्मादवाक्यशेषत्वम् । ३५ वृ—य.

३७ सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् । ३६ वृ—य.

३८ कृत्स्नत्वात्तु तथा स्तोमे । ३७ वृ—य.

३९ कर्तुः स्यादिति चेत् । ३८ वृ—य.

४० न गुणार्थत्वात् प्राप्ते च नोपदेशार्थः । ३९ वृ, ३८—३९ य.

४१ कर्मणोस्तु प्रकरणे तन्न्यायत्वाद् गुणानां लिङ्गेन कालशास्त्रं स्यात् । ४० वृ—य.

४२ यदि तु सांनाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् । ४१ य.

४३ अपिवा विहितत्वाद् गुणार्थायां पुनः-श्रुतौ संदेहे श्रुतिर्द्विदेवतार्था स्याद् यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते । ४२ वृ, ४१ य.

---

( ४ ) णे च त इति टुप्—टी । ( ५ ) इत उत्तरं ‘ द्विर्हविषोऽवद्यतीति च विकल्पः स्याद् यदि हविषश्चतुरवदीयेत ’ इति त्रिंशं सूत्रं यपुस्तके वर्तते । एतादृशी चाक्षरपरिपाटी भाष्येऽपि वर्तत एव ‘ यदि हविश्चतुरवत्तं दीयेत ’ इति तु भेदः । परंतु इदं सर्वं भाष्यमिव भाति न सूत्रमिवेति ।

सू० ३२ ( १ ) भक्त्यानु इति चौ । भक्त्यनुक्रमात् इति वृ ।

अधि० १३ उपांशुयाजेपि चतुरवत्तस्यावश्यकता इति म—सा—वि—शा—ल । उपांशुयाजेऽपि चतुरवत्तत्वं इति भाट्ट । उपांशुयाजेऽपि चतुरवदानं इति बिन्दुः । उपांशुयागेपि चतुरवत्तस्यावश्यकता इति वृ । यागे इत्यस्य स्थाने याजे इत्येव वक्तव्यम् । उपांशुयाजे उपस्तरणाभिघारणयोर्लोपेऽपि हविष एव चतुरवत्तसंपत्तिः इति भा ।

सू० ३३ ( १ ) यम्येत् इति बिन्दुपाठः अशुद्ध एव ।

सू० ३४ ( १ ) गुणत्वात् इति य ।

अधि० १४ दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादता इति भा—भिन्ने । दर्शपूर्णमासयोरसोमयाजिनः पुरोडाशद्वयश्रवणस्यानुवादत्वं इति भा ।

सू० ३५ ( १ ) पुरोडाशाभ्यामित्यधिकृतानां इत्यंशो नास्त्येव चौ ।

सू० ३६ ( १ ) विधौ नित्येन इति भाटि—म—सा—वि—भाट्ट—शा—ल—चौ । ‘ पुरोडाशविधेर्नित्येन दर्शपूर्णमाससमुदायेन संबन्धः ’ इति भाष्यात्तु विधेर्नित्येन इत्येव पाठः ।

सू० ३७ ( १ ) सति न चैक इति पदविपरिवर्तनेन पाठो वृ । ( २ ) नत्वात् इति भाटि—म ।

सू० ३९ ( १ ) य—पुस्तके कर्तुः स्यादिति चेन्न गुणार्थत्वात् । ३८ प्राप्ते च नोपदेशार्थः । ३९ इति सूत्रभेदो भवति ।

सू० ४० ( १ ) प्राप्ते न चोप इति वृ—ल ।

सू० ४१ ( १ ) कर्मणोऽस्तु इति वि—शा । कर्मणोः तु इति भा—मसादौ पदच्छेदः । कर्मणः अस्तु इति तु वि—शासूत्रे पदच्छेदः । वि—शासूत्रे अवग्रहमुद्रणं भ्रान्तिजन्यमेव ।

सू० ४२ नास्तीदं सूत्रं य ।

सू० ४३ ( १ ) पुनः श्रुतौ इति छित्वा मुद्रणं वि—शा—वृ । वृ—मूलात्तु ‘ गुणार्थायां देवताद्वय-

४४ विधिस्तु बादरायणः । ४३ वृ, ४२ य.
४५ प्रतिषिद्धविधानाद्वा । ४४ वृ, ४३ य.
४६ तथा चान्यार्थदर्शनम् । ४५ वृ, ४४ य.

अधि० १५, १६ मण्डनः.

४७ उपांशुयाजमन्तरायजतीति हविर्लिङ्गाश्रुतित्वाद् यथाकामी प्रतीयेत । ४६ वृ, ४५ य, १५ बिन्दुः.

४८ ध्रौवाद् वा सर्वसंयोगात् । ४७ वृ, ४६ य.

अधि० १६, १७ मण्डनः.

४९ तद्वच्च देवतायां स्यात् । ४८ वृ, ४७ य, १६ बिन्दुः.

५० तान्त्रीणां प्रकरणात् । ४९ वृ, ४८ य.

---

गुणार्थायां पुनःश्रुतौ पुनःश्रुतिः किमर्थमिति संदेहे ' इत्यस्मात् ऐकपद्यं सिध्यति । ( २ ) श्रुतिर्हि दे इति भाटि-भाट्ट । मूललिखितवाचनदोषादयं पाठभेदः संपन्नः । द्विदेवतार्था इत्येव पाठ आवश्यकोऽत्र । मेयाद इति चौ-पाठो न ग्राह्यः ।

सू० ४४ ( १ ) विधिस्तु इति भाटि-य । अत्र भाष्यं, ' नैतदेवं आग्नेयेऽनुवाद ऐन्द्राग्ने विधिरिति । उभयोः कालविधिः स्यात् । कुतः । बादरायण आचार्यो मन्यते स्म, प्रागपि सोमयागात् सांनाय्यविधिरिति ' । अत्र विधिरिति आचार्यो मन्यते, विधिं आचार्यो मन्यते इत्युभयथाऽपि संभवति सूत्रयोजना । परंतु भाष्ये विधिशब्दो द्वितीयान्तो न पठितः प्रथमान्तस्तु पठितः । य-पुस्तके च प्रथमान्त एव । ' विधिं तु ' इति द्वितीयान्तपाठस्तु य-भिन्ने सर्वत्र । एवं स्थिते प्रथमान्तपाठ एव भाष्यात् सिध्यतीति मन्यामहे ।

सू० ४५ (१) विज्ञानाद्वा इति य-भिन्ने । अत्र भाष्ये विज्ञानशब्दः स्वरूपेण वा शब्दान्तरेण वा न स्पृष्टः । विधानशब्दस्तु ' सोमयाजिनः सांनाय्यविधानार्थमेतद्वाक्यं ' इति ' सोमयाजिनः सांनाय्यं विधीयते ' इति सुस्पष्ट एवेति स एव पाठोऽस्माभिः स्वीकृतः ।

अधि० १५ उपांशुयाजस्य ध्रौवाज्यद्रव्यता इति म-सा-वि-शा-बिन्दुः । उपांशुयाजस्य ध्रौवाज्यं द्रव्यं इति भाट्ट । उपांशुयागस्य ध्रौवाज्यद्रव्यकत्वं इति वृ । जस्थाने गं गृहीत्वा तदेव ल-शीर्षकम् । उपांशुयाजे ध्रौवाज्यविधानं इति भा ।

सू० ४७ ( १ ) गाश्रितत्वाद् इति ल ( २ ) यथा कामी इति छित्त्वा मुद्रितं भाट्ट । तन्न युक्तम् । यथाकामी इति वृ-य । यथाकामो प्र इति सा-भाट्ट । म-पुस्तकस्थकामीशब्दस्य वाचने प्रमाद्यता ' कामी प्र ' इत्यस्य स्थाने कामो प्र इति मुद्रितम् । तथा सति अकारप्रश्लेषः कर्तव्यः स्यात् स च न संभवति प्रतीयेत इत्यस्य नञ्पूर्वकत्वासंभवात् ।

अधि० १६ उपांशुयागस्य प्रकृतदेवतानियमः इति म-सा-वि-शा-बिन्दु-वृ । उपांशुयाजस्य प्रकृतदेवतानियमः इति ल । उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवतान्यतमदेवतानियमः इति भा ।

सू० ५० ( १ ) तान्द्रीणां इति भाटि-म-सा-भाट्ट । मन्त्र=मन्द्र, तान्त्री=तान्द्री, अथ=अध, मण्डलं=मण्डळं इत्यादि लिपिभेद एव केषां चित् । परंतु नासौ सर्वत्रेति दुष्टतैव । ( २ ) णां वा प्र इति वि-शा-चौ-य । यथाभाष्यं तावत् सूत्रद्वयस्यापि सिद्धान्तप्रतिपादकतया द्वितीयसूत्रे वा-शब्दो न युज्यते । य-पाठपक्षे तु, प्रथमसूत्रे उपांशुयाजदेवताया योऽयमनियम उक्तः, तं निरस्य तान्त्रीदेवतानियमः प्रतिपादितः इति द्वितीयसूत्रे वा-शब्द आवश्यकः । शबराचार्यसंप्रदायानुसारेण तु वा-शब्दाभाव एव भा-पुस्तकादौ स्वीकृतः इति भवति मतिः । वस्तुतस्तु तान्त्रीणां अतान्त्रीणां च देवतानामनियमः प्रथमसूत्रेणोक्तः । द्वितीयसूत्रेण तु तान्त्रीणामेवानियमः प्रतिपादितः इति भाष्यादपि स्पष्टं प्रतीयते इति शाबरमतेऽपि वा-शब्द आवश्यक एव । परंतु भाष्येण वा-शब्दो नैव व्याख्यातः इत्यलम् ।

अधि० १७, १७–१८ वि-शा-ल, १८ मण्डनः.

५१ धर्मोद्वा स्यात् प्रजापतिः । ५० वृ, ४९ य, १७ बिन्दुः.

५२ देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण । ५१ वृ, ५० य.

५३ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याह् विश्च स्याद्धौत्रस्य तत्र दर्शनात् । ५२ वृ, ५१ य.

५४ अपिवा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगाद् गुणत्वान्मन्त्रो यथाप्रधानं स्यात् । ५३ वृ, ५२ य.

५५ आनन्तर्यं च सांनाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे । ५४ वृ, ५३ य.

५६ अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते । ५५ वृ, ५४ य.

५७ प्रतिषिध्यविधानाद् वा विष्णुः समानदेशः स्यात् । ५६ वृ.

५८ तथा चान्यार्थदर्शनम् । ५७ वृ, ५५ य.

५९ न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् । ५८ वृ, ५६ य.

६० गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयति ।

६१ विकारे चाश्रुतित्वात् । ५९ वृ, ५७ य.

अधि० १८, १९ वि-शा-ल-मण्डनाः, १७ भाट्ट.

६२ द्विपुरोडाशायां स्यादन्तरार्थत्वात् । ६० वृ, ५८ य, १८ बिन्दुः.

---

स्वीकार्यत्वात् नास्माभिः य-वत् पाठः स्वीकृतोऽत्रेति ध्येयम् ।

अधि० १७ उपांशुयाजस्य विष्ण्वादिदेवतात्मकत्वपौर्णमासीकर्तव्यत्वे इति म-सा-वि-शा-ल । उपांशुयाजस्य विष्ण्वादिर्देवता पौर्णमासी च कालः इति भाट्ट । उपांशुयाजस्य विष्ण्वादिदेवताकत्वं इति बिन्दु-वृ । उपांशुयाजे वैकल्पिकविष्ण्वादिदेवता-पौर्णमासीमात्रकालिकत्वोभयप्रतिपादनं इति भा ।

अत्र विस्तरे धर्मोद्वा इत्यादीनि ५१ तः ६१ सूत्राणि मुद्रयित्वा अधिकरणद्वयमारचितम् । तत्रादिमेऽधिकरणे देवताविचारः, द्वितीये च कालविचारः कृतः । ते चाधिकरणे सप्तदशाष्टादशे । शास्त्रदीपिकायां अधिकरणद्वयं वर्णकद्वयमपि वा न कृतम् । परंतु संशोधकैर्ऐक्यर्थमेव सप्तदशाष्टादशरूपौ अधिकरणाङ्कौ मुद्रितौ । एवं ल-पुस्तकेऽपि । भाट्टे तु इमान्येकादशापि सूत्राणि पूर्वस्मिन् षोडशे एवाधिकरणेऽन्तर्भावितानि ।

सू० ५२ (१) तत्रशब्द इति संहृत्य मुद्रितं म-सा । तदयुक्तम् ।

सू० ५३ (१) स्यायां ह इति य ।

सू० ५४ (१) यथा प्र इति च्छित्त्वा मुद्रणं वि-शा । तन्न युक्तम् ।

सू० ५७ (१) ध्य वि इति च्छित्वा मुद्रणं भा-म-सा-वि-भाट्ट-शा-वृ । कुतः । 'प्रतिषिध्यविधानात् । किमिदं प्रतिषिध्यविधानात् इति' इति भाष्यात्तु ऐकपद्यं प्रतीमः । ल्यबन्तस्याप्युत्तरेण समासः संभवति । (२) नास्तीदं सूत्रं य ।

सू० ५९ (१) न वाऽन इति वृ । 'इतश्च नामावास्यायां' इति भाष्यात्तु न चान इत्येव पाठः सिध्यति ।

सू० ६० (१) नास्तीदं सूत्रं वृ-य । (२) प्रकृतौ इति भाटि-सा-भाट्ट-चौ । भाष्ये तु प्रवृत्तौ इत्येव पाठः । 'गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गागि दर्शयति । न प्रधानानां अपरार्थत्वात्' इति भाष्यम् । अत्र कानि पदानि सूत्रस्थानि कानि वा भाष्यस्थानि इति विचार्यमेव । य-मतेन तु इदं सर्वं भाष्यमेव न सूत्रांशोऽपि ।

अधि० १८ एकपुरोडाशायामपि उपांशुयाजः इति म-सा-वि-भाट्ट-शा । एकपुरोडाशायामपि उपांशुयागः इति बिन्दु-वृ-ल । एकपुरोडाशायामपि पौर्णमास्यां उपांशुयाजविधिः इति भा ।

सू० ६२ (१) दनन्तरा इति य । रालार्थत्वात् इति बिन्दुः । रालगुणार्थत्वात् इति वृ-ल ।

६३ अजामिकरणार्थत्वाच्च । ६१ वृ, ५९ य.

६४ तदर्थमिति चेत् । ६४ भा–म–सा–वि–भाट्ट–शा–ल–चौ, ६२ वृ, ६० य.

६५ न तत्प्रधानत्वात् । ६४ भा–म–सा–वि भाट्ट–शा–ल–चौ, ६२ वृ, ६० य.

६६ अशिष्टेन च संबन्धात् । ६५ भा–म–सा–वि– भाट्ट–शा–ल–चौ, ६३ वृ, ६१ य.

६७ उत्पत्तेस्तु निवेशः स्याद् गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद् विधानादन्तरार्थस्य नैमित्तिकत्वात् तदभावेऽश्रुतौ स्यात् । ६६ भा–म–सा–वि–भाट्ट–शा–ल–चौ, ६४ वृ, ६२ य.

६८ उभयोस्तु विधानात् । ६७ भा–म–सा–वि–भाट्ट शा–ल–चौ, ६५ वृ.

६९ गुणानां च परार्थत्वादुपवेषवद् यदेति स्यात् । ६८ भा–म–सा–वि–भाट्ट–शा–ल–चौ, ६६ वृ, ६३ य.

७० अनपायश्च कालस्य लक्षणं हि पुरोडाशौ । ६९ भा–म–सा–वि–भाट्ट–शा–ल–चौ, ६७ वृ, ६४ य.

७१ प्रशंसार्थमजामित्वं यथाऽमृतार्थत्वम् । ७०भा–म–सा–वि–भाट्ट–शा–ल–चौ, ६८ वृ, ६५ य.

न्यायास्त्वेकोनविंशतिः ॥

प्रतिषेधः अक्रतुयुक्तानां अग्न्यति तुल्यवत् अपिवा विष्णुः अशिष्टेन पञ्चषष्टिः ॥

॥ इति दशमाध्यायस्याष्टमः पादोऽध्यायश्च समाप्तः ॥

---

सू० ६३ ( १ ) अकामि इति चौ–पाठो न ग्राह्यः ।

सू० ६४ ( १ ) चेदन्तमुत्तरेणैकं य । वस्तुतस्तु अत्र सर्वेष्वेव ग्रन्थेषु चेदन्तमुत्तरेणैकीकृतम् । भा–पुस्तके सर्वत्र चेदन्तं पृथगेव क्रियते । अत्रैव तु कस्मात् उत्तरेणैकसूत्रत्वम् । तथाच पृथगेवात्रसूत्रं भवितुमर्हति । सर्वत्रैव वा य–कुतूहलवत् चेदन्तानां उत्तरेणैकत्वं स्वीकार्यम् । अर्धजरतीयं तु नैव युक्तम् ।

सू० ६७ ( १ ) स्यानुरो इति य ।

सू० ६८ नास्तीदं सूत्रं य ।

सू० ७० ( १ ) पायो हि का इति सोम ( ५।१।३५ सूत्रे )

सू० ७१ ( १ ) ' यथाऽमृतार्थत्वं ' इति भागो नास्ति म–भाट्ट–शा–वृ–ल–चौ । भाष्ये तु व्याख्यात एवायं भागः ।

# ॥ अथ एकादशोऽध्यायः ॥

॥ अथ एकादशाध्यायस्य प्रथमः पादः

अधि० १.

१ प्रयोजनाभिसंबन्धात् पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ।

२ शेषवद् वा प्रयोजनं प्रतिकर्म विभज्येत ।

३ अविधानात्तु नैवं स्यात् ।

४ शेषस्य हि परार्थत्वाद् विधानात् प्रतिप्रधानभावः स्यात् ।

अधि० २.

५ अङ्गानां तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्वम् । २ बिन्दुः.

६ अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम् ।

७ शब्दभेदान्नेति चेत् ।

८ कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात् । ७ य.

९ कर्तृविधेर्नानार्थत्वाद् गुणप्रधानेषु । ८ य.

१० आरम्भस्य शब्दपूर्वत्वात् । ९ य.

अधि० ३, २ भाट्ट-शा-बिन्दुः.

११ एकेनापि समाप्येत कृतार्थत्वाद् यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् । १० य.

१२ फलाभावान्नेति चेत् । ११ य.

१३ न कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात् । ११ य.

१४ ऐकशब्द्यान्नेति चेत् । १२ य.

१५ नार्थपृथक्त्वात् समत्वादगुणत्वम् । १२ य.

---

अधि० १ आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वं इति भाभिन्ने । दर्शपूर्णमासादिषु आग्नेयादीनां समुदितानामेकस्वर्गफलकत्वं इति भा ।

सू० १ (१) तस्मादै इति ऋजुप्रकाशिका भामतीटीका । (२) ब्दाभियो इति वार्तिकम् ।

सू० २ (१) ति क इति च्छित्त्वा मुद्रितं भाट्ट । तदशुद्धम् ।

अधि० २ अङ्गानामेककार्यं इति म-सा-वि-शा-ल । अङ्गानामैककर्म्यं इति भाट्ट । अङ्गानामैककार्यत्वं इति बिन्दुः । इदमशुद्धमेव । अङ्गानामेककार्यत्वं इति वृ । अङ्गानां प्रधानोपकाररूपैककार्यार्थत्वं इति भा ।

सू० ५ (१) नां श इति वृ-टुप् । (२) कर्तृवत् इति बिन्दुर्न ग्राह्यः । क्रतुवत् फ इति भाटि ।

सू० ६ (१) त्रार्थेहै इति शा-टुप् ।

सू० ७ (१) चेदन्तमुत्तरेणैकं य ।

सू० १० (१) आरम्भः श इति वि-शा-टुप् ।

अधि० ३ दर्शपूर्णमासादिकाम्यकर्मणां सर्वाङ्गोपसंहारः इति म-सा-वि-वृ-ल । असमुच्चितानामङ्गानां प्रधानोपकारकत्वं इति भा ।

भाष्यस्थं तृतीयमधिकरणं भाट्ट-शा-बिन्दुषु द्वितीये एवाधिकरणे अन्तर्भावितम् ।

सू० १२ (१) वादिति इति वृ-ल । (२) चेदन्तमुत्तरेणैकं य ।

सू० १४ (१) ब्द्यादिति चेत् इति म-सा-वि-भाट्ट-शा-वृ-ल । ऐकशब्दादिति चेत् इति चौ-पाठस्तु अशुद्ध एव । ऐककर्म्यान्नेतिचेत् इति पाठान्तरं भाष्ये ।

सू० १५ (१) समर्थत्वा इति य ।

१६ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्य-वच्छ्रुतभूताभिसंबन्धादर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात्। १३ य.

१७ तथा कर्मोपदेशः स्यात्। १४ य.

१८ क्रत्वन्तरेषु पुनर्वचनम्। १५ य.

१९ उत्तरास्वश्रुतित्वाद् विशेषाणां कृतार्थत्वात् स्वदोहे यथाकामी प्रतीयेत। १६ य.

अधि० ४, ३ भाट्ट-शा-बिन्दुः.

२० कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः। १७य, ३ बिन्दुः.

२१ अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः। १८ य.

२२ सकृत्तु स्यात् कृतार्थत्वादङ्गवत्। १९य.

२३ शब्दार्थश्च तथा लोके। २० य.

२४ अपिवा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद् विधिषु वचनानि स्युः। २१ य.

२५ ऐकशब्द्यात् तथाऽङ्गेषु। २२ य.

२६ लोके कर्मार्थलक्षणम्। २३ य.

अधि० ५, ४ भाट्ट-शा-बिन्दुः.

२७ क्रियाणामर्थशेषत्वात् प्रत्यक्षोऽतस्तन्निर्वृत्त्याऽपवर्गः स्यात्। २४ य, ४ बिन्दुः.

अधि० ६, ५ सा, ४ भाट्ट-शा-बिन्दुः.

---

सू० १६ (१) विधिस्त्वेक इति सु (१४० पृष्ठे) (२) ताभिसंयोगाद इति भादौ सर्वत्र। 'नित्यवद् यथाभूतानि च श्रुतानि तथाभूतानि अपेक्षया अभिसंबध्यन्ते' इति भाष्यात्तु अभिसंबन्धात् इत्येव भाष्यसंमतं पाठं निश्चिनुमः। वृ-मूलेऽपि अभिसंबन्धात् इत्येव। (३) दर्थे तु यु इति य। (४) यथाक्रमं निवी इति वृ। यथाक्रमं स्व इति ल। (५) स्वशब्दार्थो नि इति म-वि-शा। सशब्दो नि इति य। (६) वत् तस्मात् सर्व इति म-सा-वि-शा-य।

सू० १७ (१) देशत्वात् इति भाटि-सा-भाट्ट।

सू० १९ (१) संदोहे इति सा-भाट्ट। (२) यथा कामी इति च्छित्त्वा मुद्रणं सा। तदयुक्तम्। याथाकामी इति वृ-य।

अधि० ४ काम्यकर्मणां भूयोऽभ्यासः इति भा-साभिन्ने। काम्यकर्मणः फलाधिक्यायासकृदनुष्ठानं इति सा। काम्यानां कर्मणां कामनानुरोधेन पुनः-पुनरभ्यासः इति भा।

सू २० (१) रम्मक इति वृ-सूत्रे, वृ-मूले तु रम्भं फ इत्येव।

सू० २१ (१) काराश्च इति चौ। बहुवचनं व्यर्थम्।

सू० २४ (१) याथाकामी इति वृ-य।

सू० २५ (१) ऐकशब्दात् इति चौ-पाठो न शुद्धः।

अधि० ५ अवघातादीनामातण्डुलनिर्वृत्तेरभ्यासः इति म-वि-शा-ल। अङ्गस्यानभ्यासः इति सा। अवघातादीनामभ्यासानभ्यासौ इति भाट्ट। अवघातादीनामातण्डुलनिष्पत्तेरभ्यासः इति बिन्दुः। अवघातादीनामातण्डुलनिर्वृत्त्यभ्यासः इति वृ। दृष्टार्थानामवघातादिक्रियाणां प्रयोजननिष्पत्तिपर्यन्तमभ्यासः इति भा।

सू० २७ (१) त्यक्षतस्त इति सा-भाट्ट। त्यक्षमतस्त इति वृ-ल। प्रत्येकं निर्वृ इति बिन्दुः। (२) निवृत्त्या इति भाट्ट।

अधि० ६ अदृष्टफलस्यावघातादेः सकृदनुष्ठानं इति म-वि-वृ-ल। चयने अदृष्टार्थस्य सर्वौषधावघातस्यानभ्यासः इति भा।

२८ धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात्। २५ य.

अधि० ७, ६ सा, ५ भाट्ट-शा-बिन्दुः.

२९ क्रतुवद् वाऽनुमानेनोभ्यासे फलभूमा स्यात्। २६ य, ५ बिन्दुः.

३० सकृद् वा कारणैकत्वात्। २७ य.

३१ परिमाणं चानियमे न स्यात्। २८ य.

३२ फलस्यारम्भनिष्पत्तेः क्रतुषु स्यात् फलान्यत्वम्। २९ य.

३३ अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात्। ३० य.

३४ पृथक्त्वाद् विधितः परिमाणं स्यात्। ३१ य.

३५ अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात्। ३२ य.

३६ अभ्यासो वा छेदनसंमार्गावदानेषु वचनात् सकृत्त्वस्य। ३३ य.

३७ अनभ्यासस्तु वाच्यत्वात्। ३४ य.

अधि० ८, ७ सा, ६ भाट्ट-शा-बिन्दुः.

---

सा-पुस्तके तृतीयाधिकरणमारभ्य द्वादशाध्यायसमाप्तिपर्यन्तं क्वापि अधिकरणाङ्का नैव प्रदर्शिताः तत्तदधिकरणादौ शीर्षकं तु प्रदत्तम्। तेनाधिकरणाङ्का ऊहितुं शक्यन्ते। तथा सति सप्तविंशसूत्रारम्भ एव शीर्षकं प्रदत्तं न पुनरष्टाविंशसूत्रारम्भे किमपि शीर्षकम्। तेन सा-संपादकेन सूत्रद्वयेनैकमेवाधिकरणं स्वीकृतम्। आनन्दाश्रमीयभा-पुस्तके तु सप्तविंशेन सूत्रेण पञ्चममधिकरणं अष्टाविंशेन च षष्ठं स्वीकृतम्। भाष्यमूले तु विंशे एव सूत्रे विषयसंशयपूर्वपक्षान् प्रदर्श्य सिद्धान्तो वर्णितः। सप्तविंशाष्टाविंशसूत्रयोस्तु विषयसंशयपूर्वपक्षा नैव प्रदर्शिताः। एकोनविंशे सूत्रे तु विषयादिकं प्रदर्शितम्। तेन मन्यामहे विंशं सूत्रमारभ्य अष्टाविंशसूत्रपर्यन्तं एकमेवाधिकरणं भाष्यमतेन स्यादिति। भाट्ट-शा-बिन्दुषु सप्तविंशाष्टाविंशाभ्यां सूत्राभ्यामेकमधिकरणमेव स्वीकृतम्।

अधि० ७ प्रयाजादीनामङ्गानां सकृदनुष्ठानं इति म-वि-शा-वृ। प्रयाजाद्यङ्गस्य सकृदनुष्ठानं इति सा। प्रयाजादीनां सकृदनुष्ठानं इति भाट्ट। प्रयाजाद्यङ्गानां सकृदनुष्ठानं इति बिन्दुः। एकस्मिन् प्रयोगे प्रयाजाद्यङ्गस्य सकृदनुष्ठानं इति भा।

सू० २९ (१) क्रतुवच्चानु इति भाटि-सा-भाट्ट। (२) नाभ्यस्ते फ इति म।

सू० ३० (१) वा कर इति ल।

सू० ३१ (१) मे न इति वि-शा। अत्र भाष्यं 'यदि चानियमः सकृद्वा असकृद्वा प्रयोगः, ततः चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायां इति योऽयं नित्यवदाहुतिपरिमाणानुवादः स न स्यात्' इति। तेन अनियमे इति सप्तम्यन्तमेव पदं सिध्यति न तृतीयान्तम्। वृत्तौ तु तृतीयान्तमेव व्याख्यातम्।

सू० ३२ (१) फलार इति वृ-ल। (२) म्भनिवृत्तेः इति भाट्ट-य। म्भनिर्वृत्तेः इति भा-म-सा-वि-शा-वृ-ल-चौ। अत्र भाष्यं 'युक्तं यत् क्रतुष्वभ्यासः। फलस्यारम्भनिष्पत्तेः। कर्मारम्भेण तत्र फलं निष्पद्यते। आरम्भान्तरेणापरं निष्पत्स्यते इति' इति। तेन भाष्यात् निष्पत्तेः इत्येव पाठो निश्चीयते। वृत्तौ तु आरम्भनिर्वृत्तेः इति प्रतीकं गृहीत्वा आरम्भनिष्पत्तेः इति व्याख्यातम्।

सू० ३३ (१) अर्थवतस्तु इति भाटि-सा-भाट्ट-चौ।

अधि० ८ कपिञ्जलाधिकरणं इति म-सा-वि-भाट्ट-शा-ल-भा। कपिञ्जलन्याय इति म। कपिञ्जलानिति बहुवचनस्य त्रित्वपरत्वं इति म-वृ-। बहुवचनस्य त्रित्वपरत्वं इति वि-भाट्ट-शा-ल। बहुवचनस्य त्रित्वपर्यवसायित्वं इति बिन्दुः।

३८ बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् । ३५ य, ६ बिन्दुः.
३९ दृष्टः प्रयोग इति चेत् । ३६ य.
४० तथेह । ३६ य.
४१ भक्त्येति चेत् । ४० सा–भाट्ट–चौ, ३७ य.
४२ तथेतरस्मिन् । ४१ सा–भाट्ट–चौ, ३७ य.
४३ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् । ४२ सा–भाट्ट–चौ, ३८ य.
४४ श्रुत्यर्थाविशेषात् । ४३ सा–भाट्ट–चौ.
४५ तथा चान्यार्थदर्शनम् । ४४ सा–वि–भाट्ट–शा–वृ–चौ, ३९ य.
४६ प्रकृत्या च पूर्ववत् तदासत्तेः । ४५ म–सा–वि–भाट्ट–शा–वृ–चौ, ४० य.

अधि० ९, ८ सा, ७ भाट्ट–शा–बिन्दुः.

४७ उत्तरासु न यावत्त्वमपूर्वत्वात् । ४६ म–सा–वि–भाट्ट–शा–वृ–चौ, ४१ य, ७ बिन्दुः.
४८ यावत्त्वं वाऽन्यविधानेनानुवादः स्यात् । ४७ म–सा–वि–भाट्ट–शा–वृ–चौ, ४२ य.
४९ साकल्यविधानात् । ४८ म–सा–वि–भाट्ट–शा–वृ–चौ, ४२ य.
५० बह्वर्थत्वाच्च । ४९ म–सा–वि–भाट्ट–शा–वृ–चौ, ४३ य.
५१ अग्निहोत्रे चाशेषवद् यवागूनियमः । ५० म–सा–वि–भाट्ट–शा–वृ–चौ, ४४ य.
५२ तथा पयःप्रतिषेधः कुमाराणाम् । ५३ ल, ५१ म–वि–शा–चौ, ५० सा–भाट्ट, ४५ य.
५३ सर्वप्रापिणाऽपि लिङ्गेन संयुज्ये देवताऽभिसंयोगात् । ५४ ल, ५२ म–वि–शा–वृ–चौ, ५१ सा–भाट्ट, ४६ य.

अधि० १०, ९ म–सा, ८ भाट्ट–शा–बिन्दुः.

---

सू० ३८ (१) प्राप्तिर्वि इति य ।

सू० ३९ (१) चेदन्तमुत्तरेणैकं य ।

सू० ४० नास्तीदं सूत्रं भाटि–सा–भाट्ट–चौ । भाष्यानुसारेण तु अस्त्येव ।

सू० ४१ (१) चेदन्तमुत्तरेणैकं य ।

सू० ४४ नास्तीदं सूत्रं म–वि–शा–वृ–य । 'सूत्रपाठेषु अनुपलम्भात् नेदं सूत्रं किंतु भाष्यवचनं स्यादिति भाति ' इति भाटि । वस्तुतस्तु भाष्यात् सिध्यत्येवेदं सूत्रम् ।

अधि० ९ उत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनविधानं इति म–बिन्दुः । उत्तरादोहनानुवादः इति सा । उत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनं इति वि–शा–वृ–ल । सर्वा उत्तरा दोहनीयाः इति भाट्ट । उत्तरागोदोहः इति भा ।

सू० ४७ (१) सु या इति सा–भाट्ट–वृ–ल । सुं तु या इति बिन्दुः ।

सू० ४८ (१) स्यात्साकल्यविधानात् इत्यन्तमेकमेव सूत्रं य ।

सू० ५१ (१) नियमः प्रतिषेधः कुमाराणां इत्यन्तमेकं सूत्रं सा–भाट्ट । यवागूनियमः इत्यन्तसूत्रोत्तरं ' इति व्याख्यातं ' इत्यधिकं सूत्रं वृ ।

सू० ५२ (१) नास्तीदं सूत्रं स्वतन्त्रं सा–भाट्ट–वृ । ११।१।१९ इति सूत्रभाष्ये तु " उपरिष्टाद् एतद् वक्ष्यामः ' तथा पयःप्रतिषेधः कुमाराणां ' इत्यत्र " इत्युक्तम् । तेन भाष्यमतेन अस्त्येवेदं सूत्रमिति सिध्यति ।

सू० ५३ (१) प्रापिणा इति भाट्ट–पाठः अशुद्ध एव । (२) ज्यते दे इति भाटि–सा–भाट्ट–चौ ।

अधि० १० आग्नेयादीनां प्रधानानां भेदेऽपि आघारादीनामङ्गानां तन्त्रेणानुष्ठानं इति म–वि–वृ–ल । आघारादीनामङ्गानां तन्त्रं इति सा ।

५४ प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात् । ५३ ल, ५६ म-वि-शा-वृ-चौ, ५२ सा-भाट्ट, ४७ य, ८ बिन्दुः.

५५ क्रमकोपश्च यौगपद्ये स्यात् । ५६ ल, ५४ म-वि-शा-वृ-चौ, ५३ सा-भाट्ट, ४८ य.

५६ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद् विशेषाग्रहणात् । ५७ ल, ५५ म-वि-शा-वृ-चौ, ५४ सा-भाट्ट, ४९ य.

५७ ऐकार्थ्यादव्यवायः स्यात् । ५८ ल, ५६ म-वि-शा-वृ-चौ, ५५ भाट्ट, ५४ सा, ५० य.

५८ तथा चान्यार्थदर्शनं कामुकायनः । ५९ ल, ५७ म-वि-शा-वृ-चौ, ५६ भाट्ट, ५५ सा, ५१ य.

५९ तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात् संस्कारस्य तदर्थत्वात् । ६० ल, ५८ म-वि-शा-वृ-चौ, ५७ भाट्ट, ५६ सा, ५२ य.

६० असंसृष्टोऽपि तादर्थ्यात् । ६१ ल, ५९ म-वि-शा-वृ-चौ, ५८ भाट्ट, ५७ सा, ५३ य.

६१ विभवाद् वा प्रदीपवत् । ६२ ल, ६० म-वि-शा-वृ-चौ, ५९ भाट्ट, ५८ सा, ५४ य.

६२ अर्थात्तु लोके, विधितेः प्रतिप्रधानं स्यात् । ६३ ल, ६१ म-वि-शा-वृ-चौ, ६० भाट्ट, ५९ सा, ५५ य.

६३ सकृदिज्यां कामुकायनः परिमाणविरोधात् । ६४ ल, ६२ म-वि-शा-वृ-चौ, ६१ भाट्ट, ६० सा, ५६ य.

६४ विधेस्त्वितरार्थत्वादसकृदिज्यो श्रुतिव्यतिक्रमः स्यात् । ६५ ल, ६३ म-वि-शा-वृ-चौ, ६२ भाट्ट, ६१ सा, ५७ य.

६५ विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः । ६६ ल, ६४ म-वि-शा-वृ-चौ, ६३ भाट्ट, ६२ सा, ५८ य.

---

आघारादीनां तन्त्रेणानुष्ठानं इति भाट्ट । आघाराद्यङ्गानां तन्त्रेणानुष्ठानं इति शा । प्रधानभेदेऽपि अङ्गानां तन्त्रं इति बिन्दुः । दर्शपूर्णमासादिषु तन्त्रेणाघाराद्यङ्गानुष्ठानं इति भा ।

सू० ५४ ( १ ) कर्मत्वा इति बिन्दुः । ( २ ) दः स्यात् इति बिन्दुः । ( ३ ) प्रयोगः स्यात् इति टी ।

सू० ५५ ( १ ) पद्यात् स्यात् इति भाटि-सा-भाट्ट ।

सू० ५७ सा-पुस्तके पूर्वसूत्रे ५४ सूत्राङ्कं दत्त्वा पुनरस्मिन् सूत्रेऽपि तमेवाङ्कं दत्त्वा उत्तरेषु सूत्रेषु एकैकेन तथैव वर्धिता अङ्का निवेशिताः ।

सू० ६० ( १ ) असंस्पृष्टो इति म-वि-शा-वृ-ल-चौ-य । भाष्ये तु असंसृष्ट इत्येव ।

सू० ६२ ( १ ) अर्थाल्लोके इति सा-भाट्ट । ( २ ) विधिः प्रति इति भाटि-म-वि शा-वृ-ल ।

सू० ६३ ( १ ) माणावि इति य ।

सू० ६४ ( १ ) त्वात् सकृ इति भाटि-म-सा-वि-भाट्ट-वृ-ल-चौ-य । ( २ ) ज्याश्रु इति संहत्य मुद्रणं म-वि-शा-वृ-ल-चौ । वृ-मूले तु पदभेदेनैव व्याख्यातम् ।

सू० ६५ एतत्सूत्रोत्तरं 'अपि चैकेन संनिधानमविशेषको हेतुः' इत्यधिकं सूत्रं ६७ ल, ६५ चौ,

६६ क्वचिद् विधानान्नेति चेत् । ६८ ल, ६५ म-वि-भाट्ट-शा-वृ, ६४ सा, ५९ य.

६७ न विधेश्चोदितत्वात् । ६९ ल, ६६ म-वि-भाट्ट-शा-वृ, ६५ सा, ५९ य.

अधि० ११, १० सा, ९ भाट्ट-शा-बिन्दुः.

६८ व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् । ७० ल, ६७ म-वि-भाट्ट-शा-वृ, ६६सा, ६० य, ९बिन्दुः.

६९ भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद् विशिष्टानां विधिः प्रधानकालत्वात् । ७१ ल, ६८ म-वि-भाट्ट-शा-वृ, ६७ सा, ६१ य.

७० तथा चान्यार्थदर्शनम् । ७२ ल, ६९ म-वि-भाट्ट-शा-वृ, ६८ सा, ६२ य.

७१ विधिरिति चेन्न वर्तमानापदेशात् । ७३ ल, ७० म-वि-भाट्ट-शा-वृ, ६९ सा, ६३ य.

न्याया इहैकादश संप्रदिष्टाः ॥
प्रयोजन फलाभावात् अपिवा पृथक्त्वात्
उत्तरासु तथा भेदः त्रिषष्टिः ॥

॥ इत्येकादशाध्यायस्य प्रथमः पादः ॥

* * * *

॥ अथैकादशाध्यायस्य द्वितीयः पादः ॥

अधि० १.

१ एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ।

२ अविधिश्चेत् कर्मणां नाभिसंबन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद् चोदनाविधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ।

---

६४ भाट्ट, ६३ सा । इयं पङ्क्तिर्भाष्यमूले वर्तत एव । परंतु सा भाष्यमिव भाति, न सूत्रमिव ।

सू० ६६ (१) चेदन्तमुत्तरेणैकं य ।

अधि० ११ कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानं इति म-वि-शा-बिन्दु-ल । कृष्णग्रीवस्य भेदेन ग्रहणं इति सा । अत्रैकवचनमयुक्तम् । कृष्णग्रीवयोर्न तन्त्रेणानुष्ठानं इति भाट्ट । कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेनानुष्ठानं इति वृ । आग्नेयद्वयस्य आवृत्त्या प्रदानं इति भा ।

सू० ६८ (१) तुल्यकालानां इति बिन्दुः ।

सू० ६९ (१) दात् स्याद्वो इति वृ-सूत्रे । वृ-मूले तु एकमपि स्यात्-पदं न पठितम् । विधिः प्रदान इति म-वि-शा-चौ । विधेः प्रदान इति य ।

सू० ७१ (१) चेदन्तानि सूत्राणि इति यदि भाष्यकारशैली तर्हि कुतो नात्र सूत्रभेदः? । (२) मानोप इति चौ ।

अधि० १ आग्नेयादीनां प्रधानानां तन्त्रं इति भा-साभिन्ने । प्रधानानां तन्त्रं इत्युत्स्वप्नायितं संपादकमहाशयानां मोहमूलकम् । आग्नेयादीनां न देशकालादितन्त्रता इति सा-शीर्षकं सिद्धान्तविरुद्धम् । आग्नेयादिप्रधानानामेकदेशकालकर्तृकत्वं इति भा ।

सू० १ (१) शात् स्यात् इति बिन्दुः ।

सू० २ (१) कर्मणामभि इति भाटि-म-सा-वि-भाट्ट-शा-वृ-ल-चौ । 'कर्मणामाग्नेयादीनां भेदेन देशादिभिरभिसंबन्धो न प्रतीयेत' इति भाष्यात्तु न-शब्दो भाष्यासंमत एव । (२) येत लक्ष इति म-वि-वृ । येत तल्लक्ष इति ततोऽन्यत्र । 'कथं पुनः....आग्नेयादिषु देशादयो विधातुं शक्यन्ते । लक्षणार्थाभिसंयोगात् । लक्षणार्थेनाभिसंयोगो विज्ञायते' इति भाष्यात्तु तच्छब्दो नास्तीति ज्ञायते (३) गाद्विधि इति सर्वत्र । 'चोदनाविधित्वाच्चेतरेषां देशादीनां प्रतिप्रधानं भावः स्यात्' इति 'चोदनाविधिस्त्वयं' इति च भाष्यम् । दशमसूत्रे च 'चोदनाविधिशेषत्वात्' इत्येव सर्वसंमत एव पाठः । तेनात्रापि सूत्रे चोदनाविधित्वात् इत्येव पाठः सिध्यतीति मन्यामहे । (४) प्रधानभावः इति भाटि-सा-भाट्ट-य ।

अधि० २ अन्तरागर्भिणी.

३ अङ्गेषु च तदभावः प्रधानं प्रतिनिर्देशाद् यथा द्रव्यदेवतम् ।

प्रथमाधिकरणशेषसूत्राणि.

४ यदि तु कर्मणो विधिसंबन्धः स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् ।

५ तथा चान्यार्थदर्शनम् ।

६ श्रुतिश्चैषां प्रधानवत् कर्मश्रुतेः परार्थत्वात् ।

७ कर्मणोऽश्रुतत्वाच्च । ६ म–वि–शा–वृ–ल–चौ–य.

अन्तरागर्भिणी शेषसूत्राणि

८ अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरंस्तस्मात् स्यादेकदेशत्वम् । ७ म–वि–शा–वृ–ल–चौ–य.

९ द्रव्यदेवतं तथेति चेत् । ८ म–वि–शा–वृ–ल–चौ–य.

१० न चोदनाविधिशेषत्वान्नियमार्थो–विशेषः । ९ म–वि–शा–वृ–ल–चौ, ८ य.

११ तेषु समवेतानां समवायात् तन्त्रमङ्गानि, भेदस्तु तद्भेदात्, कर्मभेदः प्रयोगे स्यात्, तेषां प्रधानशब्दत्वात् । १० म–वि–शा–वृ–ल–चौ,९ य.

१२ तथा चान्यार्थदर्शनम् । ११भा–सा–भाट्ट, १०म–वि–शा–वृ–ल–चौ, ९ य.

अधि० ३, २ भाट्ट–शा–बिन्दुः.

१३ इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् । १२ भा–सा–भाट्ट, ११ म–वि–शा–वृ–ल–चौ, १०य, २ बिन्दुः.

१४ कालभेदान्नेति चेत् । १३ भा–सा–भाट्ट, १२ म–वि–शा–वृ–ल–चौ, ११य.

१५ नैकदेशत्वात् पशुवत् । १४ भा–सा–भाट्ट, १३ म–वि–शा–वृ–ल–चौ, ११ य.

---

प्रथमाधिकरणे प्रथमद्वितीये. चतुर्थादीनि सप्तमान्तानि च सूत्राणि । द्वितीयाधिकरणे च अंशतोऽन्तरागर्भिणीरूपे तृतीयं, अष्टमाद्येकादशान्तानि च सूत्राणि इति विभागः ।

अधि० २ अङ्गानामपि समदेशादिनियमः इति म–वि–वृ–ल । अङ्गानां प्रधानदेशादिनियमः इति सा । अङ्गानां प्रधानैः सह एकदेशकालकर्तृकत्वं इति भा ।

भाट्ट–शा–बिन्दुषु तु प्रथमादिद्वादशान्तैः सूत्रैरेकमेवाधिकरणं स्वीकृतम् ।

सू० ३ (१) प्रधानप्रति इति य । (२) यथा द्रव्यदेवतं इति सूत्रांशो नास्ति म–सा–वि–भाट्ट–शा–वृ–ल–चौ । भाष्यमूले तु अस्त्येव ।

सू० ४ (१) शब्दात् इति चौ । अशुद्धमिदम् । (२) प्रधानेऽर्थाभिसंयोगात् इति य । प्रधानार्थाभिधासंयोगात् इति भाट्ट ।

सू० ६ (१) त्वात् कर्मणोऽश्रुतित्वाच्च इत्येकसूत्रत्वं म–वि–शा–वृ–ल–चौ–य । तत्रापि श्रुतत्वाच्च इति चौ । भाष्ये तु सूत्रपृथक्त्वं च 'श्रुतत्वाच्च' इति पाठश्च ।

सू० ९ (१) चेदन्तमुत्तरेणैकं य ।

सू० १२ (१) तथा चान्यार्थदर्शनं इति सूत्रं चतुर्विंशतिवारं पृथगेव वर्तते । अत्रैव कस्मात् पूर्वसूत्रे एवान्तर्भावितं सर्वैरिति न ज्ञायते । वस्तुतस्तु भिन्नमेव ग्रहीतुं युक्तम् ।

अधि० ३ दर्शपूर्णमासेष्टिप्रभृतिषु संघभेदेनाङ्गानां भेदेनानुष्ठानं इति म–वि–भाट्ट–शा–वृ–ल । राजसूयादौ अङ्गावृत्तिः इति सा–शीर्षकं भ्रान्तिकरम् । दर्शपूर्णमासेष्टिषु संघभेदेनाङ्गानां भेदेनानुष्ठानं इति बिन्दुः । ननु कति सन्ति दर्शपूर्णमासेष्टयः । दर्शपूर्णमासचातुर्मास्यादिषु तत्तद्द्रव्याप्यप्रयोगानुरोधेनाङ्गानामावृत्तिः इति भा ।

सू० १४ (१) चेदन्तमुत्तरेणैकं य ।

१६ अपिवा कर्मपृथक्त्वात् तेषां च तन्त्रविधानात् साङ्गानामुपदेशः स्यात् । १५ भा–सा–भाट्ट, १४ म–वि–शा–वृ– ल– चौ, १२ य.

१७ तथा चान्यार्थदर्शनम् । १६ भा–सा–भाट्ट, १५ म–वि–शा–वृ–ल–चौ, १३ य.

१८ तदाऽवयवेषु स्यात् । १७ भा–सा–भाट्ट, १६ म–वि–शा–वृ–ल–चौ, १४ य.

१९ पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षः स्यात् । १८ भा–सा–भाट्ट, १७ म–वि–शा–वृ–ल–चौ, १५ य.

अधि० ४, ३ भाट्ट–सा–बिन्दुः.

२० तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् । १९ भा–सा–भाट्ट, १८ म–वि–शा–वृ–ल–चौ, ३ बिन्दुः.

२१ इष्टिरिति चैकवच्छ्रुतिः । २० भा–सा–भाट्ट, १९ म–वि–शा–वृ–ल–चौ, १७ य.

२२ अपिवा कर्मपृथक्त्वात् तेषां च तन्त्रविधानात् साङ्गानामुपदेशः स्यात् । २१ भा–सा–भाट्ट, २० म–वि–शा–वृ–ल–चौ, १८ य.

२३ प्रथमस्य वा कालवचनम् । २२ भा–सा–भाट्ट, २१ म–वि–शा–वृ–ल–चौ, १९ य.

२४ फलैकत्वादिष्टिशब्दो यथाऽन्यत्र । २३ भा–सा–भाट्ट, २२ म–वि–शा–वृ–ल–चौ, २० य.

अधि० ५, ४ भाट्ट–शा–बिन्दुः.

२५ वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् । २४ भा–सा–भाट्ट,

---

सू० १६ ( १ ) तेषां तन्त्र इति सर्वत्र । तेषां च तन्त्र इति भाटि । ' कुतः । कर्मपृथक्त्वात् । तेषां च तन्त्रविधानात् ' इति भाष्यात् चकार आवश्यकः सिध्यति । इदमेव सूत्रं पुनः द्वाविंशत्वेन पठितं, तत्र चकारः पठ्यत एव ।

सू० १८ ( १ ) तथा तदव इति भाटि- सा–भाट्ट–ल–चौ । ' यदा चैष न्यायस्तदा अवयवेषु इष्ट्याद्यवयवेषु ' इति भाष्यात्तु तदाऽवयवेषु इत्येव पाठः स्पष्टः ।

सू० १९ ( १ ) स्यात्–पदं नास्ति वृ ।

अधि० ४ अध्वरकल्पायां त्रिषु संघेषु अङ्गानां भेदेनानुष्ठानं इति म–वि–शा–बिन्दु–वृ–ल । आग्नावैष्णवाद्यङ्गानां भेदेनानुष्ठानं इति सा । अध्वरकल्पायां त्रिषु संघेषु अङ्गानां भेदः इति भाट्ट । अध्वरकल्पायां प्रातरादिकालभेदेनानुष्ठीयमानानां त्रयाणामर्थे भेदेनाङ्गानामनुष्ठानं इति भा ।

सू० २० ( १ ) कल्पेष्टौ वि इति भाटि–सा–भाट्ट–ल–चौ ।

सू० २२ ( १ ) अपिवा पृ इति ल । न वा कर्म इति वृ–टी । ( २ ) तेषां तन्त्र इति चौ ।

सू० २४ ( १ ) दिष्टिः शब्दो इति य ।

अधि० ५ वसाहोमानां भेदेनानुष्ठानं इति म । वसाहोमे भेदेनानुष्ठानं इति सा । एकदेवतेषु अनेकेषु पशुषु वसाहोमस्तन्त्रं इति सिध्दान्तः । तद्विरुद्धं तु शीर्षकद्वयमिदं ततस्त्याज्यम् । प्राजापत्यवसाहोमानां तन्त्रेणानुष्ठानं इति वि–शा–ल । प्राजापत्यवसाहोमानां तन्त्रं इति भाट्ट । वसाहोमस्य तन्त्रेणानुष्ठानं इति बिन्दुः । होमपदस्य बहुवचनं प्राचीनसंपादकैः स्वीकृतं बिन्दुसंपादकैः कुतस्त्यक्तमिति न ज्ञायते । बहुवचनमेव तु साधु । एकदेवताकपशुगणे वसाहोमस्य तन्त्रता इति भा । अत्र वसाशब्दस्य स्थाने वपाशब्दप्रयोगः साधीयान् । अत्र हि वसा वपैव ।

सू० २५ ( १ ) कदैव इति बिन्दुः । ( २ ) प्रधान इति वृ–पाठो न युक्तः ।

२३ म–वि–शा–वृ–ल–चौ, २१ य, ४ बिन्दुः.

अधि० ६, ५ भाट्ट–शा–बिन्दुः.

२६ कालभेदात् त्वावृत्तिर्देवताभेदे । २५ म–सा–भाट्ट, २४ म–वि–शा–वृ–ल–चौ, २२ य, ५ बिन्दुः.

अधि० ७, ६ सा–भाट्ट–शा–बिन्दुः.

२७ अन्ते यूपाहुतिस्तद्वत् । २६ भा– सा–भाट्ट, २५ म–वि–शा–वृ–ल–चौ, २३ य, ६ बिन्दुः.

२८ इतरप्रतिषेधो वा । २७ भा–सा–भाट्ट, २६ म–वि–शा–वृ–ल–चौ, २४ य.

२९ अनुवादमात्रमन्तिकस्य । २८ भा, २५ य.

३० अशास्त्रत्वाच्च देशानाम् । २९ भा, २८ सा–भाट्ट, २७ म–वि–शा–वृ–ल–शाचौ, २६ य.

अधि० ८, ७ सा–भाट्ट–शा–बिन्दुः.

३१ अवभृथे प्रधानेऽग्निविकारः स्यान्नहि तद्धेतुरग्निसंयोगो द्रव्यदेवतवत् । ३०–३१ भा, २९ सा–भाट्ट, २८–२९म–वि–शा–वृ–ल–चौ, २७ य, ७ बिन्दुः.

३२ साङ्गो वा प्रयोगवचनैकत्वात् । ३० भा–यभिन्ने, २८ य.

३३ लिङ्गदर्शनाच्च । ३१ म–सा–वि–भाट्ट–शा–वृ–ल–चौ, २९ य.

३४ शब्दविभागाच्च द्रव्यदेवतोऽपनयः । ३२ भा–यभिन्ने, ३० य.

---

अधि० ६ ऐकादशिनगतवसाहोमस्य भेदेनानुष्ठानं इति वि–शा–ल । ऐकादशिनगतवसाहोमानां न तन्त्रं इति भाट्ट । देवताभेदे वसाहोमानां भेदेनानुष्ठानं इति बिन्दु–वृ । भिन्नदेवताकपशुगणे वसाहोमस्यावृत्तिः इति भा ।

सू० २६ ( १ ) भेदे त्वावृ इति म–वि–लटि । भेदावृ इति शा । भेदाच्चावृ इति बिन्दुः । भेदत्वावावृ इति वृ ।

अधि० ७ यूपैकादशिन्यां तन्त्रेण युपाहुत्यनुष्ठानं इति म–वि–शा–वृ–ल । यूपाहुतेस्तन्त्रं इति सा । अपूर्णत्वादयुक्तमिदम् । यूपैकादशिन्यां यूपाहुतीनां तन्त्रं इति भाट्ट । यूपैकादशिन्यां तन्त्रेण यूपाहुतिः इति बिन्दुः । यूपैकादशिन्यां यूपाहुतीनां तन्त्रं इति भा ।

सू०२९ इदं सूत्रं बहुत्र नोपलभ्यते भाष्यपङ्क्तित्वेन तु उपलभ्यते इति भाटि । नास्तीदं सूत्रं म–सा–वि–भाट्ट–शा–वृ–ल–चौ । भा–यपुस्तकयोस्तु अस्ति । म–सा पुस्तकयोस्तु भाष्यपङ्क्तित्वेन मुद्रितम् ।

सू० ३० ( १ ) अशास्त्रवत्त्वाच्च देशानां इति भाटि–सा । अशास्त्रतत्त्वाद्देशानां इति भाट्ट । अशास्त्रगत्वाच्चदेशानां इति चौ । " न चान्तिकदेशाः शक्याः शासितुं आपेक्षिकत्वादन्तिकस्य " इति भाष्यात्तु अशास्त्रत्वाच्च देशानां इति सूत्रं सिध्यति ।

अधि० ८ साङ्गस्यावभृथस्याप्सु अनुष्ठानं इति भा–सा–भिन्ने । अवभृथ इति सा । अवभृथेऽप्सु साङ्गप्रधानानुष्ठानं इति भा ।

सू० ३१ ' अवभृथे–संयोगः ' इति भिन्नं सूत्रं, द्रव्यदेवतवत् इति च तदुत्तरं भिन्नं सूत्रं इति य–भिन्न सर्वत्र व्यवस्था । य–पुस्तके तु सूत्रद्वयं मिलित्वा एकमेव सूत्रम् । युक्तं चैतत् । नहि केवलदृष्टान्तप्रदर्शकं सूत्रं पृथक् भवितुमर्हति । अस्माभिस्तु य–पुस्तकपाठ एवानुसृतः । सा–पुस्तके भाष्यत्वेनैवेदं सूत्रं मुद्रितम् । ( १ ) देवतावत् इति ल ।

सू० ३४ ( १ ) च्च दे इति म–वि–शा–वृ–ल–चौ ( २ ) च्च देवतानयः इति भाटि–सा–भाट्ट । च्च द्रव्यदेवतापनय इति य । यद्यपि द्रव्यदेवतानपनयः इति वा देवतापनयः इत्येव वा पाठः बहुत्रोपलभ्यते । तथा च अनपनयः इति प्रायः सर्वत्र समानम् । य–पुस्तके तु अपनयः इत्येव पदम् । अत्राधिकरणे पूर्वपक्षस्तावत्, यथा एककपाल–रूपं द्रव्यं वरुणश्च देवता प्रधाने एव

अधि० ९, ८ सा-भाट्ट-शा-बिन्दुः.

३५ दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्, सर्वं विक्रियते। ३३ मा-यभिन्ने, ३१ य, ८ बिन्दुः.

३६ अचोदनेति चेत्। ३४ भा-य-भिन्ने, ३२ य.

३७ स्यात् पौर्णमासीवत्। ३५ भा-यभिन्ने, ३२ य.

३८ प्रयोगचोदनेति चेत्। ३६ भा-यभिन्ने, ३३ य.

३९ तथेह। ३७ म-वि-शा-वृ, ल, ३३ य.

४० आसादानमिति चेत्। ३८ भा-यभिन्ने, ३४ य.

४१ नोत्तरेणैकवाक्यत्वात्। ३९ भा-यभिन्ने, ३४ य.

४२ अवाच्यत्वाच्च। ४० भा-यभिन्ने, ३५ य.

४३ आम्नायवचनं तद्वत्। ४१ भा-यभिन्ने, ३६ य.

अधि० १०, ९ सा-भाट्ट-शा-बिन्दुः.

४४ कर्तृभेदस्तथेति चेत्। ४२ भा-यभिन्ने, ३७ य, ९ बिन्दुः.

४५ न समवायात्। ४३ भा-यभिन्ने, ३७य.

४६ लिङ्गदर्शनाच्च। ४४भा-यभिन्ने, ३८ य.

४७ वेदिसंयोगादिति चेत्। ४५ भा-यभिन्ने, ३९ य.

---

माङ्गेषु, तथा अप्स्ववभृथेन चरन्ति इति श्रुता आपोऽपि अङ्गेषु न ग्राह्याः इति। तत्र द्रव्यदेवतवत् अपामपि अङ्गेभ्यः अपनयः कर्तव्य इत्यंशे शब्दविभागाच्च० इति सूत्रेण सिद्धान्तिना उत्तरमुक्तम्। तत्र भाष्यं " विभक्तः शब्दः प्रधानस्य अवभृथ इति वाचकः, अङ्गानामाघारादयः शब्दाः अवभृथशब्दसंयुक्तं च द्रव्यदेवतं....तस्मान्न तत् अङ्गेषु भवति। आपस्तु प्रयोगाङ्गम्.... " अत्र शब्दविभागात् द्रव्यदेवताऽपनयो भवति अपां न तथा इति अपां अङ्गेभ्यो नापनयः इति प्रतिपादितम्। तेन द्रव्यदेवताऽपनयः इत्येव भाष्यसंमतः पाठः इति मन्यामहे।

अधि० ९ उत्तराङ्गानामनुष्ठानं इति म। वरुणप्रघासादिषु विहारः इति सा। अबोधकमिदं शीर्षकद्वयम्। वरुणप्रघासेषु आग्नेयादीनां मारुत्या भेदेनानुष्ठानं इति वि-भाट्ट-शा-ल। उत्तरदक्षिणविहारयोर्भेदेनाङ्गानुष्ठानं इति वृ। वरुणप्रघासेषु दक्षिणविहारे क्रियमाणमारुत्यर्थं पृथगङ्गानुष्ठानं इति भा।

सू० ३५ (१) दक्षिणाग्नौ इति शा। (२) सर्वं तन्त्रं विक्रियते इति भाटि-य। सर्वतन्त्रं विक्रियेत इति बिन्दुः। सर्वं क्रियते इति सा-भाट्ट-चौ। सू० ३२

सू० ३६ (१) चेदन्तमुत्तरेणैकं य।

सू० ३८ (१) चेदन्तमुत्तरेणैकं य।

सू० ३९ (१) अथेह इति म-वि-शा-शा-लपाठो न युक्तः। ' तथेह ' इत्यस्य स्थाने ' इहापि मारुत्याः प्रयोगश्चोद्यते ' इति सूत्रं पठितं भाट्ट-चौ। सा-पुस्तके तु ' तथेह ' इति अवतरणभाष्यत्वेन विलिख्य ' इहापि मारुत्याः प्रयोगश्चोद्यते ' इति च सूत्रत्वेन विलिख्य ' आसादयतीत्यनेन आख्यातेन ' इति भाष्यं लिखितम्। तदेतदयुक्तम्।

सू० ४० (१) चेदन्तमुत्तरेणैकं य।

सू० ४२ (१) चकारो नास्ति य-भिन्ने। ' अपि च ' इत्यवतरणभाष्यात्तु चकार आवश्यकः। तत्र संमतिश्च भाटि-य।

अधि० १० उत्तरदक्षिणविहारयोः कर्मभेदः इति म-वि-शा-बिन्दु-वृ-ल। अपूर्णं शीर्षकम्। कर्तृतन्त्रता इति सा। इदं तु निद्रितस्य प्रलपनम्। वरुणप्रघासेषु ब्रह्मादीनां न भेदः इति भाट्ट। आदिशब्देनाध्वर्योर्ग्रहणे अनिष्टापत्तिः। वरुणप्रघासेषु कर्तॄणां तन्त्रं इति भा। तत् किमध्वर्योरपि तन्त्रम्?। अध्वर्युभिन्नानां तु भवति तन्त्रम्।

सू० ४४ (१) चेदन्तमुत्तरेणैकं य।

सू० ४५ (१) चेदन्तमुत्तरेणैकं य।

४८ न देशमात्रत्वात् । ४६ भा–यभिन्ने, ३९ य.

अधि० ११, १० सा–भाट्ट–शा–बिन्दुः.

४९ एकाग्नित्वादपरेषु तन्त्रं स्यात् । ४८ सा–भाट्ट, ४७ म–वि–शा–वृ–ल–चौ, ४० य. १० बिन्दुः.

५० नाना वा कर्तृभेदात् । ४९ सा–भाट्ट, ४८ म–वि–शा–वृ–ल–चौ, ४१ य.

अधि० १२, ११ सा–भाट्ट–शा–बिन्दुः.

५१ पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत् तस्मात् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् । ५० सा–भाट्ट, ४९ म–वि–शा–वृ–ल–चौ–टुप् , ४२ य, ११ बिन्दुः.

५२ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् । ५१-५२ सा–भाट्ट, ५० म–वि–शा–वृ–ल–चौ–टुप् , ४३ य.

५३ वपानां चानभिघारणस्य दर्शनात् । ५१ म–वि–शा–वृ–ल–चौ–टुप् ४४ य.

अधि० १३, १२ सा–भाट्ट–शा–बिन्दुः.

५४ पञ्चशारदीयास्तथेति चेत् ५२ म–वि–शा–वृ–ल–चौ–टुप् , ४५ य, १२ बिन्दुः.

५५ न चोदनैकवाक्यत्वात् ५३ म–वि–शा–वृ–ल–चौ–टुप् , ४५ य.

---

सू० ४८ एतत्सूत्रोत्तरं 'एकवाक्यत्वात् । ७४' इति पृथक् सूत्रं सा–भाट्ट । तथा सति 'अप्रतिषिद्धत्वात्' इत्यपि सूत्रं स्वीकार्यम् । उभयमपि वा भाष्यग्रन्थत्वेन न स्वीकार्यम् । अर्धकुक्कुटी तु न युक्ता । उभयमपि सूत्रत्वेन स्वीकार्यमिति भाष्यात् सिध्यतीति मन्यामहे ।

अधि० ११ उत्तरदक्षिणविहारयोः आपराग्निकहोमानां भेदेनानुष्ठानं इति म–बिन्दु–वृ । अपराग्नितन्त्रताभावः इति सा । निरर्थकमिदं शीर्षकम् । उत्तर दक्षिणविहारयोः पत्नीसंयाजादीनां भेदेनानुष्ठानं इति वि–शा–ल । वरुणप्रघासेषु पत्नीसंयाजादीनां भेदः इति भाट्ट । आदिशब्दो व्यर्थोऽत्र । वरुणप्रघासेषु आपराग्निकानां पत्नीसंयाजानामावृत्तिः इति भा ।

सू० ४९ ( १ ) तन्त्रैः स्यात् इति म–वि–शा –ल–चौ ।

अधि० १२ वाजपेये ब्रह्मसाम्नि आलम्भस्य कर्मशेषप्रतिषेधार्थत्वं इति म–बिन्दु–वृ । पर्यग्निकृतोत्सर्गः इति सा–शीर्षकं बालप्रलपनमात्रम् । वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाले उत्कर्षः इति वि–शा–ल । वाजपेये ब्रह्मसामकाले आलम्भोत्कर्षः इति भाट्ट–शीर्षकं अपूर्णार्थकम् । ब्रह्मसामकाले प्राजापत्यानां पशूनां आलम्भोत्कर्षमात्रविधानं इति भा ।

सू० ५२ वाक्यैकत्वे क्रतुसामान्यात् इति अंशं प्रकृतसूत्रावयवत्वेन स्वीकृत्य पुनःस्वतन्त्रसूत्रत्वेनापि तस्यैव निवेशः कृतः सा–भाट्टयोः । सूत्राङ्कश्च वर्धित एवेति क्रमप्राप्तम् । तदिदं सर्वमशुद्धम् ।

सू० ५३ ( १ ) वपायां चा इति वृ । वपानां वान इति टी । वपानां चाभि इति टुप् ।

अधि० १३ अहीने उक्ष्णामुत्सर्गस्य कर्मशेषप्रतिषेधार्थता इति म–वि–शा–बिन्दु–वृ–ल । अहीने इति अहीनसामान्यबोधकपदनिवेशो विरुद्धः । पञ्चशारदीयः इति सा । पञ्चशारदीये उक्ष्णां नालम्भोत्कर्षः इति भाट्ट । यदि आलम्भस्योत्कर्षो न कर्तव्यः तर्हि किं सद्य एवालम्भः कर्तव्य इति मतं संपादकानां ? । अधिकरणार्थमज्ञात्वैव शीर्षकं संपादितं संपादकैः । पञ्चशारदीये उक्षवाक्ये कर्मशेषप्रतिषेधविधानेन प्रतिसंवत्सरं भिन्नानामेवोक्ष्णामानयनं इति भा । प्रतिषेधविधानेन इति वा प्रतिषेधेन इत्येव वा ? किं युक्तम् ?

सू० ५४ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० ५५ एतत्सूत्रोत्तरं 'यात्

५६ संस्काराणां च दर्शनात्। ५७ सा–भाट्ट, ५४ म–वि–शा–वृ–ल–चौ, ४६ य.

अधि० १४, १३ सा–भाट्ट–शा–बिन्दुः.

५७ दशपेये क्रयप्रतिकर्षात् प्रतिकर्षस्ततः प्राचां तत् समानं तन्त्रं स्यात्। ५८ सा–भाट्ट, ५५ म–वि–शा–वृ–ल–चौ, ४७ य, १३ बिन्दुः.

५८ समानवचनं तद्वत्। ५९ सा–भाट्ट, ५६ म–वि–शा–वृ–ल–चौ, ४८ य.

५९ अप्रतिकर्षो वाऽर्थहेतुत्वात् सहत्वं विधीयते। ६० सा–भाट्ट, ५७ म–वि–शा–वृ–ल–चौ, ४९ य.

६० पूर्वस्मिंश्चावभृथस्य दर्शनात्। ६१ सा–भाट्ट, ५८ म–वि–शा–वृ–ल–चौ, ५० य.

६१ दीक्षाणां चोत्तरस्य। ५९ म–वि–शा–वृ–ल–चौ, ५१ य.

६२ समानः कालसामान्यात्। ६० म–वि शा–वृ–ल–चौ, ५२ य.

अधि० १५, १४ सा–भाट्ट–शा–बिन्दुः.

६३ निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात्। ६१ म वि–शा–वृ–ल–चौ–टुप्, ५३य, १४ बिन्दुः.

६४ अपनयो वा प्रसिद्धेनाभिसंयोगात्। ६२ म–वि–शा–वृ–ल–चौ,–टुप्, ५४ य.

६५ प्रतिपत्तिरिति चेत्। ६३ म–वि–शा–वृ–ल–चौ, ५५ य.

६६ न कर्मसंयोगात्। ६३ म–वि–शा–वृ–ल–चौ ५५ य.

अधि० १६, १५ सा–भाट्ट–शा–बिन्दुः.

---

इति सूत्रत्वेन मुद्रितं सा– भाट्टयोः। तदयुक्तम्। 'न चोत्सृष्टानां कर्मान्तरे उपयोगो युज्यते असत्त्वात् यातयामत्वाच्च' इति हि भाष्यपङ्क्तिः।

सू० ५६ (१) च तद्दर्श इति सा–भाट्ट–चौ। तच्छब्दोऽयं व्यर्थः।

अधि० १४ अभिषेचनीयदशपेययोर्भेदेन प्रयोगः इति म–बिन्दुः। दशपेय इति सा। दशपेयाभिषेचनीययोर्भेदेन प्रयोगः इति वि–शा–वृ–ल। 'सह सोमौ क्रीणात्यभिषेचनीयदशपेययोः इति श्रूयते' इति विस्तरमूलेऽनुसर्तव्ये अल्पाच्तरं इति न्यायेन दशपेयशब्दस्य पूर्वनिपातमन्याय्यं मन्यामहे। राजसूये दशपेयाभिषेचनीययोर्न तन्त्रं इति भाट्ट। 'ताविमौ अभिषेचनीयदशपेयौ समानतन्त्रौ भिन्नतन्त्रौ वेति चिन्तायां' इति भाट्ट–मूलम्। अभिषेचनीयदशपेययोर्भिन्नतन्त्रता इति भा।

सू० ५७ (१) तस्मात् समानं तन्त्रं इति बिन्दुः। तस्मात् समानतन्त्रं इति भाटि–य।

सू० ५९ (१) अप्रक इति चौ–पाठो न युक्तः। (२) सहत्वं विधीयते इत्यंशः सूत्रांश एव सन् अनवधानात् भाष्यत्वेनैव मुद्रितः सा–संपादकैः। तदयुक्तम्। अयमंशो नास्त्येव भाटि–भाट्ट। तदप्ययुक्तमेव, भाष्ये व्याख्यातत्वात्।

सू० ६१ इदं सूत्रं सा–पुस्तके भाष्यत्वेन मुद्रयित्वा तद्व्याख्याऽपि पुनस्तथैव मुद्रिता। तदनवधानात्। इदं सूत्रं नास्ति भाट्टे। तदयुक्तम्।

अधि० १५ वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति इत्यस्य कर्मान्तरोपदेशत्वं इति म–बिन्दु–वृ। वरुणप्रघासे अवभृथः इति सा। वारुणीनिष्कासावभृथस्यार्थकर्मता इति वि–शा–ल। वारुणीनिष्कासतुषप्रचारस्यार्थकर्मता इति भाट्ट। वरुणप्रघासेषु अवभृथधर्मान्तरविधानं इति भा।

सू ६५ (१) चेदन्तमुत्तरेणैकं सर्वत्र। वार्तिकोक्तसूत्रकारशैल्या तु चेदन्तं पृथक् 'न कर्मसंयोगात्' इति च पृथक् कर्तव्यम्। य–पुस्तकस्थशैल्या तु चेदन्तमुत्तरेणैकम्।

अधि० १६ प्रायणीयनिष्कासे उदयनीयनिर्वापस्यार्थकर्मत्वं इति म–बिन्दुः। उदयनीय इति सा। प्रायणीयनिष्कासे उदयनीयनिर्वापस्य संस्कारकर्मता

६७ उदयनीये च तद्वत् । ६६ भा-सा-भाट्ट, ६४ म-वि-शा-वृ-ल-चौ, ५६ य, १५ बिन्दुः.

६८ प्रतिपत्तिर्वाऽकर्मसंयोगात् । ६७ भा-सा-भाट्ट, ६५ म-वि-शा-वृ-ल-चौ, ५७ य.

६९ अर्थकर्म वा शेषत्वाच्छ्रयणवत् तदर्थेन विधानात् । ६८ भा-सा-भाट्ट, ६६ म-वि-शा-वृ-ल-चौ, ५८ य.

पादेऽस्मिन् षोडश न्याया मुनिना संप्रकीर्तिताः ॥

एकदेश कालभेदात् वसाहोमो दक्षिणे नाना दीक्षाणामष्टपञ्चाशत् ॥

॥ इत्येकादशाध्यायस्य द्वितीयः पादः ॥

* * * *

॥ अथैकादशाध्यायस्य तृतीयः पादः ॥

अधि० १.

१ अङ्गानां मुख्यकालत्वाद् वचनादन्यकालत्वम् ।

अधि० २.

२ द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् स्वकालत्वात् ।

अधि० ३.

३ यूपश्चाकर्मकालत्वात् ।

४ एकयूपं च दर्शयति ।

अधि० ४.

---

इति वि-शा-वृ-ल । प्रायणीयनिष्कासे उदयनीयनिष्कासस्य संस्कारकर्मता इति भाट्ट । अत्र निष्कासस्य इत्यशुद्धं, निर्वापस्येति वक्तव्यम् । निष्कासनिर्वापौ अत्यन्तभिन्नौ । प्रायणीयनिष्कासस्य उदयनीयनिर्वापार्थत्वं इति भा ।

सू० ६७ ( १ ) प्रायणीये च तद्वत् इति वृ-सूत्रं वृ-मूलं च । तच्च उत्तरसूत्रस्थमूलविरुद्धम् । ' प्रायणीयाशेषप्रतिपत्तिः उदयनीयानिर्वापः ' इति हि उत्तरसूत्रस्थं वृ-मूलम् ।

सू० ६९ ( १ ) च्छ्रपण इति वृ-ल सूत्रम् । वृ-मूलं तु श्रयणवत् श्रपणवत् इति वा कमपि पाठं नैव स्पृशति । भाष्यं तु ' तद्यथा पयसा मैत्रावरुणं श्रीणाति धानाभिर्हारियोजनं इति श्रयणैः सोमस्य ' इति । तेन वृ-लपाठो न युक्तः ।

अधि० १ वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यता इति म-वि-शा-बिन्दु-वृ । वेद्याद्यङ्गानां प्रधानकालाद्यन्यकालत्वादि इति सा । अत्र द्वितीयतृतीयौ आदिशब्दौ निरर्थकौ । वेद्याद्यङ्गानामन्यकालकर्तव्यत्वं इति भाट्ट । अत्र कस्मात्कालादन्यकाले इत्यनुक्तत्वान्न्यूनार्थता । वेद्याद्यङ्गानां प्रधानान्यकालकर्तव्यता इति ल । वचनेनाङ्गप्रधानयोर्भिन्नकालकत्वादि इति भा ।

अधि० २ आधानस्य तन्त्रेणानुष्ठानं इति म-वि-वृ-ल । आधानादेस्तन्त्रता इति सा । आधानं तन्त्रेणानुष्ठेयं इति भाट्ट । आधानस्य तन्त्रता इति भा । आधानस्य इष्ट्यादिसर्वकर्मार्थता इति वक्तुं युक्तम् ।

सू० २ ( १ ) स्य कर्म इति सा-भाट्ट-चौ । स्याकर्म इति बिन्दु-वृ-ल-य । अयं शुद्धः पाठः, पूर्वस्त्वशुद्धः ।

अधि० ३ अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानं इति म-वि-शा-बिन्दु-वृ-ल । अग्नीषोमीयादिपशौ यूपतन्त्रता इति सा । पशौ इत्येकवचनमयुक्तम् । ज्योतिष्टोमे त्रयाणां पशूनामर्थे यूपस्य तन्त्रता इति भा-शीर्षकमेव साधु, नेतरत् ।

सू० ४ नास्तीदं सूत्रं वृ ।

अधि० ४ यूपसंस्काराणां तन्त्रेणानुष्ठानं इति म-वि-शा-बिन्दु-वृ-ल । यूपसंस्कारतन्त्रता इति सा । यूपसंस्कारस्तन्त्रेणानुष्ठेयः इति भाट्ट । यूपसंस्काराणां तन्त्रता इति भा । पशुत्रयार्थं यूपसंस्काराणां तन्त्रता इति तु शीर्षकं युक्तम् । एकपशुके हि यूपे तन्त्रतानिर्णयप्रसङ्ग एव नास्ति ।

५ संस्कारास्त्वावर्तेरनर्थकालत्वात् । ४ बिन्दु–वृ ।

६ तत्कालास्तु यूपकर्मत्वात्, तस्य धर्मविधानात्, सर्वार्थानां च वचनादन्यकालत्वम् । ५ वृ.

७ सकृन्मानं च दर्शयति । ६ वृ.

८ आनन्तर्यार्थमिति चेत् ।

९ न प्रकृतितः सिद्धत्वात् ।

अधि० ५.

१० स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् । ८ बिन्दुभिन्ने, ७ वृ, ५ बिन्दुः.

११ साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् । ९ वृ–भिन्ने, ८ वृ.

१२ सोमान्ते च प्रतिपत्तिदर्शनात् । १० वृ–भिन्ने. ९ वृ.

१३ तत्कालो वा प्रस्तरवत् । ११ सा–भाट्ट–वृभिन्ने १० वृ.

१४ न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा । १२ सा–भाट्ट–वृभिन्ने, ११ सा–भाट्ट–वृ.

अधि० ६.

१५ अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्ते प्रथमे वाऽहनि विकल्पः स्यात् । १३ सा–भाट्ट–वृभिन्ने, १२ सा–भाट्ट–वृ, ६ बिन्दुः.

१६ पाणेस्त्वश्रुतिभूतत्वाद् विषाणानियमः स्यात् प्रातःसवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् । १४ सा–भाट्ट–वृभिन्ने, १३ सा–भाट्ट–वृ.

---

सू० ६ (१) तत्कालस्तु इति सा–भाट्ट–चौ । तत्कालशब्दस्य बहुवचनमेव युक्तं, संस्काराः इति विशेष्यस्य बहुवननान्तत्वात् । (२) नां व इति वृ–य । भाष्ये तु 'सर्वार्थानां च सतां वचनात् केषां चिदन्यकालत्वं कृतम्' इति चकारः पठ्यते ।

सू० ८–९ सप्तमसूत्रभाष्ये पठिते सप्तमसूत्रव्याख्यासमाप्त्यनन्तरं इदं वाक्यद्वयं पठ्यमानं दृश्यते । ततः 'परं तस्मादपि तन्त्रं संस्काराः' इति वाक्यं च पठ्यते । तच्च वाक्यद्वयं सूत्रद्वयमेव स्यात् इति निर्धार्यते । सुज्ञेयार्थत्वात्तु तद्–व्याख्या न प्राणायि भाष्यकारैः । सूत्रद्वयसाध्योऽर्थस्तु उपसंहृत एव । भाष्यादिस्थितसूत्राङ्केभ्यस्तु द्वाभ्यां वर्धिता भवेदस्मत्सूत्राङ्कसंख्या ।

अधि० ५ स्वरोः साधारण्यं इति म–बिन्दु–वृ । स्वरुतन्त्रता इति इति सा–भा । स्वरोस्तन्त्रेणानुष्ठानं इति वि–भाट्ट–शा–ल । पशुत्रयार्थं स्वरोस्तन्त्रता इति तु वक्तव्यम् ।

सू० ११ (१) साधारणे वा इति भाट्ट–चौ । (२) वा यदनु इति य । भाष्ये तु यच्छब्दो न दृश्यते ।

सू० १३ नास्तीदं सूत्रं भाटि–सा–भाट्ट । तत्र सा–पुस्तके विद्यमानमपीदं सूत्रं भाष्यत्वेन मुद्रितं न सूत्रत्वेन । तदयुक्तम् ।

सू० १४ (१) न चोत्प इति सा–भाट्ट–चौ । (२) प्रदेशात् प्रस्तरे तथा इति पृथग्वा सूत्रं स्यात् पूर्वेणैकं वेति संशयोऽस्माकम् ।

अधि० ६ द्वादशाहे कृष्णविषाणाप्रासनस्यान्त्याहे एव कर्तव्यत्वं इति म–वृ । कृष्णविषाणाप्रासनं इति सा । अहर्गणे कृष्णविषाणाप्रासनस्यान्त्याहनियमः इति वि–भाट्ट–शा–ल । द्वादशाहे अन्त्याह एव कृष्णविषाणाप्रासनं इति बिन्दुः । अहर्गणे अन्त्यदिन एव कृष्णविषाणायाः प्रासनं इति भा । द्वादशाहो यद्यपि अहर्गण एव तथापि त्र्यहचतुरहादयोऽपि सन्ति भूयांसोऽहर्गणाः । तेषु च सर्वेष्वेव अन्त्येऽहनि विषाणाप्रासनं इति सिद्धान्तः । तस्मात् द्वादशाहे इत्यस्य स्थाने अहर्गणे इत्येव वक्तव्यम् । अत एव सूत्रे अहर्गणे इत्येवोक्तं न द्वादशाहे इति ।

सू० १५ (१) दन्त्ये प्र इति म–वि–शा–वृ–ल । दप्र इति बिन्दु–य । (२) मेऽहनि वा वि इति वृ ।

सू० १६ (१) शिष्टे चाभिप्रवृत्तत्वात् इत्यंशः

अधि० ७, ६ म.

१७ वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् । १५ बिन्दु–वृभिन्ने, १४ वृ, ७ बिन्दुः.

अधि० ८, ७ म.

१८ पशौ च सपुरोडाशे समानतन्त्रं भवेत् । १६ सा–भाट्ट–वृ–बिन्दुभिन्ने, १७ सा –भाट्ट, १५ वृ, ८ बिन्दुः.

अधि० ९, ८ म.

१९ अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात् सर्वापवर्गे विमोकः स्यात् । १७ भा –वि–शा–चौ–य , १६ वृ, ९ बिन्दुः.

---

पूर्वसूत्रांशत्वेन संगृहीतः सन् पुनः स एवांशः पृथक्सूत्रत्वेनापि संगृहीतः सा–भाट्टयोः । तदयुक्तम् । शिष्टं चा इति चौ ।

अधि० ७ राजसूये अन्त्ये एव हविष्कृत्काले वाग्विसर्गः इति म–बिन्दु–वृ । अयुक्तमिदम् । नहि सर्वत्र राजसूये एवं सिद्धान्तयितुं शक्यते । राजसूयान्तर्गतनानाबीजेष्टौ एव निर्णयापेक्षणात् । वाग्विसर्गः इति सा । राजसूये नानाबीजेषु वाग्विसर्गस्य चरमकालनियमः इति वि–शा–ल । नानाबीजेषु वाग्विसर्गस्य चरमकालनियमः इति भाट्ट । नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गः इति भा । भा–भिन्नशीर्षकेषु चरमकालनियम इति यदुक्तं तद् भ्रान्तिकरम् । इष्टेश्चरमकालो हि ' ब्राह्मणान् भोजयितवै ' इति संकल्पकाल एव स्यात् । तच्चानिष्टम् ।

सू० १७ ( १ ) सर्गे ह इति भाट्ट–पाठो न ग्राह्यः । ( २ ) बीजभेदे इति बकारस्थाने वकारो मुद्रितः । उत्तरदेशनिवासिनो हि प्रायः वकारस्थाने बकारमुच्चरन्ति । अत्र तु तद्वैपरीत्यं संपादितमिति विशेषः । ( ३ ) एतत्सूत्रोत्तरं ' तथाऽऽह्वानमपीति चेत् ' इति सूत्रत्वेन मुद्रितं सा–पुस्तके । तत्र तथा–शब्दस्थाने यथा इति विपरिवर्तितम् । इदं सूत्रं किल ३।४।५ इत्यत्र वर्तते । तच्चात्र भाष्यकारेण प्रकृताधारतया अनूदितम् । परंतु ' न कालविधिश्चोदितत्वात् ३।४।६ इति द्वितीयसूत्रमपि अनूदितमेव भाष्यकारेण । तत्तु सा–पुस्तके कृष्णमोष्याक्षरैरेव भाष्यत्वेन मुद्रितम् । इत्यहो निद्रापारवश्यमस्थाने महतामपि ।

अधि० ८ अग्नीषोमीये पौरोडाशिककाले एव वाग्विसर्गः इति म–वि–शा–बिन्दु–वृ–ल । पौरोडाशिककाले इति सामान्योक्तिरयुक्ताऽत्र । पशुपुरोडाशयोस्तन्त्रता इति सा–शीर्षकं तु निद्राप्रलपनमेव । अग्निष्टोमे पौरोडाशिककाल एव वाग्विसर्ग इति भाट्ट । इदमपि निद्राप्रलपनमेव । पाशुकवाग्यमस्य पौरोडाशिकहविष्कृदाह्वानकाले विसर्गः इति भा ।

सू० १८ ( १ ) च पु इति सा–वि–भाट्ट–शा–वृ–ल–चौ । पशौ च पुरोडाशे च समा इति बिन्दु–य । अत्र भा–पुस्तके 'स पुरोडाशे' इति च्छित्त्वा मुद्रितम् । पुरोडाशेन सहिते सपुरोडाशे पशौ समानतन्त्रं इति तु भाष्यमूलार्थः । तथा च च्छित्त्वा मुद्रणमयुक्तम् ।

अधि० ९ अग्निचयने अग्निविमोकस्य प्रधानापवर्गकालता इति म–बिन्दुः । अग्नियोगः इति सा । अग्निविमोकोऽपि प्रतिपादितोऽत्रेति सा–शीर्षकं न्यूनार्थकम् । अग्निचयने अग्निविमोकस्य मतभेदे व्यवस्था इति अधिकरणादौ वि । मतभेदे इति सप्तमीस्थाने तृतीया प्रयोक्तव्या । अग्निचयने अग्निविमोकस्य मतभेदेन व्यवस्था इति वि ( अनुक्रमण्यां ) शा–ल । चयने अग्निविमोकस्य मतभेदेन व्यवस्था इति भाट्ट । अग्निचयने अग्निविमोकस्य प्रधानापवर्गकालत्वं इति वृ । चयने प्रधानानन्तरमेव अग्निविमोकः इति भा ।

सू० १९ (१) अग्निसंयोगः इति वृ । योगशब्द एवात्र रूढो न संयोगशब्दः । ( २ ) परेषु इत्यत्र परेषां इति टी । तस्मात् कर्माप इति बिन्दुः । तस्मात् सर्गे इति टी । सर्वे पाठा इमे न ग्राह्याः

२० प्रधानापवर्गे वा तदर्थत्वात् । १८ सा-भाट्ट-वृभिन्ने, १९ सा-भाट्ट, १७ वृ.

२१ अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् । १९ सा-भाट्ट-वृभिन्ने, २० सा-भाट्ट, १८ वृ.

२२ अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् । २० सा-भाट्ट-वृभिन्ने, २१ सा-भाट्ट, १९ वृ.

अधि० १०, ९ म.

२३ सुब्रह्मण्या तु तन्त्रं स्याद् दीक्षावदन्यकालत्वात् । २१ सा-भाट्ट-वृभिन्ने, २२ सा-भाट्ट, २० वृ, १० बिन्दुः.

अधि० ११,

२४ तत्काला त्वावर्तेत प्रयोगतो विशेषसंयोगात् । २२ सा-भाट्ट-वृभिन्ने. २३ सा-भाट्ट, २१ वृ, ११ बिन्दुः

२५ अप्रयोगाङ्गमिति चेत् । २३ सा-भाट्ट वृभिन्ने, २४ सा-भाट्ट, २२ वृ.

२६ स्यात् प्रयोगनिर्देशात् कर्तृभेदवत् । २४ सा-भाट्ट-वृभिन्ने, २५ सा-भाट्ट, २३ वृ-य.

२७ तद्भूतस्थानादग्निवदिति चेत् तदपवर्गस्तदर्थत्वात् । २५ सा-भाट्ट-वृ-यभिन्ने, २६ सा-भाट्ट, २४ वृ-य.

२८ अग्निवदिति चेत् । २६ सा-भाट्ट-वृ-यभिन्ने, २७ सा-भाट्ट, २५ वृ-य.

२९ न प्रयोगसाधारण्यात् । २७ सा-भाट्ट-वृ-यभिन्ने, २८ सा-भाट्ट, २६ वृ २५य.

३० लिङ्गदर्शनाच्च । २८ सा-भाट्ट-वृ-यभिन्ने, २९ सा-भाट्ट, २७ वृ, २६ य.

---

( १ ) एतस्य सूत्रस्य स्थाने ' अङ्गप्रधानार्थो योगः सर्वापवर्गे च विमोकः स्यात्' इति सूत्रं भाट्टे। तदेतत् सा-पुस्तकानुसरणमात्रम् । सा-पुस्तके च ' अभियोगः सोमकाले' इत्यादि सर्वं सूत्रं भाष्यत्वेन कृशाक्षरैर्मुद्रयित्वा ' अङ्गप्रधानार्थो योगः ' इत्यादि भाष्यं सूत्रत्वेन मुद्रितम् । तदिदं सर्वं निद्रापरवशताया एव लक्षणम्

अधि० १० उपह्वानस्य भेदेनानुष्ठानं इति म । न्यूनार्थकतया दुष्टमिदम् । सुब्रह्मणाह्वानं इति सा । उपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रेणानुष्ठानं इति बि-शा-वृ-ल । उपसत्कालीनसुब्रह्मण्याह्वानं तन्त्रेणानुष्ठेयं इति भाट्ट । उपसत्कालस्य सुब्रह्मण्याह्वानस्याहर्गणेषु तन्त्रं इति बिन्दुः । अहर्गणे उपसत्कालीनसुब्रह्मण्याह्वानं तन्त्रं इति भा ।

सू०२३ (१) अत्र 'तन्त्रं स्यात्' इति स्यात्पदं क्वापि पुस्तके नास्ति । भाष्यमूले तु विद्यते ।

अधि० ११ इदमधिकरणं दशमाधिकरणे एवान्तर्भावितं म-सा । भाष्यमूलेऽपि अत्राधिकरणे विषयसंशयपूर्वपक्षा नैवोपन्यस्ताः । तेन भाष्यमतेनापि म-सावदेव सिध्यति । भा-संपादकैस्तु एकादशाधिकरणत्वेन प्रदर्शितमेतत् । वि-भाट्ट-शादावपि पृथगेवाधिकरणं प्रदर्शितम् ।

सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानं इति वि-शा-ल । सुत्याकालीनसुब्रह्मण्याह्वानं न तन्त्रेण इति भाट्ट । सुत्याकालिकस्य सुब्रह्मण्याह्वानस्य भेदेनानुष्ठानं इति बिन्दु-वृ । अहर्गणे सुत्याकालीनसुब्रह्मण्याह्वानस्यावृत्तिः इति भा ।

सू० २४ ( १ ) तत्कालत्वादाव इति सा-भाट्ट बिन्दु-चौ । ( २ ) संबन्धात् इति म-वि-चौ । तत्कालात् त्वाव इति ल ।

सू० २५ ( १ ) चेदन्तमुत्तरेणैकं य ।

सू० २६ ( १ ) स्यात् इति पदं नास्ति सा-भाट्ट-चौ ।

सू० २७ ( १ ) चेदप इति वृ- सूत्रे । वृ-मूले तु चेत्तदप इत्येव ।

सू० २८ ( १ ) चेदन्तमुत्तरेणैकं य ।

